THE

CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 285.

# क्रोडपत्रसंग्रहः।

अत्र

श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि
अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्याः
व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशि-
कायाः कुसुमाञ्जलेश्च क्रोडपत्राणि।

# KRODAPATTRASANGRAHA

or Critical Notes

On Anumânajâgadîsî, Prâtyakshânumânagâdâdharî, Pratyakshánumánamáthurî, Vyutpattiváda, Ŝaktiváda, Muktivâda, Ŝabdasaktiprakásiká and Kusumánjalî

By Kàlisankara Siddhànta Vàgîsa.

Edited by

Mahamahopadhyaya Vindhyesvariprasada Dvivedin,
LATE LIBRARIAN GOVT SANSKRIT COLLEGE, BENARES, AND
Nyâyâchârya Vámácharana Bhattâchârya,
Professor, Govt. Sanskrit College, Benares,
and P. Dhundiraj Shàstri, N. U., K. T.

VOL II. FASCICULUS I-१

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1921.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२८५

अथ श्रीकृष्णभट्टविरचितम् । (अलैकमालम्)

# प्रामाण्यवादगादाधरीक्रोडपत्रम् ।

श्रीगणेशाय नमः ॥

हरिपादौ नमस्कृत्य कृष्णो नारायणानुजः ।
विवृणोत्यध्यक्षटीकां गदाधरपदाश्रयाम् ॥ १ ॥
प्रत्यक्षदीधितिप्रौढिप्रौढे गादाधरे मते ॥
प्रचारेच्छोराङ्गनोर्थेः साहसं क्षम्यतां बुधाः ॥ २ ॥

मूले अथेति । अत्र प्रमाणतत्त्वं विविच्यते इति योजना । अथ मङ्गलस्य कारणतानिरूपणानन्तरम् । *अत्र* कर्त्तव्यग्रन्थे । प्रतिपाद्यत्वं सप्तम्यर्थः तस्य प्रमाणतत्त्वेऽन्वयः । तस्य विविच्यते इत्यत्र धात्वर्थविवेचनघटकबोधेऽन्वयः । मयेत्यध्याहृतस्य गङ्गेशमिश्रेणेत्यर्थः । कृतिजन्यत्वं तृतीयार्थः तस्य धात्वर्थे विवेचनेऽन्वयः । विवेचनं परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम्, व्यवस्थापनञ्च प्रमाणवत्तया बोधनम् बोधद्वारकं विषयत्वं कर्मलकारार्थः । प्रमाणतत्त्वमिन्द्रियादिचतुष्कत्वसमनियतप्रमितिकरणत्वम् । तथा च गङ्गेशमिश्रवृत्तिकृतिजन्यतादृशस्वमतकथनविषयो निरुक्तं प्रमाणतत्त्वमिति वाक्यार्थः । परमकारुणिकः परैकविंशतिदुःखप्रहरणेच्छा उद्दिधीर्षा तदुपायेच्छा करुणा । सा च परमा सफला शास्त्रार्थज्ञानद्वारा मुक्तिसम्पादकत्वात् । स्थानं प्रभेदः । तथा चोक्तम् ।

अङ्गानि वेदाश्चत्वारो मीमांसा न्याय एव च ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं च विज्ञेयं विद्या ह्यष्टादशैव तु ॥ इति ।

एतद्विशेषणेन अध्ययनधर्मलाभः । दुःखस्य पङ्कसादृश्यकथनं

तदनुभवधाराचन उच्चारबाधशङ्कावारणाय । गादाधर्यां नत्वेति । श्रीकृष्णाङ्घ्रिनमस्कारोत्तरकालीनगुरूच्चारितवाक्यार्थस्मरणोत्तरकालीनस्य दीधितिकृत्कर्तृकं यत्प्रत्यक्षचिन्तामणिविवरणं तद्विवरणस्य कर्त्ता गदाधर इति श्लोकार्थः । स्वविवरणे तार्किकसमवेतसुखजनकत्वान्वयः । गुर्विति । न च विनायकस्तवपाठादेः पृथग्विघ्नध्वंसहेतुत्वेपि गुरुपदोच्चारणस्य तथात्वमप्रमाणमिति वाच्यम् तदधीनस्वोत्कृष्टत्वज्ञानस्य मङ्गलत्वात् तस्यायुर्घृतमितिवन्मङ्गलत्वम् । *तदुत्कर्षम्* अर्थस्येतरापरिशीलितत्वादिना सम्बन्धसम्पादनम् तत्सम्पत्तिप्रयोजकव्यापारः कर्त्तोऽकजर्थः । स च प्रकृते आश्रयमात्रम् । एवमग्रेपि । *तत्सहकारित्वं* गुरुवाक्यसहकारित्वम् । गुरुवाक्यजन्यशाब्दबोधस्यातीतत्वेन विवरणनिर्माणेऽनुपयोगाद्व्याचष्टे सहकारित्वं चेति* । परम्परया* संस्कारद्वारा । *फलं* स्मरणम् । यद्यपि मनोनिष्ठतादृशसहकारितानिर्वाहकव्यापारोत्तरत्वं विवरणनिर्माणे लभ्यते तथाप्युपयोगित्वान्तेनोपयोगितावच्छेदकीभूतसंस्कारविशेषसाहित्यं लभ्यत इति तदधीनार्थनिश्चयस्यैवोपयोगित्वमभिप्रेत्याह तथाचेति । संस्कार उद्बुद्धः । मनसेत्यस्य निश्चयेऽन्वयः । तादृशमनोजन्यार्थनिश्चयः स्मृतिर्मानसबोधो वा । सभ्रीचीनत्वरूपविशेषणं तु अर्थे व्यञ्जनिकाविशेषणलाभार्थम् । तच्चार्थमनसोरसम्बन्धे न लभेतातः सम्बन्धव्यत्वमुक्तम् । सम्बन्धश्च संस्कारोऽनुसन्धानं वा । वस्तुतो निबद्धव्यमिति पाठः । सम्बद्धव्यमित्यस्य स एव चाऽर्थः । परिशीलनं सम्यग्ज्ञानम् तच्च शास्त्रे तनूनामप्यर्थानां पोषणस्य पुष्टानां च तानवस्य । एवं च मिश्रप्रभृतीनां तादृशसंस्कारानुद्बोधात्परिशीलने वैपरीत्यमिति सूचितम् । अश्रद्धार्थतात्पर्यव्यतिरेकेण तात्पर्यविषयत्वं व्यङ्ग्यत्वम् । तदुत्कर्षान्तरमाह सिद्धान्तेति । संशयादपि दुःखं जायते । सन्तापसन्तानोपशान्तेः सरोदर्शनाद्यद्वारकत्वादवगाहनेनेति । शान्तत्वेपि सरःसादृश्यं दुःखध्वंसहेतुतया । सरसि अन्तः प्रवेशो द्वारम् । दार्ष्टान्तिके तदाह स चेति । निगूढत्वम् इतरापरिशीलितत्वम् । तत्त्वाकलनं सिद्धान्तितार्थतावच्छेदकप्रकारकप्रमा । एतेन मिश्रप्रभृतीनामर्थवर्णने सिद्धान्तविरोधो व्यञ्जितः । विधानं व्यापारः । दृष्टान्ते कृतिः दार्ष्टान्तिके तदन्यः । यद्यपि सरोरूपसिद्धान्त-

विशेष्यकताद्दशार्थतावच्छेदकप्रमारूपान्तःप्रवेशानुकूलव्यापारोत्तरकालीनत्वमर्थः तथापि वाक्यार्थज्ञानस्यैव वाक्यप्रयोगोपयोगित्वात्तथाविधान्तःप्रवेशानन्तर्यमाह तदवगाह्येति । अर्थसङ्क्षेपे न्यूनतेत्यतः सङ्क्षिप्तेत्यकोति । प्रसिद्धमणेर्नाम किरणो तन्नाम ग्रन्थस्येति । अर्थे षष्ठ्यर्थान्वयः । प्रकाशान्वयि ज्ञानजन्यत्वं वा षष्ठ्यर्थः । एकवाक्यतानभिज्ञानां न स्वतो दुरूहचिन्तामणिग्रन्थतत्त्वार्थज्ञानसम्भव इत्यतो विवरणेति । तत्समानार्थकऋजुशब्दप्रयोगो विवरणम् । सम्बन्धे तृतीयार्थाधीनत्वान्वयः । करोति व्यापारो धात्वर्थः चिन्तामणिग्रन्थतत्त्वार्थबोधो योऽल्पतरजनसम्बद्धस्तमित्यर्थतो लभ्यम् । एवं च तत्तज्जने तत्त्वार्थबोधाभावोच्छेदनिर्वाहको यस्तत्र तत्त्वार्थबोधोत्पादप्रयोजको विवरणरूपो व्यापारस्तन्निर्मातेत्यर्थः । निर्माणेनेति तृतीयान्तनिर्माणपदार्थलभ्यभेदस्य फलितत्वात् । चिन्तेति । बहुतरशिष्यसमवेतो यश्चिन्तामणिग्रन्थतत्त्वार्थबोधस्तदनुकूलविवरणकर्तेत्यर्थः । प्रवृत्त्यर्थमित्यस्य स्वीयग्रन्थस्य चेत्यस्य च त्रितयेऽन्वयः(१) अभिधेयत्वघटकप्रतिपत्त्यन्वयि जन्यत्वं षष्ठ्यर्थः इतरयोर्निष्ठत्वं तदर्थः ।

प्रयोजनवत्त्वायाभिधेयसम्बन्धावाहेत्यवतारणं शङ्कते यद्यपीति । तुल्यता कथनकर्मत्वेन सादृश्यम् । आन्वीक्षिकीप्रतिपाद्यमत्र प्रतिपाद्यते इत्यनुक्त्वा प्रमातत्त्वमत्र विविच्यत इति विशेष्याभिधेयप्रदर्शनबीजमाविष्कर्तुं दीधितिकृतां तथाभिधानमिति समाधत्ते । तथापीति । यदि ग्रन्थस्य प्रयोजनवत्ताज्ञाने विशिष्याभिधेयज्ञानं नापेक्षितम् तदा प्रयोजनवत्तायाः कथनपि तज्ज्ञानं न स्यात्सम्बन्धघटकप्रतिपाद्याज्ञानादित्याशङ्कायां सामान्यतो घटकीभूताभिधेयज्ञानमादाय स्वजनकज्ञानजनकत्वसम्बन्धेन प्रयोजनवत्त्वमुपपादयति एतदिति । तृतीयार्थोऽभेदः सामान्यपदार्थेऽन्वेति एतद्ग्रन्थप्रतिपाद्यं सप्रयोजनज्ञानविषयः शास्त्रप्रतिपाद्यत्वात् । यद्वा मुक्तिहेतुज्ञानविषयः एतद्ग्रन्थप्रतिपाद्यः आन्वीक्षिकीप्रतिपाद्यत्वादितिरीत्या एतद्ग्रन्थप्रतिपाद्यं सप्रयोजनज्ञानविषय इति मानसम् । स्वजनकज्ञानजनकत्वरूपसम्बन्धघटकीभूतं यन्मोक्षहेतुताद्दशप्रतिपाद्यत्व-

---

(१) प्रयोजनाभिधेयसम्बन्धत्रितय इत्यर्थः ।

रूपसामान्यधर्मधर्मितावच्छेदकज्ञानं तज्ज्ञानस्य सम्भवात् । विशिष्य तदज्ञानेऽपि प्रयोजनवत्ताज्ञानाकुण्ठनाद्विशिष्य तज्ज्ञानस्य फलान्तरं व्यञ्जयितुं तुल्यतयोपादानमिति भावः। तत्र तस्य फलान्तरं स्फुटयति प्रतिपाद्यस्येति । सामान्यतः प्रतिपाद्यस्य ज्ञानं प्रयोजनवत्ताज्ञानोपयोग्यपि न प्रवृत्त्युपयोगि अन्यथा प्रतिपाद्यस्य मुक्तिहेतुज्ञानविषयत्वसंशये प्रमाणतत्त्वं न ज्ञातमिति प्रमाणतत्त्वत्वेनाज्ञाततत्त्वनिश्चयेऽपि ग्रन्थश्रवणे प्रवृत्तिर्न स्यादतः फलतावच्छेदकरूपेणैव ज्ञातत्वज्ञानस्योपाये प्रवर्त्तकत्वम् । तस्य च विशिष्य फलज्ञानाधीनत्वाद्विशिष्य तज्ज्ञानमपेक्षितम्। तथा च विशिष्य प्रमाणतत्त्वज्ञानमूलकप्रमाणतत्त्वत्वेन ज्ञातत्वानिश्चयलाभवाद्विशिष्य तज्ज्ञानेच्छाधीना तत्र प्रवृत्तिरिति भावः। तज्ज्ञानज्ञानानुधावनं तदिच्छानिर्वाहार्थम् । यद्वा सामान्यतो मुक्तिहेतुज्ञानविषयताज्ञानेपि प्रमाणतत्त्वत्वेन तत्सन्देहे बाधकाभाव इत्याशयः। स च विशिष्य तज्ज्ञाने मोक्षजनकतासन्देहपर्यवसन्नः अतो न प्रवृत्तिः। न च विशिष्य ज्ञाततासन्देहे प्रवृत्त्युच्छेदभयेन विशिष्य ज्ञानप्रदर्शनं व्यर्थम् तस्य तत्सन्देहानुच्छेदकत्वादिति वाच्यम्। विशिष्य ज्ञातता- निश्चयद्वारा, तस्य तन्निवर्त्तकत्वात्। यद्वा सामान्यतः प्रतिपाद्यस्य मुक्तिहेतुज्ञानविषयतासन्देहः तज्ज्ञानस्य मोक्षजनकतासन्देहपर्यवसायी अतो विशिष्य तादृशविषयतानिश्चयार्थं विशिष्य तज्ज्ञानमित्यर्थः। मूलानुरोधेन दर्शितौ विशिष्येत्यध्याहार्यम् अतो न शाब्दीति न्यायविरोधः। *पृथगोति* एवं च फलवच्छास्त्रोपकरणत्वेनेत्यस्य प्रयोजनवत्त्वांशे एवान्वयोप्युपपद्यते।

तस्यां निरुक्तजनकतायाम् । सामान्यतः तद्वत्ताव्यावृत्तेः उपलक्षणव्यावृत्तामिति । विशेषणत्वं तत्कालावच्छिन्नतद्वत्स्वरूपम् तस्यैवोत्तरकालीनोद्धारेच्छाप्रयोजकत्वात् । न चेति । न च संसारविशेषणवैयर्थ्यमशक्यमेव तद्सत्त्वे दुःखित्वस्योपलक्षणत्वे मुक्तेषु उद्दिधीर्षाविषयत्वापत्तिः विशेषणत्वे स्वर्गिणां तदनुपपत्तिः संसारविशेषणसत्त्वे च दुःखित्वस्योपलक्षणतया स्वर्गिणामपि सङ्ग्रह इति वाच्यम्। दुःखपङ्कनिमग्नत्वं तत्प्रागभाववत्त्वम् दुःखित्वमेव वा दुःखमर्कविशत्यपि तथा च तद्विशेषणमिति-शङ्कासङ्गतेः दुःखित्वं न जगत्पदार्थतावच्छेदकम् पृथग्दुःख-

त्यादिविशेषणात् इति तु बोध्यम् । क्रियेतेति । तदकरणाद्धेतोरित्यर्थः । दुःखि जगदुद्भूतं भवत्विति नेच्छा अदुःखिजगदुपगमापत्तेः किन्तु जगदुद्भूतमस्त्वित्येवेति तथा न कृतम् । धनी सुखीत्यादिवद्बुद्धिधीविषयत्वप्रयोजकत्वेन दुःखित्वं विवक्षति *यत इति । जगदिति* यवच्छेदकावच्छेदेनैव विधेयान्वय औत्सर्गिकः अन्यूनानतिप्रसक्तत्वनियतं च स्वरूपसम्बन्धरूपमवच्छेदकत्वम् तच्च संसारस्यैव तु स्वर्गवृत्तिदुःखित्वस्य अतो योजनयापि तथा न कृतमिति भावः । लाभायेति । तेन संसारित्वस्याचेतनशरीरसाधारण्येनोद्धारबाधस्य निरासः । यत्किञ्चिदेकात्मोद्धारेच्छया महत्तरशास्त्रप्रणयनं व्यर्थमत आह *लक्षणयापीति* अपिना शक्तिसङ्ग्रहो दृष्टान्तार्थः । जगद्वृत्तिसमूहत्वमात्रेणोद्धारेच्छाविषयत्वे प्रत्येकमुद्धारानुपपत्तिरतस्तत्तत्संसारावच्छिन्नस्यात्रलाभ आवश्यकः अत एव विशिष्य सकलजीवानामान्वीक्षिकीशास्त्राध्ययनद्वारोद्देश्यतानिर्वाहोऽभिधास्यते तथा चारोपरूपार्थत्यागोऽयुक्त इत्यत आहेवेति । *तल्लाभादिति* जगत्पदार्थभिन्नं उद्धारेच्छाशून्यत्वसहितजगदुद्धारेच्छाबोधेनार्थतस्तल्लाभादित्यर्थः । एवकारस्य यावदर्थकत्वं स्वाश्रयग्राहकेण गृह्यत एवेत्यत्र मिश्रादिभिरुपगतम् । तथा च समभिव्याहृतपदार्थतावच्छेदकसमानाधिकरणसकलतत्तद्धर्मावच्छिन्नरूपोऽशेष एवकारार्थः । तद्धर्मश्च विशिष्य संसाररूप एव ग्राह्यः न तु तत्तद्व्यक्तित्वरूपः मुक्तानामुद्धारेच्छाविषयत्वापत्तेः । ननु व्यासज्यवृत्तिजगत्पदार्थघटकसमूहत्वावच्छिन्नभेदः प्रत्येकं जगत्यपि । नापि जगत्त्वव्यापकत्वेनोद्धारेच्छाविषयता प्रत्येतुं शक्यते तत्सामानाधिकरण्यमात्रेण तद्विषयत्वेनैवोपपत्तेः । वस्तुतः जगत्पदात्संसारात्मत्वसमानाधिकरणसकलतत्संसारवत्त्वलाभेनैवोपपत्तेः समूहनिवेशनमनुचितमेवेत्यत आह । *अथवेति* ।

अर्थविद्याध्यात्मविद्येति पाठः । शिल्पविद्याव्यावृत्तयेऽर्थपदम् । अर्थज्ञानेच्छा मोक्षोपायेच्छा । तादृशेति । शूद्राः शास्त्रार्थज्ञानवन्तो भवन्त्विति मुनीच्छायां शूद्रशरीरविशिष्टानामभानादिति भावः । इच्छाया इच्छापूर्वकत्वविशिष्टस्य न शूद्राय मतिं प्रयच्छेदिति निषेधात् । शूद्रोपलक्षितविप्रादेरव्यापनस्य प्रत्यवायहेतुतापरया शूद्रपदेन शूद्रावच्छिन्न-

स्यैव तत्र विलक्षणादिति भावः । दैववशेनेति । फलादिपातेच्छ-येषुप्रयोगाद्विप्रादिमरणे वाचनिकप्रायश्चित्तविधिवशात्प्रत्यवायान्तर-कल्पनेऽपीह तादृशविध्यभावान्न तत्कल्पनमिति भावः । ब्राह्म-णादीति । तत्रापि दैववशेनानधिकारिणामर्थज्ञानसम्भवादिति भावः। ब्राह्मणत्वादीति । तथा च तथाविधेच्छैव ब्राह्मणाद्यवच्छिन्ना-त्मधर्मिकेति भावः। शूद्रत्वविशिष्टशरीरं परिगृह्यैतच्छास्त्रार्थज्ञानवा-न्भूयादितीच्छा तु न मुनेरस्तीति भावः। ननु शूद्राः शास्त्रार्थज्ञान-वन्तो भवन्त्वितीच्छायां शूद्रशरीरोपलक्षितात्मभाने मानाभावः ज्ञानभागित्वेनेच्छायाः शरीरावच्छिन्नज्ञानविषयकत्वनियमादित्यत आह *अन्यथेति* कीटा अर्थज्ञानवन्तो भवन्त्वितीच्छायाः संवादि-त्वानुरोधेन कीटशरीरोपलक्षितात्मविषयत्वात्तत्रैव तन्नियमभङ्गादि-त्यर्थः। टीकेति । बाधितप्रत्यवायस्वीकारोऽस्वरसः।

निश्चीयमानेति । प्राचीनमते निश्चितप्रामाण्यकस्यैव ज्ञान-स्य निश्चयकार्यकारित्वादिति भावः । प्रथमसूत्रेति । पदार्थ-तत्त्वज्ञानादिति पञ्चमी साधनत्वे शास्त्राधीनेति भावः । अर्ह-तीति । तथाच प्रवृत्त्यभावात्कुत्रापि न निःश्रेयसो भवतीति भावः। ननु प्रथमसूत्रार्थज्ञानेऽप्रमात्वव्यावर्त्तकतया शास्त्रस्य प्रमा-त्वनिश्चायकत्वमत्राह *शास्त्राधीनेति* अनुमितिशाब्दबोधवद्विशेषद-र्शनाधीनमानसेपि परतस्त्वमिति भावः। एतन्मते शास्त्रजन्यत्वं न प्रमात्वे लिङ्गम् तत्प्रत्यक्षस्यैवाभिप्रेतत्वात् शास्त्रोपादानं च तत्र निः-श्रेयसवत्त्वलाभाय। मन्वान इत्यनेनान्यदुक्तमन्यद्बुद्धमिति सूचित-म्। प्रवर्तकज्ञाने इति। तथाच स्वार्थिप्रवृत्तिजनकज्ञानधर्मिकप्रमात्व-निश्चयसम्पादकत्वम्। परम्परया स्वमुक्तिसम्पादकत्वं च तद्विषयी-भूतज्ञानजनकतावच्छेदकत्वम्। ननु परम्परापदे तादृशतात्पर्यभ्रमो दुर्घटः प्रमाणतत्त्वेत्याद्यग्रिमग्रन्थासङ्गतेरतस्तत्सङ्गमयति *प्रमाणे-ति* परम्परयेति। प्रथमतो मोक्षसाधनताज्ञाने प्रमात्वनिश्चयः ततः शास्त्रश्रवणस्य प्रमाणतत्त्वावधारणजनकताज्ञानम् ततस्तत्र प्रवृत्ति-रित्यर्थः। कथमिति। तथाच यदुक्तं तद्बुद्धम् न त्वन्यदुक्तम् अन्य-द्बुद्धमित्याशयः। संमुखत एवेति। परम्परापदेन स्वजनकज्ञानजन-कत्वरूपसम्बन्धोक्तिसम्भवात् । मूले प्रवृत्तिसामान्यान्तःपातिवि-संवादिप्रवृत्तौ व्यभिचारमुक्त्वा संवादिप्रवृत्तावन्यथासिद्धिमाह *ब-

ह्यिति* साधनतासंसर्गकफलनिश्चयासत्त्वे तद्धर्मिकप्रमात्वनिश्चयेऽपि प्रवृत्त्यनुदयात् नान्यथासिद्धिः। अर्थसन्देहस्य प्रवर्त्तकतानिरसनाय बाह्यिति। गादाधर्यां भेदकोटिकसंशयासङ्ग्रहमुक्त्वाऽत्यन्ताभावकोटिकतदसङ्ग्रहमाह एवमिति। व्याप्त्यभावाभावस्य व्याप्त्यात्मकत्वेन यत्संशयत्वेतावन्मात्राभिधाने वक्ष्यमाणसंशयासङ्ग्रहाभावात्प्रथमतो यत्संशयपदार्थं दर्शयति *यत्संशयादिपदमिति* किञ्चिद्रूपेण भयत्वादिना। अत्रेदं सूचितम्। यत्संशयत्वव्यापकत्वमेव प्रतिबन्धकतायामुपादेयम्। न तु व्याप्तिसंशयरूपघटाभावनिश्चयमादाय घटवत्ताज्ञाने वक्ष्यमाणयत्संशयत्वावच्छिन्नत्वम्। व्याप्त्यभावाभावत्वेन व्याप्तिकोटिकव्याप्त्यभावसंशयसाधारण्यानुरोधेन व्याप्तित्वावच्छिन्नाभावत्वावच्छिन्नकोटिकसंशयत्वस्यैव स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वात्। व्याप्तिकोटिकसंशयत्वस्य किञ्चिद्रूपेण व्याप्तिप्रकारकनानासंशयसाधारण्येनातिप्रसक्तत्वाच्च। एवञ्च स्वरूपसम्बन्धरूपावच्छेदकत्वस्य हेतुघटकत्वमनिराकृत्याग्रे सामान्यविवक्षणे न्यूनत्वं न शङ्क्यम्। असङ्गतिरिति। न च व्याप्त्यभावाभावत्वावच्छिन्नकोटिकसंशयासङ्ग्रहेऽपि न क्षतिः व्याप्तित्वावच्छिन्नकोटिकसंशयत्वव्यापकप्रतिबन्धकतानिवेशसम्भवादिति वाच्यम्। व्यतिरेकज्ञानत्वेन पर्यवसानानुपपत्तेरेव तदर्थत्वात्। एकार्थेति। अन्यथा सकृदुच्चरित इति व्युत्पत्तिविरोधः। चरमेति। षष्ठ्यर्थस्य प्रथमविषयितायामन्वयसम्भवेऽपि पटस्य संशय इत्यादौ पटीयविषयिताविशिष्टविषयिताश्रय इति नानुभवः किन्तु विषयिताविशिष्टपटीयविषयिताश्रय इत्येव। किञ्च ससम्बन्धिकस्थले साक्षादन्वयितावच्छेदकेऽन्वयसम्भवे तत्कोटिप्रविष्टान्वयोऽव्युत्पन्न इति संशयपदार्थतावच्छेदकचरमविषयितायामेव तत्स्वीकार उचितः। अत एव संशये, पटविषयित्वं नास्तीति बाधदशायामनुभवसिद्धः पटस्य संशय इति बुध्यनुत्पादोऽपि सङ्गच्छते। निरूप्यत्वस्येति। नव्यमते पटस्य न संशय इत्यादौ पटनिरूपितत्वाभावसौलभ्यात्। संशयपदार्थान्तरमनभ्युपेत्याऽपि प्रथमसंशयपदार्थे एकार्थपरतानिर्वाहं शङ्कते न चेति। उभयसाकाङ्क्षार्थत्वकल्पनागौरवमपि द्रष्टव्यम्। आहुरित्यस्वरसोद्भावनम्, तद्बीजं च तात्पर्यग्रन्थे सकृदुच्चरित इति व्युत्पत्तेर्निराकार्यतया नाना-

र्थपरत्वेऽपि न क्षतिरिति।

प्रतिबध्येति संशयादिविशेषणम्। यद्रूपावच्छिन्नवत्तानिश्चयः यद्रूपावच्छिन्नाभावज्ञानप्रतिबन्धकस्तद्रूपावच्छिन्ननिश्चयसमानधर्मितावच्छेदकेत्यर्थः। यद्वा स्वप्रतिबध्यतया स्वसमानधर्मितावच्छेदकक इत्यर्थः। एवं साध्यघटकनिश्चयः। एवं यत्तद्रूपावच्छिन्नप्रकारितायां यत्सम्बन्धावच्छिन्नत्वं साध्यघटक तत्सम्बन्धावच्छिन्नाभावत्वेन हेतुघटकता ग्राह्या। तथाच यद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नाभावप्रकारकसंशयत्वादिव्यापकप्रतिबन्धकताकतत्तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नजन्यमिति व्याप्तौ न दृष्टान्तस्वरूपासिद्धी। संशयादीति। संशयदल एव निश्चयदल एव वा इदं विवक्षणीयम् एकतहलस्य त्याज्यत्वात्। एतदर्थमेवादिपदम् तेनैकत्र तद्विवक्षणे व्यभिचाराभावादपरत्र तद्विवक्षणं कथमिति न शङ्क्यम्। वस्तुतस्तु घटादिपदेन विषयविशेष उपादेयः तथा च यादृशविषयावेशेषाभावनिश्चयत्वनियतः व्याप्त्यभावसंशय एव तन्नियतः व्याप्त्यभावनिश्चय एव वेत्यत्र तात्पर्यम्। व्याप्त्यभावसंशयनिश्चयोभयस्य च तन्नियतत्वे मानाभाव इत्याशयः। तद्घटकेति। यद्रूपावच्छिन्नकोटिकत्वं संशयत्वघटकमितरपदं निश्चयपरम् यद्रूपावच्छिन्नप्रकारकत्वं निश्चयत्वघटकमितरपदं संशयपरमिति क्रमेण बोध्यम्। तृतीयार्थ इति। तथा चानाहार्यप्रामाण्यज्ञानानास्कन्दितयद्धर्मावच्छिन्नविशेष्यकयद्व्यतिरेकज्ञानत्वव्यापकत्वं प्रतिबध्यकतायां निवेश्यमित्यर्थः। अप्रामाण्यसंशयास्कन्दितव्याप्त्यभावसंशयादेः प्रतिबन्धकत्वेपि न क्षतिः प्रतिबन्धकतायामप्रामाण्यज्ञानानास्कन्दितव्यतिरेकज्ञानत्वव्यापकताया अव्याघातात्। तदर्थेति। समुदायपर्याप्तेः समुदायिनि वृत्तेर्ग्राह्यज्ञानप्रतिबन्धकतावच्छेदककोटौ संशयात्वस्याधिक्येपि ग्राह्यव्यतिरेकज्ञानत्वे तत्पर्याप्तेरावश्यकत्वात्। अन्यथा प्रत्येकवृत्तेः समुदायावृत्तित्वापत्तेरिति व्यतिरेकज्ञानत्वत्वावच्छिन्नपर्याप्तिसम्बन्धो वाच्यः। तत्राप्यवच्छेदकत्वं यदि स्वरूपसम्बन्धविशेषस्तदा अनवस्था अनतिरिक्तवृत्तित्वं चेत्तदा गौरवात् किं स्वरूपसम्बन्धरूपावच्छेदकत्वेनेत्यर्थः। यदि च प्रतिबन्धकतायां तादृशधर्मघटकातिरिक्तानवच्छिन्नत्वं यद्व्यतिरेका-

वगाहित्वानिष्ठावच्छेदकत्वान्यज्ञानत्वनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानिरूपकत्वमिति यावत्, यद्वा तादृशधर्मघटकातिरिक्तावृत्त्यवच्छेदकताकत्वं यद्व्यतिरेकावगाहित्वातिरिक्तो यो ज्ञानत्वातिरिक्तः तद्वृत्त्यवच्छेदकतानिरूपकत्वम् इति यावत्, निवेश्यते तदापि यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपयद्व्यतिरेकज्ञानत्वावच्छिन्नत्वेन विशेषणीयत्वात्। न चैवं स्वरूपसम्बन्धरूपानतिरिक्तवृत्तित्वरूपावच्छेदकत्वद्वयप्रवेशमपेक्ष्य पर्याप्तिकल्प एव लाघवमिति वाच्यम् पर्याप्तिपर्यालोचनेनार्थानिवेशे व्याप्तिनिश्चये व्यभिचारात् प्रतिबन्धकतावच्छेदकत्वस्य व्याप्त्यभावज्ञानत्वात्तत्र व्याप्तिनिश्चयस्याहेतुत्वात्। अस्माकन्त्वप्रामाण्यसंशयास्कन्दितव्याप्तिव्यतिरेकज्ञानतत्संशययोरप्रतिबन्धकतयाऽदोषात्। यत्तु व्यापकत्वनिवेशकल्पे उक्तदोषवारणाय यद्व्यतिरेकज्ञानत्वं यत्प्रतिबन्धकत्वाव्यापकं तदन्यत्वं प्रतिबन्धकताविशेषणमिति तन्न महागौरवात्। केचित्तु अनिश्चिताप्रामाण्यकयद्धर्मधर्मितावच्छेदककयद्धर्मावच्छिन्नव्यतिरेकज्ञानत्वपर्याप्तावच्छेदकताकप्रतिबन्धकताकं यत्तद्धर्मधर्मितावच्छेदककतद्धर्मावच्छिन्नप्रकारकज्ञाननिष्ठतद्धर्मावच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नजनकताकमिति व्याप्तिः। अत्र च तद्धर्मधर्मितावच्छेदककतद्धर्मावच्छिन्ननिश्चयत्वोक्तौ तत्तद्धर्मावच्छिन्नप्रकारकज्ञाननिष्ठत्वानुपादाने धूमत्वाद्यवच्छिन्नधर्मिकव्याप्तिव्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वे वक्ष्यमाणरीत्या धूमत्वावच्छिन्नधर्मिकव्याप्तिनिश्चयत्वेनाहेतुत्वात् व्यभिचार इति तदुपादानम्। एवञ्च तद्धर्मावच्छिन्नप्रकारकत्वोपादानं जनकतायां तद्धर्मावच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नत्वासिद्धिशङ्कावारणायैव न तु व्याप्तिशरीरप्रविष्टम्। ननु हेतौ पर्याप्तिनिवेशनमनर्थकम् ग्राह्याविशिष्टबुद्धिप्रतिबन्धकतावच्छेदककोटौ अप्रामाण्यज्ञानाभावस्यैव निवेशात्। इह तु अप्रामाण्यनिश्चयाभावस्येत्यत एव तद्बुद्धिवारणसम्भवादिति चेन्न अप्रामाण्यज्ञानव्यक्तीनां तद्व्यक्तित्वेनैव सर्वत्रोत्तेजकतया अप्रामाण्यनिश्चयव्यक्त्यभावानामपि ग्राह्यविशिष्टबुद्धिप्रतिबन्धकतावच्छेदककोटिनिवेशेन पर्याप्तिनिवेशं विना व्यभिचारस्य दुर्वारत्वात्। अथैवमपि वास्तवयद्धर्मावच्छिन्नाभावज्ञानत्वं न प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणं

भ्रमानुरोधात्। न च यद्धर्मावच्छिन्नविषयतानिरूपितव्यतिरेकत्वाव-च्छिन्नविषयताशालिज्ञानत्वघटितं तथेति वाच्यम्। व्याप्तिघटकपदा-र्थतावच्छेदकरूपेण भ्रमसम्भवात् यद्धर्मपदेन व्याप्तित्वादेरुपादाना-सम्भवादिति चेन्न यादृशरूपविशिष्टविषयतानिरूपितयत्सम्बन्धा-वच्छिन्नप्रतियोगित्वविषयतानिरूपिताभावत्वावच्छिन्नविषयताशा-लिज्ञानत्वपर्याप्तावच्छेदकताकप्रतिबन्धकताकं यत्तत्तादृशरूपविशि-ष्टतत्संसर्गावच्छिन्नविषयताशालिनिश्चयत्वावच्छिन्नजन्यमिति व्या-प्तिनिष्कर्षात्। तादृशं च रूपं भ्रमप्रमासाधारणव्याप्यत्वादिवि-षयतात्वम्। एवमप्रामाण्यज्ञानाभावविशिष्टतादृशनिश्चयत्वेन का-रणत्वान्निश्चयत्वेऽवच्छेदकतापर्याप्तिर्न प्रवेश्या। अथानुमितौ व्याप्त्यभावज्ञानत्वेन प्रतिबन्धकत्वपक्षे व्याप्तिज्ञानत्वेनैव हे-तुत्वमुचितम् व्याप्तिसंशयस्य प्रतिबन्धकत्वेनैव तत्कालेऽनुमिति-वारणसम्भवादिति चेन्न धूमो वन्हिव्याप्यो न वेति संशयेपि रूपान्तरपुरस्कारेण व्याप्तिनिर्णयादनुमित्युत्पत्त्या धूमत्वावच्छिन्न-लिङ्गकवह्न्यनुमितौ धूमत्वावच्छिन्नविशेष्यकव्याप्त्यभावज्ञानत्वे-न प्रतिबन्धकत्वेन धूमो वह्निव्याप्यो न वेति संशयसत्त्वे धूम-त्वावच्छिन्नलिङ्गकानुमित्यनुत्पादेऽपि धूमलिङ्गकवह्न्यनुमितिसा-मान्यवारणाय धूमलिङ्गकवह्न्यनुमितिसामान्यं प्रति धूमलिङ्गकवाह्न-व्याप्तिनिश्चयत्वेनैव हेतुत्वादित्याहुः। पराभवितुमिति। तथा च नै-यायिकपराभवमुद्दिश्यैव तटस्थं प्रति प्रामाण्यनिश्चयोपयोगिता-व्यवस्थापनप्रकारानुवादः दूषणविनिवेशायेति भावः। घटादीति। तथाच यदभावत्वप्रकारकतानैयत्यविशेषणं व्यर्थमिति भावः। ननु ग्राह्यसंशयस्य प्रतिबन्धकतामते तद्विशेषणमावश्यकमित्यत आह *यन्मतमिति* तथाच यत्संशयपदोपदानेपि संशयादौ नैयत्यान्त-विशेषणदानेपि च घटज्ञाने व्यभिचारो दुर्वार इति भावः।

न त्विति। प्राप्तसंशयस्याप्रतिबन्धकतामते एव व्यभिचारज्ञानस्य स्वतन्त्रप्रतिबन्धकता सम्भवतीति घटादिव्यतिरेकनिश्चयप्रतिबध्ये घटादिनिश्चयजन्ये घटादिविशिष्टज्ञाने यत्संशयपदेन व्यभिचारवार-णम् व्यभिचारसंशयप्रतिबध्ये व्यभिचारानिश्चयाजन्ये व्याप्तिनि-श्चये यद्व्यतिरेकनिश्चयपदेन व्यभिचारवारणम् अव्यभिचारसं-शयप्रतिबध्ये व्यभिचारनिश्चयप्रतिबध्ये चाव्यभिचारानिश्चयाजन्ये

व्यभिचारनिश्चये व्यभिचारवारणाय यदभावत्वप्रकारतानियतत्ववि-शेषणावश्यकत्वं चेति भावः । यद्यतिरेकज्ञानत्वव्यापकप्रतिबन्धक-ताकत्वनिवेशसम्भवेपि यथाश्रुतमूलानुरोधेन प्रतिबन्धकताविशे-षणतया निश्चयत्वोपादानम् अन्यथा संशयपदवैयर्थ्यं स्यात् । असं-भवाभावतया च न वैयर्थ्यम् यदभावत्वप्रकारतानियतो यदभावा-वगाहिताप्रयुक्तयत्प्रतिबन्धकताशालियद्व्यतिरेकनिश्चयः यदभावा-वगाहिताप्रयुक्तयत्प्रतिबन्धकताश्रययत्संशयश्च यदभावत्वप्रकारता-नियतः तन्निश्चयस्तद्धेतुरित्येकहेतौ यदभावत्वप्रकारतानियतत्व-स्य द्वेधा निवेशं परित्यजति *स्वेति* तथाच स्वप्रतिबन्धकयत्सं-शयत्वव्यापकयदभावप्रकारताकत्वे सति यद्यतिरेकनिश्चयप्रतिबध्य-त्वमेको हेतुः तेन यदभावत्वप्रकारक एव यत्संशयः यद्यतिरेकनि-श्चयश्च यत्र प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरित्यत्र न साध्यसाधन-विरोधः । न च यत्संशयप्रतिबध्यतामात्रनिवेशे संशयत्वानुपादाने सिद्धिविधया यज्ज्ञानप्रतिबध्यायां तन्निश्चयाजन्यानुमितौ व्यभि-चारवारणाय संशयत्वनिवेशोऽर्थक इवेति नन्विदानीमनुमिति-शाब्दबोधादिप्रतिबन्धके समानाकारकासिद्धिशाब्दबोधादौ स्व-प्रतिबन्धकयज्ज्ञानत्वव्यापकयदभावत्वप्रकारताकत्वविरहादेवादोषा-दिति वाच्यम् यादृशविषयविशेषे अनादौ संसारे न कस्यापि सिषाधयिषाद्ययमध्यवर्तिसिद्धिभिन्नसिद्धिर्जाता तत्र बाधमात्रमा-दाय व्यभिचारवारणार्थं संशयत्वोपादानात् । किञ्च यत्र विषय-विशेषे पक्षतावच्छेदकसामानाधिकरण्येनैव समूहालम्बनात्मकसि-द्धिबाधनियमः तत्र सामानाधिकरण्येनानुमितौ तादृशबाधत्वेना-विरोधित्वेपि तादृशसिद्धेर्विरोधितयोक्तरीत्या व्यभिचारवारणाय तदुपादानम् । किञ्च व्याप्तिप्रमात्वयोः संशये यदभावत्वप्रका-रकतानियमेपि तन्निश्चयस्यातथात्वात् साधनाप्रसिद्धिरित्यतस्तदु-पादानम् । नच व्याप्त्यादिनिश्चयस्यानुमित्यादिप्रतिबन्धकत्वा-भावान्न स्वप्रतिबन्धकयज्ज्ञानत्वव्यापकत्वाभावस्तत्रेति वाच्यम् । साध्याभावविशिष्टपक्षादिविषयकतत्समूहालम्बनस्य तथात्वात् । व्याप्त्यभावप्रकारकसंशयस्येव व्याप्यान्योन्याभावप्रकारकसंशय-स्याप्यनुमितिप्रतिबन्धकतया तत्र व्याप्त्यभावत्वप्रकारकत्वाभावात् दृष्टान्तासिद्धिस्तु न शङ्क्या व्याप्यान्योन्याभावप्रकारकव्याप्तिप्रकार-

कसंशयानुपगमात् उपगमे वा मुख्यविशेष्यतानिरूपितप्रकारता-पन्नाभावांशे प्रतियोगितासम्बन्धेन तत्प्रकारकत्वस्य निवेशनी-यत्वात्। एवं च व्याप्यभेदव्याप्त्यभावयोरेकत्वात्तत्र व्याप्त्यभावत्वं भासत इत्यनुपादेयम्। स्वप्रतिबन्धकव्यभिचारसंशयत्वव्यापक-व्यभिचाराभावत्वप्रकारताकेऽव्यभिचारनिश्चयेऽव्यभिचारनिश्चया-जन्ये व्यभिचारवारणाय यद्व्यतिरेकनिश्चयप्रतिबध्यत्वोपादानम्। अथैवमपि स्वविरोधिविषयकसमूहालम्बनात्मकघटवत्तासंशयत्व-व्यापकघटाभावत्वप्रकारताके तादृशसमूहालम्बनात्मकघटव्यतिरे-कनिश्चयप्रतिबध्ये घटवत्तानिश्चयाजन्येऽव्यभिचारनिश्चये व्यभिचारः वक्ष्यमाणरीत्या स्वप्रतिबन्धकयद्रूपावच्छिन्नविषयकसंशयत्वव्या-कयद्रूपावच्छिन्नाभावत्वप्रकारताकत्वे सति यद्रूपावच्छिन्नाभावनि-श्चयप्रतिबध्यतापर्यन्तोपादानेपि दुर्वारः यद्रूपपदेन घटत्वस्यैवोपा-दानादिति। अत्रेदं समाधानमवधातव्यम्। व्यतिरेकनिश्चयत्वव्याप-कप्रतिबन्धकताकत्वं विवक्षितम्। अथ धूमालोकादिधर्मिकव्याप्त्य-भावनिश्चयभेदेन प्रतिबन्धकताभेदान्न कस्यामपि प्रतिबन्धकतायां यद्रूपावच्छिन्नाभावनिश्चयत्वव्यापकतेति दृष्टान्तासिद्धिरिति चेन्न यद्रूपावच्छिन्नज्ञानधर्मितावच्छेदककत्वेन निश्चयस्य विशेषणीयत्वा-त्। यद्रूपावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धक-तावच्छेदकविषयितानिरूपकत्वपर्याप्त्यधिकरणसंसर्गावच्छिन्नत्वेन व्यतिरेकिता विशेषणीया। न च तादृशनिश्चयत्वावच्छिन्नप्रतिबन्ध-कताकत्वमेवास्तु किं व्यापकत्वोपादानेनेति वाच्यम् अनुमितिं प्र-ति व्याप्त्यभावनिश्चयत्वेन प्रवृत्तिं प्रति प्रमात्वाभावनिश्चयत्वेन प्रति-बन्धकत्वे व्याप्त्यभावसंशयाद्यतिरिक्तप्रतिबन्धकताकल्पनप्रस-ङ्गभयेन व्याप्त्यभावादिज्ञानत्वेन प्रतिबन्धकताकल्पनात्। यत्तु स्व-प्रतिबन्धकव्यभिचारसंशयत्वव्यापकव्यभिचाराभावत्वप्रकारताके सिद्धिविधया व्यभिचारव्यतिरेकनिश्चयत्वावच्छिन्नप्रतिबन्धकताके च व्यभिचारनिश्चयाजन्येऽव्यभिचारनिश्चये व्यभिचारप्रसङ्गात् न स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेश इति। तदशुद्धमेव व्यापकत्वो-पादानेपि तद्दोषवारणासम्भवात्। वस्तुतस्तु अव्यभिचारविषयक-प्रत्यक्षनिर्णयं प्रत्येव व्यभिचारसंशयः प्रतिबन्धकः तत्र च न व्यभि-चारव्यतिरेकनिश्चयः प्रतिबन्धक इति न किञ्चिदेतत्। अथ स्वप्र-

तिबन्धकयत्संशयत्वस्य यदभावत्वप्रकारकत्वव्याप्यता विवक्षणे अनुमितिप्रतिबन्धकपक्षधर्मत्वाभावनिश्चयात्मके प्रमेयमेयत्वघटत्वादिना व्याप्तेः संशये व्याप्त्यभावत्वप्रकारकत्वाभावाद्दृष्टान्तासिद्धिः । न च तस्य व्याप्त्यभावावगाहित्वं नास्तीति वाच्यम् घटाद्यभावत्वेन व्याप्त्यभावभानसम्भवात् । न च यदभावत्वेनावगाहित्वं विवक्षयताम् । तथासति अव्यभिचारसंशयव्यभिचारनिश्चयोभयप्रतिबध्येऽव्यभिचारनिश्चयाजन्ये व्यभिचारानुद्धारप्रसङ्गात् । व्यभिचारत्वावच्छिन्नसंशयस्य अव्यभिचाराभावत्वाभावावगाहित्वात् अव्यभिचाराभावत्वावच्छिन्नसंशय एव तादृशाभावत्वप्रकारतासत्त्वात् । न च प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वं निवेशनीयमिति वाच्यम् तथासति संशये यदभावत्वप्रकारकतानिवेशफलं प्रतिबन्धकतायां यदभावागाहिताप्रयुक्तत्वं न निवेश्यत इति सिद्धान्तभङ्गप्रसङ्गादिति चेत् यत्संशयपदेन यद्रूपावच्छिन्नप्रकारताकसंशयोपादानात् । एवञ्च समानधर्मिकयद्रूपावच्छिन्नाभावावगाहिज्ञानत्वरूपसंशयत्वनिवेशेन व्याप्तिप्रकारकव्याप्यभेदसंशयवारणं सम्भवतीत्यपरमनुकूलम् । अथैवमपि व्याप्तित्वावच्छिन्नविषयताके घटत्वादिना व्याप्तिसंशयेऽनुमितिप्रतिबन्धकपक्षधर्मत्वाभावनिश्चयात्मके व्याप्त्यभावत्वप्रकारकत्वाभावाद्दृष्टान्तासिद्धिर्दुर्वारैवेति चेन्न मुख्यविशेष्यांशे प्रकारतापन्नाभावांशे प्रतियोगितासम्बन्धेन व्याप्तित्वावच्छिन्नप्रकारकतया यत्संशयपदेन दुर्घटत्वात् । अथ पर्वतत्वावच्छेदेन वह्न्यनुमितौ वह्नितदभावविषयकसमुच्चयरूपप्रतिबन्धके वह्नित्वावच्छिन्नाभावत्वप्रकारताकत्वात् वह्न्यभावनिश्चयसामान्यप्रतिबन्धकताकत्वाच्च वह्निनिश्चयाजन्यायां व्यभिचारो दुर्वार इति मुख्यविशेष्ये प्रकारीभूताभावांशे तद्रूपावच्छिन्नप्रकारतायाः स्वसामानाधिकरण्यस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन यद्रूपावच्छिन्नप्रकारकताविशिष्टत्वेन निवेशनीयत्वात् । अयञ्च दीधितिटिप्पण्यामभिप्रायवर्णनप्रकारः । मिश्रटिप्पण्यां तु स्वप्रतिबन्धकताप्रयोजकविषयिताघटितयत्संशयत्वस्य व्याप्यता विवक्षणीया नातो घटत्वादिना व्याप्तिसंशये प्रतिबन्धकपक्षधर्मत्वाभावनिश्चयात्मके व्याप्त्यभावत्वप्रकारकत्वाभावेपि दृष्टान्तासिद्धिः । नापि व्यतिरेकनिश्चयपदोपादानव्यावृत्त्यसङ्गतिर्यदभा-

भावगाहितांप्रयुक्तत्वानिवेशादित्युक्तम् । अत्र कल्पे यद्व्यतिरेकनिश्चय-प्रतिबध्यत्वमात्रमेव सम्यगिति बोध्यम् । एवं स्वप्रतिबन्धकयद्व्यतिरेकनिश्चयत्वव्यापकयदभावत्वप्रकारताकत्वे सति यत्संशयप्रतिबध्यत्वं द्वितीयहेतुः । अत्र च स्वप्रतिबन्धकताप्रयोजकभ्रमत्वाघटकविषयिताशालियद्व्यतिरेकनिश्चयत्वस्य व्याप्यता विवक्षणीया नातः पक्षधर्मताविरहत्वेन व्याप्त्यभावावगाहिन्यनुमितिप्रतिबन्धकनिश्चये-व्याप्त्यभावत्वाप्रकारकत्वेपि दृष्टान्तासिद्धिः । निश्चये प्रमात्वं निवेश्यमिति तु केचित । अनियमादिति । व्याप्तिग्रहे व्याप्त्यभावत्वव्यभिचारत्वावच्छिन्नविषयकौ संशयनिश्चयरूपौ द्विविधावपि ग्रहौ प्रतिबन्धकौ । इदानीमुक्तव्याप्तौ हेतुभेदेन यदभावावगाहिताप्रयुक्तत्वरूपविशेषणप्रवेशाप्रवेशौ सिद्धान्तयिष्यन्सामान्यतस्तत्प्रवेशामादर्श्यासङ्गतिं शङ्कते यद्यपीति । प्रमेयत्वादिनेति । यद्यपि प्रमेयवान् धूमः पक्षावृत्तिरिति ज्ञानं न निरुक्तव्याप्त्यभावसंशयलक्षणाक्रान्तम् तथापि व्याप्तित्वावच्छिन्नाप्रकारकत्वगर्भव्याप्त्यभावप्रकारकत्वरूपयथाश्रुतनिश्चयत्वाक्रान्तं भवत्येव । संशयादाविति । अथ स्वप्रतिबन्धकयत्संशयत्वे यदभावत्वप्रकारताव्याप्यत्वघटितहेतौ नेदृशी शङ्केति संशयपदोपादानमनर्थकमिति चेत् प्रमेयत्वादिना व्याप्तेः संशये पक्षधर्मताविरहनिश्चयात्मके व्याप्त्यभावत्वप्रकारकत्वाभावात् दृष्टान्तासिद्धेर्दुर्वारतया स्वप्रतिबन्धकताप्रयोजकयदभावविषयिताघटितयत्संशयत्वोपादानमित्याशयः । एवञ्चेहापि विपर्ययोपादानव्यावृत्त्यसङ्गतिशङ्कानिर्वाहः । व्यभिचाराभावेति । अव्यभिचाराभावावगाहिताप्रयुक्तो व्यभिचारावगाहिताप्रयुक्तो वेत्यन्यदेतत् । तथापीति । तथाच यत्संशयः यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालियदभावत्वप्रकारक एव यद्व्यतिरेकनिश्चयश्च यत्र प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरिति व्याप्तिः पर्यवसिता । साध्यसाधनविरोधपरिहारो दर्शितः । एवमत्र स्वप्रतिबन्धकताप्रयोजकघटाभावावगाहित्वघटितघटतद्वघटव्यतिरेकनिश्चयत्वव्यापकघटाभावत्वप्रकारताके घटवत्तानिश्चयाजन्ये सिद्धिविषया घटवत्साक्षात्प्रतिबध्ये आनुमानिकघटवत्ताज्ञाने व्यभिचार इत्यतः संशयत्वघटितयत्संशयप्रतिबध्यत्वनिवेशः । एवं स्वप्रतिबन्धकताप्रयोजकघटाभावावगाहित्वघटितघटव्यतिरेकनिश्चयत्वव्यापकघटाभा-

घटत्वप्रकारताके घटवत्तानिश्चयाजन्ये पटाभावनिश्चयात्मकघटवत्ता-संशयप्रतिबध्ये घटपटोभयसमूहालम्बने व्यभिचारवारणाय यत्सं-शयत्वव्यापकप्रतिबध्यता निवेश्या । नत्वित्यादि । अथ स्वप्रतिबन्ध-कताप्रयोजकयदभावविषयिताघटितयद्व्यतिरेकनिश्चयत्वस्यैव स्वप्र-तिबन्धकताप्रयोजकयदभावविषयिताघटितयत्संशयत्वस्यैव व्याप्य-तया विवक्षणमावश्यकम् उक्तयुक्तेः । तथा चाव्यभिचारविषयितायाः प्रतिबन्धकतानवच्छेदकतया व्यभिचारसंशयवारणाद्विपर्ययोपादा-नव्यावृत्तिर्न शक्यते सङ्गमयितुम् । न च संशयत्वघटकविषयितायां यदभावीयत्वानिवेशात् स्वप्रतिबन्धकतावच्छेदकव्यभिचारविषयि-तामादाय व्यभिचारसंशयोपग्रहसम्भवात्तद्व्यावृत्तिः सङ्गच्छत एवेति वाच्यम् निश्चयत्वघटकविषयितायां निष्प्रयोजनकतया यदभावी-यत्वानिवेशे यद्दृशविशेषणं निश्चयत्वे प्रविष्टं तादृशविशेषणस्यैव संशयत्वे प्रवेशापत्त्या नत्वित्यादिग्रन्थासङ्गतिप्रसङ्गात् । न च स्वप्रतिबन्धकताप्रयोजकविषयिताघटितत्वं न निश्चयत्वे प्रवेश्यते किन्तु निश्चये यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालित्वं तत्तु न संशयो तत्र संशयत्वे स्वप्रतिबन्धकताप्रयोजकविषयिताघटित-त्वस्यैवोक्तत्वादिति वाच्यम् यद्यप्युक्तज्ञानस्य पक्षधर्मत्वाभावावगा-हिताप्रयुक्तप्रतिबन्धकताशालितया दृष्टान्तासिद्धिप्रसङ्ग इति नि-श्चयविशेषणे यत्पदमुक्तम् तथापि पक्षधर्मताविरहत्वेन व्याप्त्यभा-वावगाहिनिश्चयमादायासिद्धिवारणाय स्वप्रतिबन्धकताप्रयोजक-यदभावविषयिताशालित्वमप्युपेक्ष्य निश्चयत्वे भ्रमान्यवृतित्त्वेना-घटिततादृशयदभावविषयिताघटितत्वस्यावश्यकतया तत्र यद-भावानिवेशात् । न च लाघवेन यदभावविषयितात्वावच्छिन्नप्रयो-जकताकप्रतिबन्धकताशालित्वमस्त्विति वाच्यम् संशये तद्विशेष-णप्रवेशपक्षे यद्विशेषणान्तरं तत्रैव विषयितायां लाघवेन यदभावी-यत्वनिवेशेनैवोपपत्तौ विपर्ययदलवैयर्थ्यस्य दुर्वारत्वादिति चेत्स-त्यम् व्यभिचारावगाहिताप्रयुक्तप्रतिबन्धकतावति व्यभिचारसंशय इत्यनेन प्रतिबन्धकतायां संशयत्वघटकविषयिताप्रयुक्तत्वरूपस्य विषयितायां यदभावीयत्वघटितस्य मिश्रटिप्पण्युक्तप्रकारस्य व्यञ्जने-ऽपि यद्रूपावच्छिन्नविषयिताकसंशयोपादाने तत्प्रकारानावश्यकतायाः सम्भवात् तथासत्येव ननु संशये तद्विशेषणप्रवेशपक्षे इति

लिखनस्वारस्यात् । वस्तुतस्तु मुख्यविशेष्यतानिरूपितप्रकारताप्रन्नाभावांशे प्रतियोगितासम्बन्धेन तत्प्रकारताकत्वनिवेशेऽपि सकलव्याप्तिप्रकारकव्याप्यभेदसंशयवारणं नास्ति प्रतियोगितया व्याप्तित्वेन व्याप्तिविषयकतत्संशयावारणादित्यतो यद्रूपावच्छिन्नप्रकारताकत्वादिकमावश्यकम् । तथाच मिश्रटिप्पण्युक्तविशेषणं व्यर्थमेवेत्यन्यैरपरिशीलितः पन्थाः । इदं पुनरिहावधेयम् । संशये तद्विशेषणप्रवेशकल्पे प्रतिबन्धकतायां यदभावावगाहितात्रयुक्तत्वनिवेशेऽपि विपर्ययोपादानं सार्थकीकर्तुं शक्यत एव । तथाहि व्यभिचाराभावकालीनत्वविशिष्टधूमधर्मिकव्यभिचारसंशयप्रतिबन्धकताकेऽव्यभिचारनिश्चये व्यभिचारवारणाय विपर्ययपदोपादानम् । अन्यथा स्वप्रतिबन्धकताप्रयोजकधर्मितावच्छेदकतारूपव्यभिचाराभावविषयिताघटिततया व्यभिचारावारणात् । नचैवं प्रमेयत्वादिना व्याप्त्यभावधर्मितावच्छेदकपक्षधर्मताविरहनिश्चयात्मकधूमज्ञानप्रतिबध्यतया दृष्टान्तासिद्धिर्दुर्वारैवेति धर्मितावच्छेदकताव्यावृत्तावगाहिताप्रयुक्तत्वमावश्यकम् । तथा च नोकरीत्या तत्सार्थक्यसम्भव इति वाच्यम् अनुमितिसामान्यस्य दृष्टान्तत्वासम्भवेऽपि शुद्धधूमत्वावच्छिन्नलिङ्गकानुमितेर्दृष्टान्तत्वसम्भवात् धर्मितावच्छेदकतान्यत्वरूपविशेषणस्यानावश्यकतया तत्प्रयोजनसङ्गतेः । वस्तुतस्तु व्यभिचाराभावाभावत्वावच्छिन्नविषयितायाः प्रतिबन्धकताप्रयोजकत्वे तदन्तर्गतव्यभिचाराभावविषयिताया अपि तथात्वात्तादृशसंशयप्रतिबध्येऽव्यभिचारनिश्चये व्यभिचारवारणार्थमेव विपर्ययपदोपादानमिति । व्याप्त्यादिसंशये प्रागुक्तलक्षणाक्रान्ते दृष्टान्तासिध्यादीति व्यभिचारो न व्याप्त्यभावः अपि तु अव्यभिचरितसाध्यसामानाधिकरण्यरूपव्याप्तेरभावाद्भिन्न एवेति व्याप्तिसंशयादेर्यदभावत्वप्रकारकत्वनैयत्यम् व्यभिचारी न वेति तु संशयो नानुमितिप्रतिबन्धकः किन्तु व्याप्तिग्रह एवेति । एतेनाव्यभिचारो व्याप्तिस्तत्प्रकारकोक्तसंशयस्य व्याप्त्यभावत्वाप्रकारकतया दृष्टान्तासिद्धिरित्यपास्तम् । वस्तुतस्तु व्यभिचारावगाहिताप्रयुक्तानुमितिप्रतिबन्धकतावतीत्यभिधानात्सोऽप्यनुमितिप्रतिबन्धकः । अनुमितौ व्याप्तिरिवेतिदृष्टान्ते व्याप्तिपदं दर्शितव्याप्तिपरम् । व्यापकसामानाधिकरण्यरूपव्याप्तिपर-

मिति केचित् । यदि च तदनुमितिपदमव्यभिचारप्रत्यक्षनि-
श्चयपरम् अव्यभिचारानुमितौ तत्संशयस्याविरोधित्वादित्युच्यते
तदा व्यभिचारज्ञानस्यानुमितिविरोधितामतेऽपि अविरोधात्किमिति
तत्र विशेषेण इति । तथा च सति संशये तद्विशेषणप्रवेशपक्षे प्रति-
बन्धकतायां तत्प्रयुक्तत्वादिनिवेशे एवकारेण यदभावावगाहित-
त्यादिविशेषणव्युदासः । यदभावत्वप्रकारकतानियतो यदभावाव-
गाहिताप्रयुक्तप्रतिबन्धकताशाली यद्व्यतिरेकनिश्चयो यत्संशयश्च
यदभावत्वप्रकारकतानियतो यत्र प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरि-
त्यत्र साध्यसाधनविरोध इत्यत आह यदभावत्ववतीत्येके यथा-
श्रुतानुरोधिनः । उक्तरीत्या तत्परिहारेऽपि वैकल्पिकविशेषण-
प्रवेशनिबन्धनो हेतुभेदो दुर्वार इत्यत आह यदभावत्ववती-
त्यन्ये तादृशाः । स्वप्रतिबन्धकताप्रयोजकविषयिताघटितत्वेन
घटितेऽघटिते वा स्वप्रतिबन्धकयत्संशयत्वव्यापकयदभावत्व-
प्रकारकताकत्वघटितहेतौ घटपटोभयवत्तासमूहालम्बने व्यभि-
चारः पटाभाववान् घटश्चेति स्वप्रतिबन्धकघटाभाव-
त्वप्रकारकत्वनियतघटसंशयप्रतिबध्यत्वात् घटाभाववत्तानिश्चयत्व-
व्यापकप्रतिबन्धकताकत्वाच्च । न च स्वप्रतिबन्धकताव्याप्ययत्सं-
शयत्वोपादानान्न दोषः समूहालम्बनानात्मकघटसंशयस्याप्रतिबन्ध-
कत्वादिति वाच्यम् । तथा सत्यव्यभिचारसंशयतद्व्यतिरेकज्ञानप्रति-
बध्ये तन्निश्चयाजन्ये व्याप्तिनिश्चये व्यभिचारो न सम्भवति व्यभि-
चाराव्यभिचाराभावकोटिकाव्यभिचारसंशययोर्व्यभिचारावगाहित्वे-
न प्रतिबन्धकतया मुख्यविशेष्यांशे प्रकारीभूताभावांशे प्रतियोगि-
तासम्बन्धेन यः प्रकारस्तत्प्रकारकत्वावच्छिन्नप्रतिबन्धकतायाः सं-
शयत्वव्यापकताविवक्षणेनैव निर्वाहादिति यदभावत्वप्रकारकतानै-
यत्यवैयर्थ्यम् । द्वितीयहेतौ व्यभिचारविषयकसंशयसामान्यप्रति-
बध्येऽव्यभिचारनिश्चये व्यभिचाराभावत्वप्रकारतानियतव्यभिचारा-
भावावगाहिताप्रयुक्तप्रतिबन्धकताशालियद्व्यतिरेकनिश्चयो अव्यभि-
चाराभावनिश्चयः तमादाय व्यभिचारः व्यभिचारप्रकारतावच्छे-
दकत्वात् । न च यज्ज्ञानसमानधर्मितावच्छेदकत्वप्रयोजकीभूता-
वगाहिताविशेषणम् अभावधर्मिकव्यभिचारसंशयप्रतिबध्ये तद्धर्मि-
काव्यभिचारनिश्चये तद्दोषसत्त्वात् । न च प्रतियोगितासम्बन्धानव-

च्छिन्नत्वं तद्विशेषणम् तथापि यदभावत्वप्रकारकताव्याप्यव्यति-रेकावगाहिताप्रयुक्तप्रतिबन्धकत्वमेवोचितं न तु निश्चयत्वमपीत्यत आह यदभावत्वेति तु मादृशाः। यत्संशयव्यतिरेकनिश्चयप्रतिबध्य-त्वरूपहेतौ व्यभिचारवारणाय पृथग्विशेषणप्रकाराग्रमिति तु के-चित्। घटव्यतिरेकनिश्चयसामान्यप्रतिबध्ये घटवत्ताज्ञानाजन्ये घ-टवत्ताज्ञाने व्यभिचारवारणाय यत्संशयपदोपादानम्। तत्रापि घट-पटोभयवत्ताज्ञाने घटवान्न वा पटाभाववद्वेत्यादिघटसंशयरूपपटा-भावनिश्चयप्रतिबध्ये घटव्यतिरेकनिश्चयप्रतिबध्ये व्यभिचारवारणाय सामान्यपदम्। व्यभिचारसंशयसामान्यप्रतिबध्येऽव्यभिचारनिश्चये व्यभिचारवारणाय यद्व्यतिरेकनिश्चयप्रतिबध्यत्वमुपात्तम्। तत्रापि व्यभिचारसंशयसामान्यप्रतिबध्येऽव्यभिचारनिश्चयरूपघटवत्ताज्ञा-नव्यक्तौ अव्यभिचाराविषयकघटाभावप्रकारकनिश्चयप्रतिबध्ये व्य-भिचारवारणाय सामान्यपदम्। सत्यन्तोपादानप्रयोजनमाह अव्य-भिचारेति। प्रमेयवान् धूमः पक्षावृत्तिरिति ज्ञानमादाय दोषवारणाय यदभावावगाहिताप्रयुक्तत्वमुक्तम्। तच्च स्वप्रयोजकभ्रमत्वाघटकयद-भावविषयिताकत्वम् तेन पक्षधर्मताविरहत्वेन व्याप्त्यभावावगाहि-ज्ञानमादाय न दोषः। अथ घटत्वेन व्याप्तेः संशये घटत्वेन व्याप्त्य-भावनिश्चये च प्रतिबन्धकताविरहात् दृष्टान्तासिद्धिरिति चेन्न यद्विषयताघटितयोः संशयत्वनिश्चयत्वयोः प्रवेशात् अभावस्य त-त्तद्व्यक्तित्वेन हेतुताया इव ज्ञाननिष्ठप्रतिबन्धकतायां विषयतया अ-वच्छेदकताया अप्यनङ्गीकारादाह स्वेति। तद्व्यक्तित्वाद्यवच्छिन्न-घटाभावादिविषयितासामान्यस्य प्रतिबन्धकतानवच्छेदकत्वात्संश-यविपर्यययोरुपादानम् अव्यभिचाराभावत्वानवच्छिन्नव्यभिचाराभा-वविषयताया यदभावविषयतासामान्यान्तर्गताया अनुमितिप्रतिब-न्धकतावच्छेदकत्वात् दृष्टान्तासिद्धिरतोऽनवच्छिन्नान्तम्। यदभाव-निवेशे यदभावत्वानवच्छिन्नव्यभिचारविषयतासामान्यस्यानुमिति-प्रतिबन्धकतानवच्छेदकत्वेपि न दृष्टान्तासिद्धिः। वस्तुतस्तु पक्ष-धर्मताविरहत्वेन व्याप्त्यभावविषयतायाः सामान्यान्तर्गतायाः स्व-प्रतिबन्धकतावच्छेदकतया दृष्टान्तासिद्धिवारणाय भ्रमत्वाघटक-त्वेन यदभावविषयतोपादेया। एवञ्च व्यभिचारत्वावच्छिन्ननिरुक्त-व्याप्त्यभावविषयताया भ्रमत्वघटकतया तद्व्यक्तित्वाद्यवच्छिन्नविष-

यतामादायैव दोषवारणात्सङ्गतिरिति । प्रमेयत्वादिनाऽव्यभिचाराभावरूपव्यभिचारविषयतायाः व्याप्तिग्रहप्रतिबन्धकतानवच्छेदकत्वाद्व्यभिचारवारणाय सामान्यपदम् । व्यभिचारत्वावच्छिन्नव्यभिचाररूपाव्यभिचारविषयतायाः व्याप्तिग्रहप्रतिबन्धकतावच्छेदकत्वात्तद्व्युदास इति ।

अत्रेदमाशङ्क्यते । एवं सति यत्संशयप्रतिबध्यत्वं व्यर्थं स्यात् घटाभावनिश्चयप्रतिबध्ये घटवत्ताज्ञाने घटाभाववत्तानिश्चयस्य अभावो घटीयो भूतलमभाववच्चेत्यादिज्ञानसाधारण्येनैव प्रतिबन्धकतया घटाभावत्वानवच्छिन्नघटाभावविषयितायाः स्वप्रतिबन्धकतावच्छेदकत्वेनैव व्यभिचारवारणसम्भवात् । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं प्रवेश्य तदुपादानसार्थक्यस्य प्रक्षालनाद्धीतिन्यायग्रस्तत्वात् । किञ्च घटवत्ताज्ञाने घटवदवृत्तिमानिति घटवदवृत्तित्वेन घटाभाववत्ताग्रहस्यापि विरोधितया यदभावत्वानवच्छिन्नयदभावविषयतायाः सामान्यान्तर्गतायाः स्वप्रतिबन्धकतावच्छेदकतया व्यभिचार एव न प्रसज्यते । यदि च पक्षधर्मताविरहत्वेन व्याप्यभावावगाहिज्ञानवारणाय प्रतिबन्धकतायां तदवच्छेदकविषयितायां वा भ्रमावृत्तित्वं प्रवेश्यते तथाच घटवत्ताप्रमायां व्यभिचारः तत्र घटवदवृत्तिमानिति ज्ञानस्य भ्रमतया तादृशघटाभावविषयताया भ्रमावृत्तिप्रतिबन्धकतानवच्छेदकत्वेन सत्यन्तार्थसत्त्वात् तादृशप्रतिबन्धकतायाः कामिनीजिज्ञासादौ प्रसिद्धेरिति संशयपदमित्युच्यते तदा प्रमात्मकाव्यभिचारनिश्चये व्यभिचारो दुर्वार एव अव्यभिचाराभावत्वानवच्छिन्नव्यभिचारविषयतासामान्यस्य भ्रममात्रवृत्तिप्रतिबन्धकतावच्छेदकत्वात् । एवं भ्रमान्यवृत्तित्वरूपतद्विशेषणेऽपि । न च यदभावविषयिताशब्देन यन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नविषयिता विवक्षिता घटवदवृत्तित्वं च न घटप्रतियोगितावच्छेदकमिति संशयपदोपादानमिति वाच्यम् । व्याप्यभावत्वानवच्छिन्नतादृशविषयत्वाप्रसिद्धेर्दृष्टान्तासिद्धेः । नचाधेयत्वाभावत्वस्याव्यभिचरितसाध्यसामानाधिकरण्यरूपव्याप्तिप्रतियोगितावच्छेदकतया तदवच्छिन्नविषयतामादाय न दृष्टान्तासिद्धिरिति वाच्यम् तथासति घटवदवृत्तिद्रव्याभाववानिति ज्ञाने घटनिरूपितप्रतियोगितावच्छेदकीभूतद्रव्याभा-

त्वावच्छिन्नघटाभावत्वानवच्छिन्नविषयतायाः सामान्यान्तर्गतायाः घटवत्ताज्ञानप्रतिबन्धकतावच्छेदकत्वेन संशयपदवैयर्थ्यात् । विषयतायां तद्वद्वृत्तित्वानवच्छिन्नत्वं प्रवेश्य तत्सार्थक्यस्य प्रक्षालनाद्धीतिन्यायग्रस्तत्वात् । न च व्याप्तिमद्वृत्तिमानितिज्ञानीयव्याप्यभावत्वानवच्छिन्नव्याप्तिमद्वृत्तित्वावच्छिन्नव्याप्यभावविषयतायाः सामान्यान्तर्गतायाः प्रतियोगितावच्छेदकतया दृष्टान्तासिद्धिवारणाय तद्वद्वृत्तित्वानवच्छिन्नविषयता निवेश्येति न प्रक्षालनाद्धीतिन्यायापात इति वाच्यम् व्याप्तिमद्वृत्तिधर्मवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावात् । तदभ्युपगमे तु तद्वद्वृत्तित्वानवच्छिन्नत्वोक्तावपि साध्यसामानाधिकरण्यवद्वृत्तिधर्मवत्ताज्ञानस्यापि तथात्वापत्त्या तद्विषयताया व्याप्यभावत्वव्याप्तिमद्वृत्तित्वावच्छिन्नायाः प्रतिबन्धकतावच्छेदकत्वेन दृष्टान्तासिद्धितादवस्थ्यात् वस्तुवस्तु व्याप्त्यंशे तद्घटकपदार्थांशे वा भ्रमात्मकस्य व्याप्यभाववत्ताज्ञानस्य व्याप्यभावत्वानवच्छिन्नस्य प्रतिबन्धकतावच्छेदकविषयताकतया दृष्टान्तासिद्धिर्दुर्वारैवेति ।

अत्रेदं समाधानमाकलयामः । स्वप्रतिबन्धकतानवच्छेदकयद्भिन्ननिरूपितप्रतियोगितावच्छेदकानवच्छिन्नयदभावत्वानवच्छिन्नयदभावविषयतासामान्यकत्वं सत्यन्तार्थः । तद्व्यक्त्यभाववानिति ज्ञानीयघटाभावविषयितायां यदभावत्वानवच्छिन्नघटान्यनिरूपितप्रतियोगितानवच्छेदकतद्व्यक्तित्वावच्छिन्नत्वप्रसिद्धेः संशयपदमर्थवत् दृष्टान्तासिध्यादिपरिहारश्चानया दिशोह्य इति । यदभावत्वानवच्छिन्नत्वं च यदभावत्वविषयतानिरूपितत्वम् भ्रमप्रमासाधारणयदभावत्वविषयतात्वेन वास्तवयदभावत्वविषयताया निरूपकतया न दोष इति । तद्व्यतिरेकज्ञानत्वेनेति । स्वतःसिद्धतद्व्यतिरेकज्ञानाभावस्थले प्रवृत्तिसत्त्वादिति भावः । अर्थः फलसाधनता । तदसत्त्वेनेति । प्रामाण्यसंशयस्यार्थसंशयसम्पादकत्वेनार्थनिश्चयविरहप्रयोजकत्वादिति भावः । प्रामाण्यसंशयसामग्र्या अर्थनिश्चयविरोधित्वेप्याह तद्द्वितीयक्षणेवेति । अगृहीतेति । अर्थनिश्चये प्रमात्वसन्देहोत्तरं प्रामाण्यनिश्चये तु मतद्वयेपि तन्नाशादेव प्रवृत्तिः व्यभिचारसंशयोत्तरव्याप्तिनिश्चयेऽनुमितिलिखनन्त्वनुभवानुरोधात् । तत्र व्याप्तिसंशयभेदोऽत्राप्रामाण्यज्ञानात्यन्ताभाव इतिविशेषाच्च । व्या-

त्तिसंशयभेदस्येति सम्प्रदायमतेन तेनान्यमते व्याप्तिविशिष्टवैशिष्ट्यादिज्ञानहेतुत्वेपि न क्षतिः।

उक्तयुक्त्या कारणत्वानिवेशेऽपि प्रयोजकत्वं निवेश्यम् तच्च अनन्यथासिद्धत्वागर्भ नियतपूर्ववर्तित्वमित्याशयेनाह अथवेति। पदार्थतत्त्वज्ञानधर्मिकसाधनसंसर्गकमोक्षप्रकारकप्रवृत्तिस्त्विति पदार्थतत्त्वज्ञानविशेष्यकमुक्तिसाधनताज्ञानधर्मिकप्रमात्वनिश्चयत्वेन हेतुतासाधनार्थे तादृशज्ञानधर्मिकप्रमात्वनिश्चयविरहविशिष्टस्य तादृशज्ञानधर्मिकप्रमात्वव्यतिरेकज्ञानस्याभावे पदार्थतत्त्वज्ञानधर्मिकसाधनतासंसर्गकमुक्तिप्रकारकप्रवृत्तिनियताव्यवहितपूर्ववर्तित्वहेतुकृतम् तथा च स्वनियताव्यवहितपूर्ववर्त्तितादृशज्ञानधर्मिकप्रमात्वनिश्चयविरहविशिष्टतादृशज्ञानधर्मिकप्रमात्वव्यतिरेकज्ञानाभावरूपपदार्थतत्त्वज्ञानधर्मिकप्रोक्तसंसर्गकमुक्तिप्रकारकप्रवृत्तित्वं हेतुः। स्वजनकतावच्छेदकतादृशज्ञानधर्मिकप्रमात्वनिश्चयकत्वादृशप्रवृत्तित्वं साध्यमिति फलितम्। अत्र निश्चयविरहविशिष्टत्वं व्यतिरेकज्ञानविशेषणं न स्वरूपासिद्धिवारकं किन्तु दृष्टान्तासिद्धिवारकमित्यग्रे स्फुटम्। पदार्थतत्त्वज्ञानधर्मिकमोक्षप्रकारकप्रवृत्तेरव्यवहितपूर्वं काशीमरणधर्मिकमुक्तिप्रकारकज्ञानधर्मिकप्रमात्वव्यतिरेकज्ञानाभावसम्भवात्तादृशज्ञानप्रमात्वनिश्चयस्य तत्राजनकतया सामान्यतो व्याप्तौ व्यभिचार इति तत्र नियतत्वनिवेशः। तादृशव्यतिरेकज्ञानोत्तरकाशीमरणादिधर्मिकमुक्तिप्रवृत्तेः सुखादिप्रकारकपदार्थतत्त्वज्ञानप्रवृत्तेश्चोदयाद्धेत्वसिद्धिरतो हेतौ प्रकारकान्तम्। तादृशज्ञानधर्मिकप्रमात्वनिश्चयविरहेपि काशीमरणादौ मुक्तिप्रकारकप्रवृत्तेः पदार्थतत्त्वज्ञाने सुखप्रवृत्तेश्चोदयान्नियतपूर्ववर्त्तिताघटितसाध्यं न सिध्येदतः साध्ये प्रकारकान्तम्। अत्र प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावनिवेशतत्फले उन्नये। अत्र समूहालम्बनप्रवृत्तिनिष्ठपदार्थतत्त्वज्ञानधर्मिकमुक्तिप्रकारकप्रवृत्तिकार्यतात्वेन यागधर्मिकसुखादिकार्यतामादायार्थान्तरं न शङ्क्यम् तादृशकार्यतायाः साध्यत्वात्। एवमेव यागपाकादिविशेष्यकस्वर्गौदनादिप्रकारकप्रवृत्तावपि विशिष्य यागपाकादिरूपकारणस्वर्गौदनादिरूपकार्यघटिततत्तत्साध्यसाधनमुन्नेयम्। दृष्टान्तासिद्धिवारणाय सामान्यमुखीं व्याप्तिमाह यन्निश्चयेति। ओदनविशेष्यकतृप्तिसाधनताज्ञाने प्रमात्वाभावज्ञाने ओदने तृप्तिप्रवृत्तेः ओदनविशे-

ष्यकतृप्तिसाधनताज्ञाने प्रमात्वाभावज्ञाने जले तृप्तिप्रवृत्तेश्च तृप्तिप्रवृत्तिसामान्ये, एवमोदनधर्मिकस्वर्गसाधनताज्ञाने प्रमात्वाभावज्ञाने ओदने तृप्तिप्रवृत्तेस्तद्धर्मिकतृप्तिसाधनताज्ञाने प्रमात्वाभावज्ञाने ओदने स्वर्गप्रवृत्तेश्चोदनविशेष्यकत्वयत्प्रकारकत्वयोरुपादानम् । ओदनादिविशेष्यकतृप्त्यादिप्रकारकानुमित्यादिकमादाय तद्दोषवारणाय यज्जातीयेति । न च तद्विशेष्यकवह्निप्रकारकानुमितौ धूमविशेष्यकव्याप्तिप्रकारकनिश्चयत्वेन न हेतुता आलोकादिविशेष्यकव्याप्तिप्रकारकनिश्चयमादाय व्यभिचारादिति वाच्यम् धूमलिङ्गकत्वादिसहितताद्दशानुमितौ ताद्दशनिश्चयत्वेन हेतुतया जातिपदेन धूमलिङ्गकानुमितेरुपादानाभावेपि कार्यपदोपादानाद्धेतुसाध्ययोरेकाधिकरण्यतागर्भनियतत्वप्रवेशलाभेनादोषात् । धूमलिङ्गकताद्दशानुमितौ आलोको व्याप्य इति निश्चयविरहविशिष्टमालोको न व्याप्य इति ज्ञानमितिरीत्या विशिष्य पृथक् पृथक् प्रतिबन्धकता इति न काप्यनुपपत्तिः तृप्तिसाधनताज्ञाने प्रमात्वसंशये तत्र प्रमात्वनिश्चयेपि प्रमात्वसंशयानाशेन तृप्तिप्रवृत्त्यनुदयोऽतो यन्निश्चयविरहविशिष्टपदस्य प्रयोजनमाह व्याप्त्यभावेति । तस्य कारणत्वमप्यनपत्रादमिति । न च यत्रार्थनिश्चये प्रामाण्यसंशयोत्तरं प्रामाण्यनिश्चयस्तत्र प्रवृत्तिः सम्भवति अत एव यन्निश्चयविरहविशिष्टत्वं हेतौ कृतं तथा च कथं कारणत्वमिति वाच्यम् तत्र प्रामाण्यसंशयनाशे सत्येव प्रवृत्तिस्वीकारात् ।

स्वरूपासिध्यादिरिति । आदिनोद्देश्यासिद्धिपरिग्रहः ।

नन्वित्यादिमाध्वमिकाक्षेपमन्यथा बुध्वा कृतायाः अथ किमित्याशङ्कायाः स्वाक्षेपाभिप्रायप्रकटनेनैव निरासितुं शक्यत्वात्तत्प्रकटनमेव किमिति न कृतमित्याशङ्क्याह अथवेति । स्वीकृत्यैवेति । तथा च मदभिप्रायमबुध्वा त्वया अथ किमित्याशङ्कनेपि मन्मताभिप्रायप्रकाशने न कापि क्षतिः त्वदाभिप्रेतस्य प्रवृतावपेक्षणीयस्य प्रमात्वनिश्चयस्य स्वतः परतो वाऽसम्भवादेवमप्याक्षेपसङ्गतेरिति ।

मिश्रमतयोरेवेति । तेन तदीयमात्रपरत्वे इत्येतत्सङ्गतिः ।

सर्वेषामिति । प्राथमिकज्ञानग्रहविषयत्वं मीमांसकत्रयसाध्यम् तत्र प्राथमिकेतिज्ञानग्रहविशेषणम् । तच्च स्वसमाना-

धिकरणत्वस्वध्वंसवत्कालत्वोभयसम्बन्धेन ज्ञानग्रहवदन्यत्वम् । स्वेति । तथाच स्वविषयकज्ञानाजन्यस्वाश्रयाश्रयविषयकमानसविषयत्वमर्थः । तादृशमानसं च बाधप्रतिबध्यतानवच्छेदकस्वविषयताशालीत्यग्रे स्फुटम् एवं च भावत्वमप्रामाण्याविषयकत्वं वाऽनावश्यकम् एतच्च स्वत एवेत्यस्य स्वतो ग्राह्यत्वरूपसाध्यान्तरसूचकत्वेन वर्णनं तद्व्यर्थवारणाय दीधितावपि स्वप्रकाशतयाऽनुव्यवसायेनेत्यनेन तद्वैयर्थ्यवारणमेवाभिप्रेतम् । अत्र नैयायिकमते वक्ष्यमाणरीत्या धूमत्वव्यापकीभूताभावप्रतियोगिहेतुमत्ताज्ञानाधीनाया अनुमितेः प्रामाण्यविषयकत्वात्सिद्धसाधनम् । तादृशस्वाश्रयग्रहत्वव्यापकाविषयिताप्रतियोगित्वोक्तौ स्वविषयकज्ञानाजन्यत्वं व्यर्थमिति मानसपदम् । अत्र स्वाश्रयविषयकज्ञाने स्वाश्रयभिन्नं ग्राह्यम् अन्यथा स्वाश्रयविषयकं यत्स्वाश्रयं समूहालम्बनं तदादाय गुरुसाध्येन कृतार्थत्वापत्तेः । गुरूणां सम्भव इत्यपि न मिश्रसाध्यं ज्ञाननिवेशेऽनुचितगौरवापत्तेरित्याशयेनाह स्वाश्रयेति । तेनेति । प्राथमिकज्ञानग्राह्यतायामेव विवादेनेत्यर्थः । अप्रयोजकतया ज्ञानस्यैन्द्रियकत्वेप्यनुमितिग्राह्यत्वसम्भवाद् घटादिवत् । प्रत्यक्षेति । तथा च प्रत्यक्षाग्राह्यत्वविशिष्टानुमितिग्राह्यत्वं भट्टसाध्यम् तन्मतेपि द्वितीयप्रत्यक्षग्राह्यता मिश्रादिभिरुक्तेति न सिद्धसाधनं स्वविषयकज्ञानाजन्यानुमितिग्राह्यत्वसाध्ये तथाविधप्रकारान्तरानुमित्यप्रसिद्धत्वाद्बाधशङ्कावारणाय ज्ञाततालिङ्गकतत्प्रदर्शनम् । एतेन व्याख्यानेन । अस्य शब्दलभ्यमेवेतेतीत्यस्य च परिहारेऽन्वयः । जिज्ञासेति । संशयाद्दुःखं ततस्तद्द्वेषः ततस्तद्ध्वंसेच्छा तत एकतरकोटिनिर्णयेच्छा ततः किं स्वतो ग्राह्यमिति प्रश्नः ततः प्रामाण्यं स्वतो ग्राह्यमित्युत्तरं सैव प्रतिज्ञा । अन्योपि विशेष्यावृत्यप्रकारकत्वरूपोपि तस्य प्रतियोगिग्राहकसामग्र्याधिको न स्वतस्त्वबाध इति अनादितात्पर्यविलम्बः याथार्थ्यरूपप्रकर्ष एव स्वतस्त्वविवादात् । ज्ञानत्वत्वप्रवेशभयेनाह ज्ञानमात्रेति । तत्परत्वभ्रमेति । वक्ष्यमाणमते तदनित्यत्वे बाधशङ्का स्यात् । वस्तुतस्तु स्वतस्त्वसाधनार्हं प्रामाण्यमुपेक्ष्य तदनर्हं प्रमाकरणत्वमात्रं पक्षीकृतमिति भ्रमेण निग्रहविशेषशङ्का स्यात् आधिक्याय सा भावल्युटोऽनुल्लेखभ्रमात् । एवं च करणल्युडन्तव्युत्पादनं भ्रमजनकदोषं वक्तुम भावल्युडन्त-

व्युत्पादनं तन्निरासायेति द्रष्टव्यम्। निरास इति। ज्ञानपदश्रवणमा-त्रात्प्रमाकरणार्थकपदसमभिव्याहारेण ज्ञानकरणार्थकं पदमयं न ब्रू-यात् पौनरुक्त्यादिति ततः ज्ञानपदस्यौत्सर्गिकार्थतात्पर्यग्रहे तद-न्वितपञ्चम्यर्थान्वयानुरोधेन भावल्युडन्तत्वग्रहद्वारा प्रामाण्यपदं प्रमाकरणत्वप्रतीतीच्छया नोच्चरितमिति बाधग्रहो जायते ततस्ता-दृशभ्रमनिरास इति भावः। स्वमते प्रमात्वत्वेनैव पक्षता ज्ञानपदं तूक्तशङ्कोच्छेदकम्।

ये तु ज्ञानीयप्रामाण्यपदार्थस्य पक्षत्वेन ज्ञानस्य पक्षा-न्तर्भावं मन्यन्ते तन्मतमुत्थापयति यत्त्विति। प्रमाकरणत्वानां भिन्नभिन्नतया न परामर्शनिष्ठतद्व्यावृत्तिरित्यतो ज्ञानान्येति। पक्ष-विशेषणप्रयोजनमाह प्रमाकरणत्वत्वेति। प्रामाण्यपदार्थत्वसामाना-धिकरण्येन स्वतस्त्वं न साध्यम् तदवच्छेदेन परतस्त्वस्य प्रतिवा-द्यनुमतत्वादतोऽशत इति। तथासति। प्रामाण्यस्य ज्ञानमात्रवृत्ति-प्रामाण्यपदार्थत्वेन पक्षत्वे सति। असम्भवेनेति। उक्तपक्षबोधकप-दे प्रामाण्यपदं व्यर्थम ज्ञानपदं तु ज्ञानकारणरूपैकार्थमिति भ्रम-स्य शक्तिरसम्भवात् तथासति भूरिप्रयोगमालम्ब्य तत्परत्वे नीति-समाधानासङ्गतेः तन्मते ज्ञप्तिरूपार्थान्तराभावात्। ननु प्रामाण्यप-दस्य प्रामाण्यपदार्थे इव-ज्ञानपदस्य ज्ञानपदार्थे लक्षणा उभयो-रपि व्यर्थत्वात् एवं च ज्ञानकरणे लक्ष्यतावच्छेदकवत्तानिर्वाहस्य करणव्युत्पादनात् शङ्का सम्भवेत् तादृशशङ्कां भूरिप्रयोगमाल-म्ब्य परिहर्तुं तादृशफक्किकावतार इत्यतः प्रयोजनवती हि लक्षणा तदभावादत्र न लक्षणेत्याह ज्ञानेति। अंशत इति। ज्ञानत्वेन ज्ञानवि-शेषादेव तत्करणतायाः पक्षबहिर्भावादिति भावः। लक्षणोपगमे बाधकमप्याह ज्ञानेति। ज्ञानपदार्थत्वानपायेनेति। ज्ञानकरणस्येति-शेषः तथाच तद्विशेषणस्य ज्ञानकरणव्यावर्त्तकत्वं नास्तीति भावः।

एकवाक्यतानभिज्ञपरतया ज्ञानपदप्रयोजनमुक्त्वा तादृशो भ्रान्तः कस्यां श्रोतुं नार्हतीति मनसि कृत्य तदभिज्ञपरतया तत्प्रयोजनम-वतारयति प्रवर्त्तकेति। निर्वाच्ययेति। मिश्रादिमतासिद्धयेति यावत्। सा च तदङ्कुरो भूयादितीच्छादिसामग्रीरूपानुव्यवसायविरोधिस-हिता। अनुव्यवसायपदं ज्ञाततालिङ्गकानुमितेरप्युपलक्षकम्। गुरुम-ते अगृहीतज्ञानाप्रसिद्धिमाह गुरुमते इति। स्वप्रकाशसामान्यपि

क्वचिन्न साध्यघटिकेत्याशङ्कते नचेति । नान्यदेति । मिश्राणामिद्य-सामग्र्यसम्भवेपि यद्धर्मप्रकारकज्ञानमेव जायते न तु संज्ञानग्रहः तैः स्वप्रकाशानुपगमादिति द्रष्टव्यम्। तादृशो धर्म इति। यद्धर्मप्रकारकमित्यनुवर्तते तद्धर्मघटिताप्रामाण्यग्रहस्य तत्प्रकारकज्ञानरूपधर्मिसमानकालोत्पत्तिकत्वं ब्रुवन्नाह तद्धर्मेति। भाविन्यतीते वा तद्धर्मप्रकारकग्रहे भ्रमत्वग्रहस्थले तदप्रामाण्याग्राहकतज्ज्ञानग्राहकसामग्री प्रसिद्धैवेत्यालोच्य तत्त्यागः । तद्धर्मघटितभ्रमत्वग्रहः तत्प्रकारकज्ञानोत्तरः अन्यथा भ्रमत्वस्यैवासिद्धेः । अत्राप्रामाण्यं प्रामाण्यविरोधीति वक्ष्यते । एवञ्च तद्धर्मप्रकारकज्ञानानुत्तरं प्रामाण्यविरोधिग्रहसामग्रीं सम्भाव्य निराकरोति वर्त्तमानेति । लौकिकत्वनियामकसन्निकर्षादिघटितसामग्र्यां ज्ञानत्वादिविपरीतविषयिताप्रयोजकत्वचद्दोपसंवलनमप्रसिद्धमिति वक्तुं वर्त्तमानपदम् । माध्यमिकनैय्यायिकमतेपि तादृशसामग्र्यास्तथाविधदोषसंवलनं नास्ति किमु मीमांसकमते इति वक्तुमग्रे सर्वपदम्। विपरीतं तदभावतद्वद्वै । अग्रिमोत्तरस्याप्रामाणिकत्वशङ्कोच्छित्तये शङ्कितुः संमतं दृष्टान्तं प्रथमतो दर्शयति यथेति। दार्ष्टान्तिके सविषयकत्वोपादानं चान्यथेत्याद्यग्रिमयुक्तिलापनार्थम्। दोष इति । दोषस्य प्रमाविरोधित्वात्सप्रकारकत्वग्रहविरोधित्वं तद्विशेषणम्। तत्प्रकारकग्रहप्रतिबन्धकत्वन्तन्तु विरुणद्धि च सामान्याभावबोधोपि सामान्यघटितविशेषवत्ताबुद्धिमिति न्यायात्।गुरूणामेव तादृशसामग्र्यास्त्वित्यत आह अन्यथेति । निर्विषयकत्वेत्युपलक्षणं निष्प्रकारकत्वादीनाम् परन्तु तत्रैवाशङ्क्यमानतया तदनुपादानम् । यदि गुरुमते विषयो भासते तदा प्रकारो न भासते इति वक्तुमनर्हमित्याशयः ।

तदङ्कुरप्रकारप्रकारकज्ञानसमवेतमादायैव साध्यसत्त्वमित्यतस्तदङ्कुरप्रकारकज्ञानमन्तरेणापीति । ज्ञानद्वयमपि तदङ्कुरविशेष्यकमिति भावः । गुरुमते इच्छाद्यधिकरणप्रकारिका अस्ति। उपस्थित्येत्यस्य सम्भव इत्यनेनान्वयः । नियमत इति । अनियमे त्वप्रामाण्याग्राहकसाध्यघटकसामग्री प्रसिद्धा स्यात् । साकाङ्क्षत्वं धर्मिविशेषणम् । आकाङ्क्षा च धर्मधर्मिणोर्विशेषणविशेष्यभावः । असंसर्गग्रहकालीनधर्मधर्मिसमूहालम्बनस्य

वास्तवधर्मधर्मिभावापन्नाविशेष्यविशेषणाविषयकस्य विशिष्टज्ञान-कार्यकारित्ववारणाय तादृशाकाङ्क्षानिरूपकस्यैव तत्कार्यकारित्वमुपेयत इति सामान्यलक्षणायां निर्दोषपुरुषधियागृह्यमाणासंसर्गकशुक्तिरजतत्वादिविषयकज्ञानद्वयस्य न भ्रमत्वमिति स्वयं वक्तव्यम् तथा च साकाङ्क्षत्वकथनं भ्रमत्वनिर्वाहकासंसर्गाग्रहलाभायेति बोध्यम्। ग्राह्यं तद्वति तत्प्रकारकत्वम्। न च गुरूणां तादृशभ्रमस्य प्रामाण्यावगाहित्वेपि तत्सामग्र्याः कथं प्रमाण्याग्राहकत्वम्। अग्रिमयत्तुकारमते प्रामाण्यविरोधित्वस्य प्रमात्वग्रहप्रतिबन्धकग्रहविषयत्वरूपत्वात्। न च दीधितिकृन्मते तत्प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्तिभिन्नत्वरूपं प्रामाण्यविरोधित्वं तद्वद्ग्राहकत्वमप्रामाण्याग्राहकत्वम् तथा च तदङ्कुरप्रकारकज्ञाने यदवच्छेदेन प्रामाण्यं तदवच्छेदेन भ्रमत्वस्यासत्त्वादेव विरोधित्वमनपवादमिति वाच्यम् तन्मते प्रामाण्यग्राहकत्वेन ज्ञानग्रहकत्वेन मदभिमतसिद्धिभिन्नत्वरूपतत्सत्त्वात्।

प्रतियोगितया प्रामाण्यविषयकतायाः ईश्वरज्ञानविषयत्वादाह निर्वाच्येति। अंशतः प्रमापदप्रवृत्तिनिमित्ते पटज्ञानादिप्रामाण्ये। वैशिष्ट्यं सामानाधिकरण्यम्। अत्र पक्षे ज्ञानपदासत्त्वे साध्यस्थज्ञानपदं स्वाश्रयमात्रपरम् तत्सत्त्वे तु स्वाश्रयज्ञानपरमिति। अगत्या मापदार्थपरित्यागादिति मतेपि ज्ञानपदस्य ज्ञानार्थत्वात्। घटितत्वेत्यतितुच्छत्वे हेतुः। पक्षनिष्ठेति। न च न्यायमते घटत्वप्रकारितानिष्ठे तादृशग्राह्यत्वे कथं पक्षनिष्ठाभावप्रतियोगित्वम् पक्षावृत्तित्वे तात्पर्यात् तस्यापि बाधतया तद्व्याप्यवत्स्वतत्त्वस्य प्रतिरोधत्वाच्च। अप्रसिद्धिर्बाधश्चेति। तथा च विधिनिषेधाभिप्रायो वाकारः सिद्धान्तेपि सङ्गत एवेति भावः। द्वितीयपक्षे प्रतियोगिमत्त्वस्य बाधसिद्धसाधनादिकमेवेति सिद्धेः समूहालम्बनरूपत्वात्। आदिना उभयासिद्धिपरिग्रहः। ज्ञानग्राहकसामग्रीत्वेन प्राथमिकज्ञानग्रहजनकसामग्र्याः साध्ये अनन्तर्भावात् यथासन्निवेशे न वैयर्थ्यमिति ज्ञानग्रहत्वव्यापकत्वात्तादृशजन्यग्रहत्वव्यापकत्वस्यान्यत्वादित्यर्थः। इदं तु चिन्त्यम्। स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वं न प्रतियोगितावच्छेदकं स्वाश्रयज्ञानग्रहत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्व-

स्य लघुनस्तत्समनियतत्वात् । तथा च तदवच्छिन्नप्रतियोगिताकाभावोऽप्रसिद्ध एव । न च गुरुधर्मस्याप्यवच्छेदकत्वमतमङ्गीकृत्येदमिति वाच्यम् तथासति ज्ञानग्राहकसामग्रीत्वव्यापकेत्यत्र सामग्रीत्वनिवेशवैयर्थ्याभिधानस्यासङ्गतिः उक्तरीत्या अखण्डाभावघटकतासम्भवादिति । अत्राहुः । गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वमते तादृशसामग्रीजन्यग्रहत्वेन निवेशे तन्निष्ठाभावप्रतियोगिता विशिष्योपादाय तत्तदनवच्छेदकत्वकूटस्य साध्यत्वेऽवैयर्थ्यम् तादृशज्ञानग्रहत्वेनैव प्रवेशे तु सामान्याभाव एवैको लभ्यते इति साध्यभेदनिर्वाहः । नचैवमाभासासङ्गतिः ज्ञानग्रहोत्पत्तिप्रयोजकतावच्छेदकरूपव्यापकतायाऽविशिष्य प्रतियोगिताघटितताया निवेशसम्भवादिति वाच्यम् तदाभासस्य तादृशप्रयोजकत्वव्यापकता निवेशेनैवोपपत्तावनुचितगौरवपरत्वात् तत्प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन भट्टमतसिद्धाभिन्नो ज्ञानविषयको यावान् ग्रह इत्यादिना दीधितिकृतैव सामग्रीजन्यग्रहत्वेन निवेशेऽनुचितगौरवस्याभिधानीयतया इदानीमवैयर्थ्योक्तेरिति । तत्तज्ज्ञानव्यक्तिविषयितावच्छिन्नेति भिन्नत्वे हेतुगर्भविशेषणम् ।

विशिष्टस्य प्रामाण्यविषयित्वस्य व्यापकतायां विषयितानिष्ठत्वं न प्रविष्टमित्याशयेनोद्देश्यासिद्धिमाह गुरुमते इति । ननु मिश्रादिमते ज्ञानग्रहे प्रामाण्याधिकरणत्वं दुर्वारम् घटमहं जानामीत्येवंवदाकारात् तत्र विषयितांशे घटत्वविशिष्टस्य भानात् । न च तत्र घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वभाने प्रकारितानिरूपकस्यैव विशेष्यितानिरूपकस्य जानातेरपि स्वरूपतो भानम् अन्यथा न्यायमते व्यवसायो घटत्वप्रकारको घटविशेष्यकश्चेत्यनुव्यवसाये प्रामाण्याधिकरणतापत्तेः इष्टापत्तौ प्रामाण्ये मीमांसकसाध्यनिर्वाहापत्तिरिति वाच्यम् एवमपि प्रामाण्यस्य घटत्वविशिष्टागर्भत्वात्तदधिकरणताया दुर्वारत्वात् प्रामाण्यस्य घटत्वविशिष्टगर्भत्वाद्घटादेः स्वरूपतो भाने मानाभावाच्च । सत्यम् मिश्रादिमते घटांशे घटत्वाभानेपि प्रामाण्यरूपेणैव ज्ञानभानोपगमात् न्यायमते विशेष्यितांशे पुरोवर्त्तित्वादिना घटस्य भानेन प्रामाण्याधिकरणताया उक्तसम्भवात् । अथवा इतरविशेषणतानापन्नविषयविशेष्यितागर्भं प्रामाण्यं पक्षस्तद्वत्ता च न गुरुभिन्नमते इत्याशयेन गुरुपदम् एतच्च तादृशग्रहत्व-

व्यापकविषयितात्वप्रतियोगित्वमितीति लिखनस्वरसाद्गुरूणां विषयितासाधनमप्यत्रैवेत्याशयेन। यदि चानुमानान्तरेण ज्ञानग्रहेत्यंशेनैव व्यवसाये गुरूणामपि विषयितासिद्धिसम्भवः। किंवा मिश्रादीनां प्राथमिकज्ञानग्रहे विषयितामादायैव निरूपितत्वसम्बन्धेन अधिकरणताविषयित्वयोर्निरूपकताभेदाद्विजातीयनिरूपितत्वसम्बन्धेन वाऽप्रामाण्यविशिष्टसत्त्वात्तदनुरोधेन तद्विवक्षणे गुरूणामप्यनायासत उद्देश्यसिद्धिरित्यतो दूषणान्तरमाह तादृशग्रहेति। न च साध्यनिष्ठाभावप्रतियोगितायामाधेयतानिष्ठायां निरूपितत्वसम्बन्धेनावच्छेदकत्वमित्यनुमानखण्डलिखनवद्विषयितानिष्ठायास्तादृशग्रहनिष्ठाभावप्रतियोगिताया अनवच्छेदकत्वमित्युक्तावपि प्रतियोगितावच्छेदकतापर्याप्तेर्विषयितात्वान्तर्भावेन वाच्यतया गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन केवलविषयस्यैव प्रतियोगितावच्छेदकतया विषयविशिष्टविषयितात्वावच्छिन्नाभावाप्रसिद्धेरिति वाच्यम्, अधिकरणताविषयितयोर्निरूपकत्वस्य भिन्नजातीयतया प्रतियोगिताया विषयितानिष्ठत्वस्य निरूपकत्वविशेषनिवेशार्थत्वात्, न तु उपलक्षणतया तन्निवेश्यावच्छेदकत्वत्वावच्छिन्नप्रतियोगितायाः प्रकारतया साध्यघटकता प्रयोजनाभावात्।

विशेषणान्तर्भावेनेत्यस्य विशेषणे विशेष्ये चेत्यर्थः। किंवा विशेषणावच्छेदेन विशेष्ये इत्यर्थः। आद्यं दूषयति अनुमानादिति। द्वितीयं शङ्कते नचेति। तादृशेति। घटत्वप्रकारत्वघटविशेष्यकत्वावच्छिन्नत्वनिष्ठसमुदायत्वस्यैव तादृशावच्छेदकतावच्छेदकत्वात् तत्समुदायनिरूपिताखण्डविषयिताया एव न्यायमतेऽङ्गीकारात्। एतेन विशिष्टानतिरिक्तत्वेन। केवलघटत्वप्रकारकत्वनिरूपितत्वविशिष्टविषयितात्वे व्यापकतावच्छेदकताया न्यायमतसिद्धत्वेनावच्छिन्नान्तर्विशिष्टनिरूपितत्वविशिष्टविषयितात्वे तत्साधनेऽपि सिद्धसाधनात् घटत्वप्रकारकत्वस्य वस्तुतोऽवच्छिन्नत्वाश्रयत्वात्। नवेति। अत्र प्रामाण्यं पक्षप्रामाण्यमिति द्वितीयान्तपाठे पक्षीकृत्येत्यनुवर्त्तते। विधौ बाधवारणाय प्रामाण्यविषयतानिवेशः। न्यायमते अप्रसिद्धिवारणाय घटत्वविषयितानिवेशः व्यापके व्यर्थविशेषणत्वस्यादूषणत्वात्। न्यायमते घटत्वप्रकारकत्वविषयितात्वे व्यापकतावच्छेदकत्वस्य निर्विवादतया विशिष्टानति-

रिक्ततया विशिष्टप्रामाण्यविषयितात्वेऽपि तादित्यन्यतरानुधावने सिद्धसाधनमिति भावः । शरीरविशेषादेरप्रामाण्यादाह शरीरेन्द्रियादेः । गुरुमतेति । गुरुमते स्वप्रकाशे ज्ञाने सर्वत्रैव जीवात्मनः प्रकाशात्तादृशयावद्ग्राह्यत्वप्रसिद्धेरात्मत्वे सत्त्वात् ज्ञातेत्यादि । गुरूणां स्वसिद्धव्यवसायात्मकज्ञानग्रहादन्यैव भट्टमतसिद्धज्ञाततालिङ्गकानुमितिस्वीकारप्रसङ्गादिति । एवं मिश्राणामपि । एकरूपेणेति । यद्रूपेण ज्ञानग्राहकत्वाभ्युपगमो भट्टस्य तद्रूपेण तस्य प्रामाण्याग्राहकत्वाभ्युपगमस्तद्रूपावच्छिन्नभिन्नत्वं सामग्रीविशेषणम् तथाच ज्ञाततालिङ्गकानुमितिसामग्रीत्वेन ज्ञानग्राहकत्वाभ्युपगमो भट्टस्य तेन ज्ञानग्राहकत्वाभ्युपगमो भट्टस्य तेन प्रामाण्याग्राहकत्वाभ्युपगमो न भट्टस्य व्यवसायादिसामग्रीत्वेन तदभ्युपगमो भट्टस्य तेन ज्ञानग्राहकत्वाभ्युपगमो न तस्येति भावः । शब्दाजन्येति । तथा च तादृशयोग्यताज्ञानसाधारणसमुदायत्वं न कार्यताज्ञानग्राहकतावच्छेदकत्वेन भट्टाभ्युपगतमिति भावः । सामग्रीनिवेशपक्षे व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकतद्भिन्नत्वाङ्गीकारेणैवोपपत्तेः कथञ्चिदिति । नैयायिकादीति । आदीति । आदिना भट्टादिपरिग्रहः । गुणाभिन्नामिति । न च तद्वति तत्प्रकारकत्वाग्राहकत्वोपादानेपि घटत्वप्रकारकत्वमात्रेण ज्ञानग्राहकसामग्रीव्यावर्तनाज्ज्ञानत्वे प्रसिद्धिसम्भवाज्ज्ञानत्वविशिष्टग्राहकत्वविवक्षावैयर्थ्यशङ्काऽवतरत्येवेति वाच्यम् तद्वति तत्प्रकारकत्वमात्रेण ज्ञानग्रहे ज्ञानत्वाभानसम्भवात् । नैयायिकमतसिद्धप्रथमिकज्ञानग्राहकसामग्र्याश्च ज्ञानग्राहकत्वेन भट्टमतासिद्धतया साध्यघटकत्वेन परतस्त्वसाधनसम्भवात् । तथा चेति । घटत्वप्रकारतामात्रे रङ्गज्ञानग्राहकसामग्र्या न प्रत्यक्षसामग्रीत्वं ज्ञानत्वभावप्रसङ्गाद् । अन्यसामग्र्यास्तु भट्टमतसिद्धत्वात्तेन वारणादिति भावः । प्रमापदोपस्थापितप्रामाण्यस्य शाब्दबोधविषयत्वस्यापि सम्भवादाह विशेषैरिति । घटत्वज्ञानं सविशेष्यकमित्यादिभिरित्यर्थः । तावतैवेति । यथाश्रुततदप्रामाण्याग्राहकत्वनिवेशपक्षे घटत्वप्रकारकमात्रेण घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वमात्रेण च ज्ञानग्रहस्य साध्यघटकतया बाधः

स्यादिति ज्ञानत्वविशिष्टग्राहकत्वपर्यन्तविवक्षाऽऽवश्यकीति ज्ञानत्वे विधिप्रसिद्धिः स्यात् कथितविशेषणोपादानपक्षे च तादृशज्ञानग्रहयोः साध्याघटकतया बाधस्यैवासत्त्वात्तद्विवक्षावैयर्थ्यम् । नापि ज्ञानत्वे विधिप्रसिद्धिसम्पादनार्थं तदिति सुवचम् । तदविवक्षणेपि घटत्वादौ विधिप्रसिद्धिसम्भवादिति भावः । ननु ग्राह्यत्वं पुरोवर्तिविशेष्यकत्वनिष्ठधर्मितावच्छेदकताकमेव साध्यमिति सिद्धान्तान्न घटत्वादौ विधिप्रसिद्धिरस्ति । किञ्च तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वघटितकथितविशेषणोपादाने ज्ञानत्वविशिष्टग्राहकत्वाविवक्षणेपि ज्ञानत्वे प्रसिद्धे दीधितिकृतां ज्ञानत्वविशिष्टेत्यादिलिखनस्यानवधानमूलकत्वप्रसङ्ग इत्यत आह वस्तुतस्त्विति । स्वतोऽग्राह्यतया प्राथमिकज्ञानग्रहाविषयतया । बाधादिति । अथ तादृशप्रामाण्यत्वविशिष्टं प्रामाण्यत्वाश्रयमेवेति कथमेतत्? अनुव्यवसायादौ स्वरूपतो ज्ञानत्वभानेन तत्र स्वतोग्राह्यत्वानपायात् अनुमानात्पक्षतावच्छेदके साध्यसिद्धेर्दूषितत्वादिति चेन्न तद्वति तत्प्रकारकत्वविशिष्टजातिप्रतियोगिकविषयितासाधारणरूपेणापि प्रामाण्यविषयितायास्तादृशग्रहत्वव्यापकतासम्भवादर्थान्तरस्य पटत्वप्रकारकज्ञानत्वविषयित्वे अनुव्यवसायादिसामग्रीजन्यग्रहत्वाव्यापकत्वात्सिद्धसाधनस्य च वारणाय प्रामाण्यत्वावच्छिन्नग्राह्यत्वं विवक्षणीयम् । तत्र बाधभयेन ज्ञानत्वं न प्रवेश्यमित्याशयात् । न चैवं न्यायमते साध्याप्रसिद्धिरुक्तैवेति वाच्यम् तादृशव्यापकतायां घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वत्वावच्छिन्नविषयित्ववृत्तित्वसाधनेऽपि नैयायिकानां कृतकृत्यत्वात् मीमांसकसाध्ये वा तत्र तादृशविषयितावृत्तित्वमेवेति न कोपि दोषः । अथवा तादृशग्रहनिष्ठाभावप्रतियोगितायां विशिष्टप्रामाण्यविषयितात्वानवच्छिन्नस्य मीमांसकसाध्यतयाऽभिधानात्तत्परमेवेदम् । वस्तुतस्तु विशिष्टशुद्धयोरभेदाद्घटत्वप्रकारकत्वविशिष्टज्ञानत्वविषयितात्वेन व्यापकतामादाय सिद्धसाधनवारणाय विशिष्टप्रामाण्यत्वे स्वरूपसम्बन्धरूपावच्छेदकत्वसाधनमपि मीमांसकाभिप्रेतम् । न्यायमते शुद्धघटत्वप्रकारकत्वत्वस्यैव पुरोवर्तिविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वत्वस्य वा प्रकारकतावच्छेदकत्वान्न सिद्धसाधनम् । पुरोवर्तिविशेष्यकत्वावच्छिन्नप्रकारतावच्छेदकत्वे साध्ये एतत् । यदि तु पुरोवर्तिविशेष्यक-

त्वत्वावच्छिन्नप्रकारतावच्छेदकत्वं साध्यते तदापि न क्षतिः पुरोवर्त्तिविशेष्यकत्वावच्छिन्नीयत्वविशिष्टीयविषयितायाः अव्यापकत्वे तु धर्मितावच्छेदकप्रकारभावापन्नघटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वपुरोवर्तिविशेष्यकत्वावच्छिन्नत्वोभयत्रैव तत्साधनान्न सिद्धसाधनम् । तथाविधतद्वतितत्प्रकारकत्वत्वज्ञानत्वत्वयोस्तत्साधने तु बाध इति । वस्तुतस्तु गुर्वादिमते तादृशसामग्रीजन्यग्रहे ज्ञानत्वत्वाभावेन पक्षतावच्छेदकविशिष्टविषयित्वाभावसत्त्वाद्बाधः उभयाभावादिकमादाय व्यापकताभङ्गवारणाय स्वविषयितात्वावच्छेदेन व्यापकतायाः साध्यघटकत्वात्, प्रामाण्यविषयितात्वस्य चाननुगतत्वात् । धर्मितावच्छेदकप्रकारभावापन्नस्वरूपतो ज्ञानत्वतद्वति तत्प्रकारकत्वोभयं प्रामाण्यम् तद्ग्राहिका च तद्वति तत्प्रकारकगुणाभिन्नं ज्ञानमिति शाब्दसामग्रीति तद्रीत्या बाधासम्भवाज्ज्ञानत्वत्वस्य परतो ग्राह्यत्वानुधावनमिति सकलग्रन्थसङ्गतिः । तद्वति तत्प्रकारकगुणाभिन्नमित्यादावेतद्रीत्या बाधासत्त्वादाह तथाचेति । प्रामाण्यत्वेन पक्षतापक्षे यथाश्रुतार्थत्वमाविष्कर्तुं तद्वतीत्यादि दीर्घाभिधानम् । अगत्येति । न च तद्वति तत्प्रकारकत्वविशिष्टत्वेन रूपेण ज्ञानत्वस्य विशिष्टप्रामाण्यघटकता निर्वहेत् ज्ञानत्वत्वाप्रवेशादिति प्रमापदार्थत्यागोऽनुचित इति वाच्यम् ज्ञानत्वे सामानाधिकरण्यसम्बन्धेन तद्वति तत्प्रकारकत्वस्यानिविष्टत्वात् ज्ञानत्वानवच्छिन्नविशेषणतापन्नप्रमापदार्थतावच्छेदकस्य पक्षत्वामित्यत्र तत्तात्पर्यम् । अग्राहकत्वेनेत्यभिधातव्ये ग्राहकत्वेत्यभिधानमाहुरित्यस्वरसः । ननु विरोधित्वं तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वं तच्चाग्रे दूषणीयमतो व्याचष्टे तत्प्रामाण्येति । तत्प्रामाण्यावच्छेदकावच्छिन्नं यत्तत्प्रामाण्याधिकरणवृत्तित्वं तदभावः तेन प्रमात्वाभावभ्रमत्वनिष्प्रकारकत्वाद्यननुगततत्प्रामाण्यावच्छेदकतापर्याप्त्यधिकरणपर्याप्तावच्छेदकताकत्वमवच्छिन्नत्वान्तार्थः तेन जातित्ववति जातित्वप्रकारत्वनिष्प्रकारकत्वयोर्घटत्वरूपैकावच्छेदेन इति सत्त्वेपि न क्षतिः जातित्वविशिष्टे प्रामाण्यावच्छेदकतायाः स्वरूपतो घटत्वे निष्प्रकारकत्वावच्छेदकतायाश्चोपगमात् । अथ वृत्तितायां तत्प्रामाण्याधिकरणीयत्वं किमर्थम् । शृणु पटत्वेन पटावगाहिप्रमात्मके पटत्वेन घटस्य घटत्वेन च पटस्यावगाहिनि

पटावच्छेदेन घटत्वप्रकारके भ्रमे घटत्वप्रकारकत्वाभावस्य प्रामाण्याभावस्य च घटावच्छेदेन वृत्तितया प्रामाण्यविरोधितापत्तिरतस्तन्दावश्यकम् । पटत्वगर्भप्रामाण्यवद्वृत्तित्वात्तत्र तत्पदं च । तत्रैव पटस्य पटत्वघटितप्रामाण्यावच्छेदकतया घटत्वघटितभ्रमत्वादेस्तद्विरोधित्वानुपपत्तिरतः प्रथमतत्पदम् । केवलभ्रमनिष्ठभ्रमत्वाद्यधिकरणताया उभयाभाववत्त्वाद्भ्रमत्वादेः प्रामाण्यविरोधित्वापत्तिस्तादृशभ्रमत्वाद्यधिकरणता न क्वचिदपि प्रमायां तादृशभ्रमत्वादौ तदापत्तिरिति प्रमानिष्ठेति । प्रमापदमपि तत्प्रामाण्याश्रयपरम् अन्यथा पटत्वादिगर्भप्रामाण्याश्रयनिष्ठप्रकृतभ्रमत्वाद्यधिकरणतायास्तादृशोभयाभाववत्त्वाद्भ्रमत्वादेः प्रामाण्याविरोधित्वापत्तेः । एवं भ्रमानात्मकप्रमानिष्ठप्रमात्वाधिकरणतापि न निरवच्छिन्ना तत्र प्रकारावच्छेदेन प्रमात्वाभावसत्त्वेन तस्या विशेष्यावच्छिन्नत्वादतो निरवच्छिन्नत्वमात्रं विहायोभयाभावनिवेशः । एवञ्च घटत्वादेरपि प्रामाण्यविरोधित्वं सम्पद्यते । यद्यपि तत्प्रमात्वभिन्नत्वे सति निरवच्छिन्नप्रमानिष्ठाधिकरणताकान्यत्वं प्रमात्वविरोधित्वं सुवचम् घटत्वादिना घटपटादिविषयकज्ञाने भ्रमत्वाधिकरणतायाः प्रमानिष्ठत्वाद्दोष इति निरवच्छिन्नत्वनिवेशः । प्रमापदं च प्रकृतप्रामाण्याश्रयपरम् तेन पटत्वादिप्रमानिष्ठप्रकृतप्रमात्वाभावाधिकरणताया निरवच्छिन्नत्वेपि न दोषः । समूहालम्बनप्रमायामपि उक्तरीत्या घटावच्छेदेनैव प्रमात्वाधिकरणतासत्त्वात्प्रमात्वस्यापि तद्विरोधितापत्तिरतः सत्यन्तम् । तथापि घटविशेष्यकत्वं घटावच्छेदेन नतु घटत्वावच्छेदेनेति प्रत्ययात्तदधिकरणताया अवच्छिन्नतया तस्य प्रमात्वविरोधितापत्तिरतस्तत्त्यागः । सिद्धान्ते च तदधिकरणतायामुभयाभावसत्त्वान्न दोषः । यद्घटविशेष्यकत्वाधिकरणताप्रमाभ्रमोभयसमूहालम्बन एव तत्र तस्यास्तदभावाधिकरणतावद्व्याप्यवृत्तितयाऽवच्छिन्नत्वात्तद्घटविशेष्यकत्वस्य प्रमात्वविरोधितापत्तिरिति वा तत्त्याग इति शिवम् । घटमहं जानामीति ज्ञानत्वाविषयकग्रहसामग्र्या एव साध्यघटकत्वे त्वाह पुर इति । वस्तुतः पुरोवर्त्तिविशेष्यकत्वावच्छिन्ने ज्ञानत्ववैशिष्ट्यग्राहकसामग्र्याः साध्येऽन्तर्भाव्यतया बाधद्वयप्रदर्शनाय तदुभयोपादानम् । पृथगेव तदुभयभेदनिवेशान्न दोष

इति चेदकृत्यकल्पनापत्तेः।

सिद्धान्तोपरि शङ्कते नचेति। ननु भवतु मिश्रमते लौकिकविषयतायाः प्रतिबध्यतानवच्छेदकतयोपपत्तिः गुरुमते व्यवसायोत्पादकसामग्रीकाले ज्ञानत्वाद्यवच्छेदेन तद्वति तत्प्रकारकत्वाभावज्ञानसत्त्वे व्यवसायात्मकज्ञानत्वज्ञानस्य भट्टमते ज्ञाततालिङ्गकानुमितिसामग्रीकाले तज्ज्ञानसत्त्वे तादृशानुमितिरूपज्ञानत्वग्रहस्य च लौकिकान्यप्रामाण्यविषयितावि(र)हितया नोपपत्तिः लौकिकप्रामाण्यभानप्रयोजिकायाः मनःसंयुक्तात्मसमवेतविशेषणताया व्यवसायानुदयेन गुरूणामसत्त्वादनुमितौ सन्निकर्षस्यान्यथासिद्धेश्चेत्याशङ्कायामाह मिश्रातिरिक्तेति। यादृशस्थले प्रामाण्यस्य मिश्राणां भानमभानं वा तादृशस्थले गुरूणां भट्टानां च तद्भानाभाने। यादृशश्च प्रयोजकं लौकिकप्रामाण्यविषयित्वे मिश्रैरुपेयम्, गुरुभिर्भट्टैरपि तत्समं तत्र प्रयोजकमुपेयम् अन्यथा फलसाम्यानुपपत्तेः। एवं च यदि मिश्रस्य लौकिकत्वं लौकिकसन्निकर्षाधीनत्वं तदा गुरोर्व्यवसायसामग्र्यधीनत्वं भट्टस्य च ज्ञाततापरामर्शाधीनत्वम्, यदि मिश्राणां विविषयताविशेषत्वरूपम् तदा गुरूणां भट्टानां च तदेवेति। स्वप्रकाश्यादिकं पुनर्यथामतं विशेषः विषयनिरूप्यत्वमर्यादोपबृंहितायां सामग्र्यांलौकिकप्रामाण्यभानसामग्रीतुल्यतेति मिश्रटिप्पण्यामप्युक्तम्। भ्रमत्वेति। ग्राह्यप्रमात्वाभावग्रहकाले चानुव्यवसायादेर्लौकिकप्रामाण्यावगाहिता नेत्याशयः। भ्रमत्वादिग्रहकाले इत्यादिपदघटितपाठः क्वचित् स च प्रमात्वाभाव ऐन्द्रियकः भ्रमत्वमतीन्द्रियमिति मतेऽशुद्धः। यदि चेत्यादिनोक्तं बाधवारणमेवाङ्गीकृत्य तदप्रामाण्याग्राहकत्वस्य कृत्यमाह भ्रमेति। अनुभवानुरोधेन धर्मितावच्छेदकं लौकिकत्वादिकं वा निवेश्यासाधारणधर्मविशेषज्ञाने दोषघटितसामग्र्या दोषस्य वा विरोधित्वमुपेयमिति भावः। साधारणस्येदं रजतमिति ज्ञाने भानादसाधारणेति। अयं शंखः पीत इत्यादौ पुरोवर्तित्वशङ्खत्वयोः साधारणत्वेप्येतच्छङ्खत्वभानाद्विशेषेति। दोषघटितारोपसामग्र्या एव इह प्रतिबन्धकत्वमित्यस्य फलमाह अविरोधीति। तथाच भवतां ज्ञानत्वादिभेदनिवेशे विशेषणपूरणापत्तिरिति भावः। अतीन्द्रियतयेति। रजतज्ञान-

वीनहमिति भ्रमानुव्यवसाये तदभाववति तत्प्रकारकत्वरूपभ्रमत्वं न प्रत्यक्षम् तदभावरूपविशेषणग्राहकसामग्रीविरहात् । तथाचेति । न केवलं दोषघटितसामग्र्या एव प्रमात्वलौकिकज्ञानविरोधिता किन्तु साक्षात्कारित्वग्रहजनिकाया एवेत्यर्थः । यादृशेति । पीतः शङ्ख इत्यादौ श्वैत्यादिलौकिकभानवारणाय साक्षात्कारिताग्रहप्रयोजकदोषविशेषघटितसामग्र्या एव लौकिकप्रत्यक्षसामग्र्यपेक्षया बलवत्त्वस्य "सत्प्रतिपक्षे साक्षात्कारिणि भ्रमे" इति पङ्क्तौ च दीधितिकारैर्वक्तव्यत्वादिति भावः । संशयेति । शुक्तित्वादिधर्मितावच्छेदककरजतत्वादिसंशयवारणाय लौकिकसन्निकर्षादिव दोषविशेषाश्च कोपि संशयः तस्य विपरीतभानाविरोधित्वादिति दोषसामान्यस्यैवासाधारणधर्मभानाविरोधित्वमास्थेयमिति भावः । एवं विपर्ययजनकदोषेपि । अत्र मीमांसकानां प्रामाण्यसंशयानुरोधेन संशयजनकदोषस्य प्रमात्वलौकिकभानाविरोधित्वमावश्यकम् स च दोषः प्रमात्वलौकिकभानं स्वोत्पत्तिसमयेपि प्रतिबध्नाति अन्यथा तेषां प्रमात्वनिश्चयनैयत्यप्रसङ्गेन तत्संशयोच्छेदापातादिति । विपर्ययेति शुक्तित्वादिधर्मितावच्छेदककरजतत्वादिविपर्ययवारणाय । अत्र भ्रमत्वग्राहकसामग्र्याः प्रमात्वग्राहकत्वे न कापि क्षतिः भावद्वयकोटिकज्ञानस्य संशयत्वाभावात् भ्रमत्वस्य स्वतोऽविरोधित्वाच्च । वस्तुतस्तु स्मर्यमाणारोप एव दोषः असाधारणधर्मज्ञानविरोधी न त्वनुभूयमानारोपो तदानीं शुक्तीरजतमिति ज्ञानस्येष्टत्वादित्याशयेनाह अस्तुवेति । प्रमात्वघटकप्रकारिताविशेष्यितयोरिव भ्रमत्वघटकतदुभयस्यानुपस्थितस्य प्रकारत्वेपि तदंशे घटघटत्वयोरिव घटत्वतदभावयोरपि उपनीतभानं वाच्यम् तत्रानाहार्यभ्रमे तदभावज्ञानासम्भवाद्भ्रमत्वाग्रहेपि आहार्येण तदभावाधिकरणरूपविशेषणज्ञानसम्पादनात्तथाविधविशेषणज्ञानसम्पादकसामग्रीवशाद्वा मनःसंयुक्तात्मसमवेतविशेषतासन्निकर्षेणाहार्यं भ्रमत्वलौकिकप्रत्यक्षमङ्गीकुरुते वस्तुतास्त्विति । तथा च भ्रमत्वभ्रमजनकदोषः साक्षात्कारित्वग्रहप्रयोजकः सम्भवत्येवेति भावः । तद्विशेष्यकज्ञानेति । पुरोवर्तिविशेष्यकज्ञानेत्यर्थः । प्रमापदेन तद्वति तत्प्रकारकज्ञानत्वं लभ्यत इत्युक्त्या तथाविधज्ञानवृत्तितत्प्रकारकत्वलाभः तेन ज्ञानेत्यस्य त्यागेपि न क्षतिः । तद्विशेष्यकत्वेति । ग्राह्यतायां पुरोव-

र्तिविशेष्यकत्वनिष्ठधर्मितावच्छेदकताकत्वं विशेषणम् तेन निर्धर्मि-
तावच्छेदकरूपप्रामाण्यभानसामग्र्या न साध्यघटकत्वम् । घटत्वादि-
कमिति । घटत्वाद्युपेक्षैव ताहशविशेषणनिवेशव्यञ्जिकेति भावः ।
अनियमादिति । ज्ञानत्वमात्रस्य पुरोवर्तिविशेष्यकत्वमात्रस्य एकत्र
द्वयमिनिरीत्या तदुभयस्य वा भानसम्भवादिति भावः । तदिति ।
पुरोवर्तिविशेष्यकत्वनिष्ठधर्मितावच्छेदकतानिरूपितसमवायसम्ब-
न्धावच्छिन्नज्ञानत्वनिष्ठप्रकारताप्रयोजकत्वेनैकविशिष्टेऽपरवैशिष्ट्य-
ग्राहकसामग्र्या एवेत्यर्थः । साक्षादिति । प्रमात्वनिश्चयत्वव्यापक-
प्रतिवन्धकताकत्वमर्थः । न च प्रमात्वनिश्चयप्रतिवन्धकत्वमेव
सम्यक् घटत्वादिमत्ताज्ञानं प्रति घटत्वाभावावच्छेदेन गृहीतप्रमा-
त्वज्ञानस्य प्रतिवन्धकत्वात् घटत्वादेः सङ्ग्रहापातात् । वस्तुतस्तु प्रमा-
त्वज्ञानं प्रति तदभावावच्छेदकादिधर्मदर्शनतया घटत्वादिज्ञानस्य
प्रतिवन्धकत्वेऽपि तद्रूपावच्छिन्नत्वस्यैव साक्षात्पदलभ्यतया घटत्वा-
दिवारणं कार्यम् । एतेन प्रमात्वव्यापकाभावेऽस्याऽपरिग्रहापत्तिः त-
ज्ज्ञानस्य प्रमात्वनिश्चयाप्रतिबध्यत्वादिति समाहितम् । उक्तयुक्त्येति ।
अत्र प्रमात्वग्रहप्रतिवन्धकतायां यदि ज्ञानवैशिष्ट्यानवच्छिन्नत्वं नि-
वेश्यते तदा आरोपसामग्र्याः भ्रमत्वारोपविषयनिष्ठासाधारणधर्म-
लौकिकभानविरोधितामतेऽपि न भ्रमत्वापरिग्रहः भ्रमत्वविषयितान-
वच्छिन्नत्वज्ञानवैशिष्ट्यावच्छिन्नत्वोभयाभावस्यैव तेनोक्तत्वात् ।
प्रमात्वव्यापकाभाववत्ताज्ञानस्य व्याप्त्यनुगमग्रन्थे ज्ञानवैशिष्ट्यान-
वच्छिन्नप्रतिबन्धकत्वस्य वचनादिति द्रष्टव्यम् । निष्प्रकारत्वादेः स-
कलप्रामाण्यविरोधित्वेऽपि व्यवसायांशे तज्ज्ञानस्य प्राङ्निराकरणादाह
तादृशेति । प्रमात्वस्य सामान्यघटितविशेषतया निष्प्रकारकत्वादेः
तद्विरोधित्वम् प्रतिबन्धकताघटितविरोधित्वस्य दीधितितात्पर्ये प्रो-
क्तदूषणासङ्गतिः आरोपसामग्र्या आरोपविषये असाधारणधर्म-
लौकिकभानविरोधितया भ्रमत्वापरिग्रहप्रसङ्गश्चेत्यत आह प्रमा-
त्वेति । मीमांसकैर्निर्विकल्पकानुपगमान्निष्प्रकारकत्वस्य ज्ञा-
नवृत्तित्वाधिकव्याप्यत्वमाह घटइति । निष्प्रकारकत्वादीत्यादिपद-
ग्राह्यमाह तत्सम्बन्धेति । तदीयत्वम् । पक्षघटकज्ञानीयत्वम् । नि-
ष्प्रकारकत्वादेः सकलप्रामाण्यविरोधितयेति ।

अथैवमपि घटत्वादेः कथं त्यागः ? अथ मिश्रैस्तदप्रामाण्यग्रा-

हकत्वं प्रामाण्यग्रहप्रतिबन्धकज्ञानाजनकत्वमेवोपेयं न तु ग्रन्थकारो-
क्तम् तथासति यत्र वास्तवे घटत्ववति घटत्वप्रकारकत्वे घटत्वाभा-
ववति घटत्वप्रकारकत्वमारोपितं न तु ज्ञानेऽप्रामाण्यम् तत्र तथावि-
धवास्तवभ्रमत्वाग्राहकतया तत्सामग्रीसङ्ग्रहेण बाधापत्तेरिति चेन्न
भ्रमत्वज्ञानस्यापि प्रमात्वाभावग्रहाविशिष्टस्यैव प्रमात्वग्रहप्रतिबन्ध-
कतया तादृशग्रहासमवहितभ्रमत्वारोपसामग्र्या ज्ञानग्राहिकया
दोषघटिततया प्रामाण्याग्रहेण बाधापत्तेः । अथैतद्भयेन प्रामाण्य-
ग्रहप्रतिबन्धकज्ञानविषयाविषयकग्रहजनकसामग्र्यसमवहितत्वम-
प्रामाण्याग्राहकत्वं वदामः । एवञ्च केवलभ्रमत्वज्ञानस्याप्रतिबन्ध-
कत्वेपि भ्रमत्वावच्छेदेन प्रमात्वाभावग्रहादिविशिष्टकालान्त-
रीणप्रतिबन्धकज्ञानविषयभ्रमत्वविषयकत्वेन तत्सामग्रीसहित-
सामग्र्याः साध्याघटकत्वान्न दोषः । प्रतिबन्धकग्रहाविषयावि-
षयकत्वं च यत्प्रकारकत्वेन प्रामाण्यग्रहविरोधिताज्ञानांशे तत्प्र-
कारकत्वम् तेन घटत्वाभाववतीत्यादिभ्रमत्वज्ञानप्रामा-
ण्यग्रहं प्रति या तादृशभ्रमत्वघटितप्रामाण्यग्रहस्य प्रतिब-
न्धकता तदवच्छेदककोटिप्रविष्टप्रकारताश्रयघटत्वाभावादिग्रा-
हकत्वेपि न तत्सामग्र्या असङ्ग्रह इति चेन्न एवमपि तद्वद्विशे-
ष्यकत्वावच्छिन्नस्य तत्प्रकारकत्वस्य तदभाववद्विशेष्यकत्वा-
वच्छिन्नत्वेन या प्रकारता तस्या अपि प्रमात्वग्रहप्रतिबन्धकता-
वच्छेदकतया प्रामाण्यग्रहमात्रस्यैव तादृशप्रकारताश्रयप्रकारकतया
अप्रसिद्धेर्दुर्वारत्वात् । न च यद्धर्मपर्याप्तावच्छेदकताकप्रकारता
प्रतिबन्धकतावच्छेदिका ज्ञानांशे तद्धर्मावच्छिन्नप्रकारकग्रहनिवे-
शान्नायं दोष इति वाच्यम् । यत्र तद्वति तदभावारोपरूपः तद्व-
द्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वावगाही तदभाववति तत्प्र-
कारकमित्रामिति ग्रहस्तत्र तदभावविशिष्टतद्वतोऽप्रसिध्या तद्-
घटितप्रकारतावच्छेदकतापर्याप्त्याश्रयाप्रसिद्धेर्यत्तच्छब्देनोपादानास-
म्भवात्तत्स्थलीयसामग्रीमादाय बाधापत्तेः । तस्मात् मिश्राणाम-
पि एकावच्छेदेनैकत्रावर्तमानत्वमेव विरोधित्वम् तच्च घटत्वादि-
साधारणमिति चेत्सत्यम् यद्रूपावच्छिन्नस्य प्रमात्वेन सहानव-
स्थानं तद्रूपावच्छिन्नाप्रकारकत्वं न तत् उक्तदोषात् । किन्तु
प्रकृतप्रामाण्यभाने नियमतो यत्र यद्भासते तदंशे तद्विरोध्यवगाही

ग्रह एवाप्रामाण्यग्रहपदार्थः । विरोधश्च सहानवस्थानम् तावतैव च दर्शितसकलारोपसामग्रीव्यावृत्तिः । एवञ्च यदि प्रकृतप्रामाण्यभाने नियमतो यद्यद्भासते तद्विरोधित्वं तद्घटकत्वस्त्वभावरूपं निवेश्य तदवगाहित्वं निवेश्यते तदा घटत्वस्य वारणासम्भवात्तदपेक्षा घटत्वाभावनिष्प्रकारत्वादिसङ्ग्रहश्च । भ्रमत्वज्ञानस्य तु नासङ्ग्रहः तत्र विशेष्यितानिरूपके घटत्वाभावरूपाविरोधिविषयकत्वादित्याशयः । तदीयप्रामाण्यविरोधिज्ञानवृत्तिधर्माग्राहकत्वपक्षे घटत्वनिरासे वा उक्तदोषः । निष्प्रकारकत्वघटितप्रामाण्यपक्षके साध्यानिर्वाहः । लुप्तेति । अत्र प्रकृतप्रामाण्यभाने नियमतो यत्र यद्भासते तदंशे तद्विरोध्यवगाहित्वमप्रामाण्यग्राहकत्वमिति मिश्रटिप्पणीमते तत्प्रामाण्यावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभावविशिष्टप्रामाण्यघटकतत्तदधिकरणनिष्ठाधिकरणताकान्यत्वं तत्प्रामाण्यविरोधित्वम् घटत्वाभावाधिकरणता न प्रामाण्यघटके घटरूपेऽधिकरणे, घटत्वाभाववद्विशेष्यकत्वावच्छिन्नाधिकरणता च न तादृशघटत्वप्रकारकत्वरूपाधिकरणे इति तयोरनवच्छिन्नत्वेन, एवं भ्रमत्वाद्यधिकरणता तत्घटकप्रमारूपाधिकरणे तदुभयवत्त्वेति तेषां प्रामाण्यविरोधित्वम् । एवं प्रामाण्यविरोधित्वं निरुच्य तत्तदंशे तदग्राहकत्वं निवेश्यम् । दीधितिटिप्पणीमते च यादृशदोषेणाप्रामाण्यघटकघटे घटत्वाभावो घटत्वप्रकारकत्वे तद्विशेष्यकत्वानवच्छिन्नत्वम् आरोप्यते तादृशदोषवशाद्बाधकाभावात्तत्र विशिष्टभ्रमत्वस्याप्यारोप उपेतव्य इति दीधितिकाराणां तत्पदं यथाश्रुतमेव सम्यक् । यद्यपि च घटपटयोर्घटाविति व्यवसाये घटमहं जानामीति प्रत्यक्षसामग्रीं घटांशे प्रामाण्यग्राहकतयाऽवश्यं वाच्या तस्याश्च पटांशे घटत्वघटितभ्रमत्वारोपजनकतया तदनुपपत्तिः तद्व्यवसायांशे एव भ्रमत्वग्राहकत्वादिति प्रकृतप्रामाण्यावच्छेदकयत्किञ्चिदंशावच्छिन्नत्वावगाहितया प्रकृतप्रामाण्यविरोधिग्रहाजनकत्वपर्यन्तं लब्धव्यमिति तत्पदमंशपरमिति मिश्राणां भाषणम् । तदप्यनुपादेयम् तादृशसामग्र्याः साध्यघटकत्वेऽप्यक्षतेः असङ्कीर्णव्यवसायघटितसामग्र्या एव साध्यघटकतया स्वतस्त्वनिर्वाहसम्भवादिति परैरपरिशीलितः पन्थाः ।

जनकत्वेन ग्रहनिवेशं दूषयति एतेनेति । व्यवहारजनकत्वं यदि

शक्तिभ्रमाद्यजन्यतज्जन्यबोधसमानाकारकत्वपर्यं तदाप्याह अप्रमा-शङ्केनेति । जनकत्वेन ग्रहनिवेशमतमाह केचिदित्विति । स्वतन्त्रेति । स्वातन्त्र्यं च नेतरविशेषणत्वं किन्त्वनुभवविशेषणत्वम् । सचेत्या-दिलिखनबीजमाह एतेनेति । तदप्रामाण्याग्राहकपदस्याप्रामाण्य-निरूपिततद्विषयताकाग्रहार्थकत्वेनेत्यर्थः । समवधानविवक्षाबीजम-नुपपत्तेरित्यन्तम् । स्वयं तद्विशेष्यकाप्रामाण्यप्रकारकग्रहस्य गुरुमते-ऽप्रसिध्याऽप्रामाण्यसाकाङ्क्षतद्विशेष्यकग्रहपरत्वेन तदप्रामाण्यग्रह-पदं व्याख्यातम् । मिश्रास्तु असंसर्गाग्रहघटिताप्रामाण्यग्रहान्तार्थपर-त्वेनेति विशेषः उपस्थितज्ञानरूपधर्मिनिष्ठतत्संसर्गावच्छिन्ना-भावप्रतियोगितया तदाऽगृह्यमाणस्वतन्त्राप्रामाण्येत्याद्यर्थः । स्वा-तन्त्र्यमप्रामाण्यस्य कालश्च गृह्यमाणत्वाभावस्य विशेषणम् । अनु-पादेयत्वे गौरवं बीजं नत्वसम्भव इत्याशयेनाह मिश्रमतेचेति। समवहितत्वं तद्वत्क्षणद्वयवृत्तित्वम् स्वप्रतियोगित्वस्ववृत्तिप्रतियो-गिकध्वंसवत्त्वोभयसम्बन्धेन ध्वंसवदन्यत्वं क्षणद्वयानुगमकम् । तद्व-त्क्षणवृत्तित्वं तु न समवहितत्वमित्याह क्रमिकेति ।

विशेष्यांशे इति द्वितीयप्रकारेऽन्वयि, स्वविशेष्यनिष्ठवै-शिष्ट्यप्रतियोगितावगाहीत्यर्थः । एतन्मते विशेष्यताप्रकारते वैशिष्ट्यानुयोगित्वप्रतियोगित्वे न तु विषयत्के । उक्तप्र-कारेण संसर्गविषयताद्वारा पुरोवर्तिनिष्ठस्वविषयतानिरूपितघट-त्वात्मकप्रकारनिष्ठप्रतियोगितावगाहित्वरूपेण । एतन्मते धर्मि-निष्ठप्रकारवैशिष्ट्यविषयकत्वं प्रमात्वम् आपातत इति प्र-तियोगितायां संसर्गविधया स्वविषयत्वमनुपादाय पुरोवर्तिनि घटत्वप्रकारकमिदमिति ज्ञानेन प्रामाण्याग्रहाद्बाधतादवस्थ्य-मनापाद्य दीधितिकृतां प्रकारतालक्षणदूषणमयुक्तमित्याशङ्क्य यद्य-पीति । सकलघटघटत्वतत्सम्बन्धविषयताप्रकारतादि । विलक्षणे-ति । घटत्वावच्छिन्नप्रकारावच्छिन्नविशेष्यतारूपप्रकारावच्छिन्ना-वच्छिन्नत्वरूपप्रकारावच्छिन्नधर्मितावच्छेदकीभूतघटत्वप्रकारिता-त्वावच्छिन्ननिरूपितविषयितायाः असत्त्वादित्यर्थः । उक्तप्रामाण्यस्य न पक्षेतत्यभिमानमुपगम्याप्याह एवमिति । प्रामाण्ये-ति । धर्मिनिष्ठप्रकारवैशिष्ट्यावगाहित्वरूपेत्यादि । न तत्प्रती-कार इति । तावताप्युक्तज्ञानेन सत्त्वाग्रहेण स्वद्वैशिष्ट्यगर्भ

प्रामाण्याग्रहेण बाधस्य दुर्वारत्वादिति भावः ।

सत्त्वस्योपलक्षणत्वेपि तादृशस्य पक्षतामेव दूषयति एवंयदीति । तादृशस्य एतद्वैशिष्ट्यधर्मिणि प्रतियोगित्वावगाहित्वात्मनः। प्रामाण्यग्रहादिति । घटत्वप्रकारकमिदं ज्ञानमिति प्राथमिकज्ञानग्राहकसामग्र्या साध्यप्रवेशेन प्रकारताघटकतया धर्मिणि प्रकारवैशिष्ट्यात्र-अपि गाहित्वं प्रामाण्यं पक्ष इत्युपेत्य दीधितिकृद्दूषणं सङ्गमयति तथापीति । तन्नेत्यस्य संसर्गान्वयित्वखण्डनं मम कृतमित्याशङ्कायामाहेदन्त्वादिनेति । अनुव्यवसायेन प्राथमिकज्ञानग्रहेण । न्यायमते प्रथमतो घटे घटत्वप्रकारकमिति ज्ञानग्रहासत्त्वेपि पुरोवर्त्तिनि घटत्वप्रकारकमिति ग्रहोपगमादिति भावः । प्रामाण्यग्रहस्वतस्त्वं प्रामाण्यविषयितायां ज्ञानग्रहत्वव्यापकत्वम् । इति मन्वान इति । अभिमानश्चायं न दुर्घटः परेण तादृशस्य प्रामाण्यत्वोक्तेः।वस्तुनोऽन्यादृशस्यैव तथात्वेन तदनौचित्यात् । विशेष्ये इति । एवञ्चेदन्त्वादिना भासमानविशेष्यांशे घटत्वप्रकारकत्वस्य प्राथमिकज्ञानग्रहे भानेऽपि नोक्तप्रामाण्यभानमित्याशयः । वस्तुतस्तु न्यायनये घटत्वादिना भासमानविशेष्यांशे घटत्वप्रकारकत्वमेवानुव्यवसायेन न गृह्यते प्रमात्वं च तदेव न तु पुरोवर्त्तिनि घटत्वप्रकारकत्वादिकम् अत एव दाहसमर्थवह्नित्वप्रकारकत्वं हेतूकरिष्यते इत्यादिकमित्यादिना प्रामाण्यघटकतावच्छेदकावच्छिन्नविषयकत्वविवक्षणे घटज्ञानं गुण इति शाब्दसामग्रीसङ्ग्रहापत्तिर्ग्राह्या । उपनीतेति । ज्ञातो घट इत्यादिः । ज्ञानधर्मिकेति । न च पर्वतो वह्न्यभाववानिति ज्ञानाभावस्य वह्निभानप्रयोजकत्ववत् ज्ञानं विषयतासम्बन्धावच्छिन्नघटाभाववदिति ज्ञानाभावस्य घटविषयताप्रयोजकत्वमेव न तु ज्ञानभानप्रयोजकत्वमिति वाच्यम् ज्ञानभाननिरूपितघटभानप्रयोजकत्वे पुच्छलग्नज्ञानभानप्रयोजकत्वात् विनिगमनाविरहेण घटभाननिरूपितज्ञानभानं प्रत्यपि प्रयोजकत्वाच्च ।

तत्प्रयोजकेति । कारणकलापसामग्रीप्रयोजिकेति भावः । स्वतन्त्राप्रामाण्योपस्थितीति । अस्या प्रामाण्यभानप्रतिबन्धकत्वात् ज्ञानकरणेपि घटज्ञानादिसाध्यकानुमित्यादिसामग्र्या अपि सङ्ग्रहापत्तिर्वक्ष्यत इति भावः । धर्मिघटज्ञानं स्वरूपसम्बन्धरूपप्रयोजकतानिवेशं निरस्कृत्यान्यादृशतन्निवेशं निराकरोति फलो-

प्रधानरूपेति । एकैकेति । यद्यद्रूपेण कारणानां सामग्रीघटकत्वं तेन तेन रूपेणाभयभानोपधानमिति विवक्षया घटपदज्ञानत्वज्ञानपदज्ञानत्वादिना सामग्रीघटकतावच्छेदकरूपेणोभयभानप्रयोजकत्वाभावाद्वारणमित्यर्थः । घटज्ञानत्वादिनेति । परकीयघटज्ञानोत्पत्तावपि सन्निकर्षाद्यसत्त्वे घटज्ञानानुव्यवसायासत्त्वेन फलोपधानरूपप्रयोजकत्वासम्भवादिति भावः । यद्यपीति । कारणतावच्छेदकीभूतभानस्य कार्यतावच्छेदकीभूतभाने प्रयोजकत्वे पृथक्कार्यकारणभावोऽपेक्षित इत्याशयः । एककार्यकारणभावेऽप्यवच्छेदकीभूतभानभेदेन तद्व्युत्पादयति तथापीति । यत्र परामर्शे व्यापकत्वादिना घटादिरव्यापको भातः यत्र शक्तिग्रहे गोत्वादिनाऽशक्यो भातस्तत्र प्रयोजकदुर्भिक्षवारणाय विषयतायाः प्रयोजकत्वं सूचयति व्यापकत्वमित्यादिना । सास्नादेरपीति । आकृतौ पृथक् शक्तिः, जातिग्रहे नाकृतिर्भासते किन्तु पिष्टमय्यो गाव इत्यादावेवेत्याशयः । नन्वव्यापकस्य घटादेरपि वन्हित्वादिनाऽनुमितौ भानं सर्वसिद्धमिति व्याचष्टे व्यापकतयेति । धर्मितावच्छेदकीयप्रकारतान्यत्वप्रकारतात्वयोः प्रयोजनं स्फुटम् । जातिमान् गोपदार्थ इति ज्ञानस्य स्वरूपतो गोत्वशाब्दबोधहेतुतापत्तिरतः स्वरूपत इति । तस्यैव जातित्वेन गोत्वशाब्दबोधहेतुतापत्तिरतः स्वरूपत इति । तदवच्छेदेनेति । स्वरूपसम्बन्धरूपावच्छेदकत्वगर्भम् । गौरस्तीत्यादौ द्रव्यं गोपदशक्यमित्यादिग्रहाद्द्रव्यमस्तीति शाब्दबोधः स्यादत इदमुक्तम् गोपदशक्यतायां द्रव्यत्वानवच्छिन्नत्वान्न दोषः । तत्रैव गोत्वावच्छिन्नगोपदशक्यताभानाद्गौरस्तीति शाब्दबोधः स्यादतः तद्धर्मितेति । गोत्ववाचकता गोत्वप्रकारितविषयकभगवत्सङ्केतविषयता । गोविशेषितेति । गोधर्मितावच्छेदककत्वस्य विशेषणतायां लाभाय । गोत्वांश इति । गौर्गोपदबोद्धव्य इति शक्तौ बोधनिष्ठविषयितांशे निरूपकतासम्बन्धेन विशेषणतापन्नो गवादिधर्मस्तन्निष्ठशक्तिविषयताया अवच्छेदकत्वस्य गोत्वे सत्त्वादिति भावः । इतरांशेति । प्रकारितांशे विशेषणतया विषयत्वस्य प्रकारितावृत्तिविषयतानिरूपितविषयतारूपत्वादिति भावः । धर्मांश इति । अन्यथा संसर्गांतरविषयभानस्य शक्तिधीनियम्यत्वसङ्गापत्तेः । लक्षणानधीनसंसर्गतान्यविषयतायाः स्वांशे ज्ञानसङ्केतप्रयो-

ज्यतानियम इति मनसि कृत्य शङ्कते नन्विति । नन्विति । यथा संयोगविप्रयोगादिकं प्रकृतरार्थबोधानियामकम् तथैवाधुनिकसङ्केतोपीति भावः ।

विशेषणांशेपीति । सङ्केतविशेषणान्यविशेषणराहित्यमेव स्वरूपतो भानमित्याशयः । गोत्वस्येति । विशेषणतयेति तृतीयालभ्यस्य तदवच्छेद्यत्वस्य बोद्धव्यत्वेऽन्वितेऽपि गोत्वेनैव सङ्केतविषयत्वादिति भावः । पदेति उक्ताधुनिकसङ्केतग्रहाधीनशाब्दबोधे गोत्वस्याभानेन तस्य तत्सङ्केतविषयत्वेऽपि बोधविषयतावच्छेदकत्वेन तद्विषयता नास्तीति भावः । सङ्केतस्याजानिकत्वाधुनिकत्वाभ्यां वैलक्षण्यादाधुनिके तत्र विशेषणांशे वाच्यत्वभानं प्रयोजकमास्तां न त्वाजानिके इति वक्तुं शक्यत्वेऽपि आपाततो ज्ञानसङ्केतप्रयोज्यतामङ्गीकरोति अस्त्वेवमिति । विशेषणतया वाच्यत्वं बोधविषयतावच्छेदकत्वेन भगवत्सङ्केतविषयत्वम् विशेष्यतया वाच्यत्वं बोधविषयत्वेन तादृशसङ्केतविषयत्वम् न्यायमते प्राथमिकज्ञानग्रहे प्रामाण्यस्य लौकिकमानासम्भवात्तत्र तदलौकिकमानं दर्शयति विशेष्यतेति । दीधितिकृतामग्रेऽनुव्यवसायस्य प्रामाण्यभानेऽसामर्थ्यव्युत्पादनं तल्लौकिकमानाभिप्रायमिति न तद्विरोधः । घटत्वप्रकारकज्ञानत्वेन साध्यत्वे व्यभिचारभयेन घटत्वप्रकारकत्वं ज्ञाततारूपलिङ्गविशेषणम् । ज्ञाततालिङ्गकत्वं किं ज्ञाततविशेषलिङ्गकत्वं किं वा ज्ञाततासामान्यलिङ्गकत्वम् ? तत्राद्यं निराकृत्य द्वितीयं दूषयिष्यते ज्ञानतामात्रेत्यादिना, अत आद्यं विवृणोति लिङ्गविशेषावगाहीति । घटत्वप्रकारकज्ञाततावगाहीत्यर्थः । व्यभिचारादिनेति । घटत्वप्रकारकेच्छाविषयत्वादेर्लिङ्गस्य विषयविशिष्टज्ञानव्याप्यत्वेन परामर्शस्थले इति शेषः । आदिनात्मनि विषयविशिष्टज्ञानानुमितिं प्रति ज्ञाततारूपलिङ्गसिद्धिपरिग्रहः । ज्ञातता सामान्यस्य लिङ्गत्वे घटत्वप्रकारकज्ञानत्वेन साध्यत्वं न संभवति व्यभिचारादतः शुद्धेति । शुद्धज्ञानसाध्यकज्ञाततापरामर्शाद्विषयावच्छिन्नज्ञानानुमितस्वीकर्तारं मिश्रमाक्षेप्तुं बलपदम् इतरबाधलाघवज्ञानाभ्यां विना व्यापकतानवच्छेदकरूपेण साध्यभानासम्भवेन कुतो बलं भवेदिति भावः ।

साध्याभाववदवृत्तित्वरूपव्याप्तेः प्रायशः साधनभेदो तत्रैक एव

कार्यकारणभावः तथा च शुद्धज्ञानत्वावच्छिन्नीयतादृशव्याप्यत्ववगा-
हिपरामर्शे यदृच्छाविषयत्वादिलिङ्गकेषु विषयोपरक्तज्ञानानुमिति-
त्वस्य जन्यतावच्छेदकत्वासम्भवाच्छुद्धज्ञानत्वावच्छिन्नीयतादृश-
व्याप्यत्ववगाहिज्ञाततापरामर्शस्यापि तज्जन्यतावच्छेदकत्वं न घटते
इत्यालोच्याह स्वव्यापकेति । कथञ्चित्कार्यतावच्छेदकभेदमुपेत्य
कारणानन्तर्यं निवेश्य घटत्वप्रकारकाविशिष्टज्ञातनेच्छादिपरामर्शम-
धिकृत्येदमिति तु नार्थः । तथा सति कार्यतावच्छेदके विषयविष-
यितानिवेशासम्भवात् ज्ञानादिभानप्रयोजकता व्यापकत्वादिना
विषयिताया एव स्यात् अत एव ज्ञाततापरामर्शे कार्यतावच्छेदकमाह
तथाचेति । यद्वा शुद्धज्ञानव्याप्यत्ववगाहिनो लिङ्गान्तरपरामर्शात्का-
लान्तरीणज्ञाततापरामर्शाच्च शुद्धज्ञानानुमितिनिर्वाहाय कारणता-
पर्यन्तं निवेशः तत्र विषयविषयितानिवेशाभावेऽपि न क्षतिः । एवं
च तादृशज्ञाततापरामर्शस्य कार्यतावच्छेदकं दर्शयति तथाचेति । व-
स्तुतस्तु ज्ञाततासामान्यपरामर्शस्यैव घटत्वप्रकारकज्ञानतेच्छा-
दिपरामर्शानामपि विषयोपरक्तज्ञानानुमितित्वस्य कार्यताव-
च्छेदकत्वे व्यभिचारः तत्रानायत्याऽन्यपरामर्शानां कारणानन्तर्य-
मेव तद्वारकम् ज्ञाततासामान्यपरामर्शस्य स्वन्यदित्याशयेनाह त-
थाचेति । विषयोपरक्तेति । एतेन व्यभिचारोद्धाराय कारणाव्यवहि-
तोत्तरत्वनिवेशः अन्यपरामर्शे च न कार्यतावच्छेदके विषयविष-
यितानिवेश इति सूचितम् । विषयोपरक्तज्ञानं व्याप्यत्वेन ज्ञातताप-
रामर्शस्तु भट्टैर्नोपेयते तादृशारोपस्याप्रामाणिकत्वादिति न त-
मादाय व्यभिचारः शङ्क्यः । तत्कालानवच्छिन्नज्ञानान्यत्वमनु-
मितिकारणतावच्छेदकम् तेन कालान्तरे शुद्धज्ञानव्याप्यत्वेन ज्ञात-
तापरामर्शान्न विषयोपरक्तज्ञानानुमित्यापत्तिः । शुद्धज्ञान-
त्वावच्छिन्नव्याप्यत्वेन ज्ञाततासामान्यपरामर्शघटितसामग्री
भट्टमते साध्यघटिका तादृशपरामर्शस्यैव तत्र व्यापकताव-
च्छेदकत्वेन विषयस्याभानेनानायत्या ज्ञानविषयोभयभासक-
त्वात् । एवं च न विभिन्नप्रयोजकं वक्तुं शक्यम् शुद्धज्ञानत्वावच्छि-
न्नलिङ्गान्तरपरामर्शाद्विषयोपरक्तज्ञानानुमितेः केनाप्यनुगमानात्तद-
वच्छेदायैवकारः शुद्धज्ञानव्याप्यत्वेन कालान्तरीणज्ञाततापराम-
र्शाद्विषयोरक्तज्ञानानुमितिवारणार्थमाह कालविशेषस्येति

तच्च तत्तत्कालानवच्छिन्नज्ञानान्यत्वस्य कारणतावच्छेदकत्वमप्रामाणिकमित्याशयेन प्रकारान्तरस्यादूषकत्वन्यायेन। यत्तु कालान्तरीणज्ञाततापरामर्शस्थले विषयोपरक्तज्ञानानुमितिवारणार्थं व्यवसायोत्तरतृतीयक्षणस्यैव स्वाव्यवहितपूर्ववर्तिव्यवसायवत्त्वसम्बन्धेन क्षणत्वेन हेतुतेति। तन्न ज्ञातताप्रत्यक्षद्वितीयक्षणे व्यभिचारस्मरणविलम्बेनानुमित्यनुत्पादेन तदनन्तरक्षणे व्याप्तिस्मृत्या तदुत्तरमेवानुमितेः स्वीकारेण व्यभिचारात्। अत्र शुद्धज्ञानव्याप्यतया ज्ञाततापरामर्शस्य शुद्धज्ञानानुमितौ एकैव हेतुता विषयोपरक्तज्ञानानुमितौ व्यवसायस्य हेतुत्वान्तरम्। उक्तस्थले च व्यवसायानन्तरतृतीयक्षणे व्यवसायान्तरं स्वीकृत्योपपत्तिः। व्यवसायत्वेन शुद्धज्ञानस्यैव भानं न विषयोपरक्तस्येति मतान्तरसाधारण्येनाह ज्ञानस्येति। ऐन्द्रियकताया एवेति। लाघवात् भट्टानां स्वमतहानापत्तिरित्युपहासः मिश्राणां मत एव न च निर्भरः न भट्टमते इति व्यञ्जनात्। वस्तुतस्तु ज्ञानातीन्द्रियतावादिनां भट्टानामनायत्त्या गौरवस्य सोढत्वेन विशेषणोपपत्तिर्भवतीति बोध्यम् अन्यत्र तदादेश्च विशेषरूपेणोपस्थापकत्वमित्यादिपङ्क्त्यादौ। ग्रन्थलभ्यमिति। स्वरूपसम्बन्धात्मकं प्रयुक्तत्वं शतशो दूषितम् इदानीं व्यापकरूपं तद्दूष्यते इति भावः।

अथात्र वदन्तीत्यादिकल्पः॥ मिश्रानुयायिनां एतादृशविशेषणोपरि सामग्रीविशेषासङ्ग्रहात्मकं दूषणमुद्धरति गुरुमते घटत्ववतीति। योग्यतयेति। तस्या घटव्यवसाययोग्यत्वात्। परामर्शो घटज्ञानसाध्यकं तद्घटितेति। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदानुपगमात्। स्वरूपयोग्यतेति। अनुपहितस्य जनकतावच्छेदकस्यैव स्वरूपयोग्यतावच्छेदकतया वारणायसामग्रीवृत्तिसमुदायत्वस्य ज्ञानग्रहजनकतावच्छेदकत्वादित्यर्थः। ज्ञायमानलिङ्गादिविषयेति। अयं घटः प्रमाकालीनैतज्ज्ञानवान्घटपदज्ञानादित्यर्थः। तादृशसामग्र्या इति। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानुपगमेनाग्राहकत्वासम्भवादिति भावः। लिङ्गज्ञानस्यैवानुमापकत्वेप्याह वस्तुत इति। लाघवादिति। तावतापि ज्ञायमानलिङ्गादिविषयेत्यादिक्रमेणोक्तदोषस्य वारणसम्भवादिति भावः। व्यवसायादीति। आदिना अनुव्यवसायादिपरिग्रहः। प्रामाण्यविष-

यकज्ञानभानप्रयोजकत्वोक्तावुक्तदोषनिवृत्तिमाशङ्क्याह तादृशज्ञानानुमितावितीति । मतत्रये दोषमुक्त्वा लिङ्गज्ञानस्यैव ज्ञानभानप्रयोजकतेति तदुद्धारमालोच्य मिश्रमते दोषमाह अनुव्यवसायेति । तन्मते भट्टमते शाब्दबोधे केवलार्थस्यापि करणत्वात् । असिद्धिकाले इत्यनेन तादृशपरोक्षसामग्रीभिन्नत्वासिद्धिरुक्ता । उक्तसामग्रीसिद्धावपीत्यनेन ज्ञाततया असिद्ध्या परोक्षसामग्र्या अप्यसिद्धिर्व्यञ्जिता । ननु प्रामाण्यग्राहकान्तराभावाज्ज्ञाततालिङ्गकानुमितिसामग्र्याः प्रामाण्यग्राहकत्वासिद्धिमुक्त्वैव साध्यं सिद्ध्येदित्यपरमनुकूलमित्याशङ्क्य तस्यास्तदसिद्ध्युद्धारो न प्रकृते सम्भवति प्रामाण्यग्राहकतया तन्मतसिद्धत्वमेवेति न भट्टस्योद्देश्यासिद्धिरिति भावः ।

आपश्यत इति नान्वयः ते प्राग्धातोरित्यनुशासनात् इमनिजपि न सम्भवति समासे श्वेतिमरूपमिति व्यासे श्वेतिमानं रूपमिति प्रयोगात् तस्मादारूपमिति छेदः । ते प्राग्धातोरित्यत्र गत्यादिसंज्ञानां प्रागेव प्रयोगोऽतथाभूतानां तु व्यवहितोपीतिमते नास्त्युपपत्तिगन्धोपि । अत एव वाहरारिपदविशकमथाविश्वप्रयोगः तथा च प्रकृतेप्यापश्यत इत्यन्वयः साधुः । हेषाशब्दं च शृण्वतः खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीतिधीरित्यादिपदार्थः अश्वत्वस्य धावनस्य चानुमानिकत्वलाभाय क्रमेण हेषाखुरविक्षेपध्वन्योराकर्णनमुक्तम् । यद्वा श्वेतरूपदर्शने हेषाशब्दश्रवणेन गवादिद्रव्यासंसर्गनिश्चये दृश्यताम्? श्वेतत्वमश्वसंसर्गं विनानुपपन्नमिति धीरश्वत्वस्य भासिका खुरविक्षेपशब्दश्रवणे च खुरविक्षेपशब्दः उपलभ्यमानः धावनकर्तृत्वं विनाऽनुपपन्न इति धीर्धावनस्य श्वेतरूपस्याश्वान्यद्रव्यवृत्तित्वबाधधीसहिताऽधावद्द्रव्यवृत्तित्वबाधधीसहिता च द्रव्यवृतित्वधीरश्वत्वधावनोभयमालिकेति केचित् । श्वेतोऽश्वो धावतीति ज्ञानं न प्रत्यक्षम् अश्वत्वादिद्रव्यनिष्ठजातिव्यञ्जकाभावात् नाप्यनुमितिः श्वेतत्वव्याप्यग्रहात नाप्युपनीतभानं चाक्षुषत्वप्रयोजकादृष्टेन्द्रियसन्निकर्षविनाशात् बहिर्विषये मनसोऽसामर्थ्यात् । हेषादेरपदत्वाच्च न पदं करणमित्यनायत्याऽर्थरावकरणमित्यभिप्रायः मानसोपनीतभाने तदिति ग्रन्थकृत्स्वरसः । कार्यान्वितशक्तिवादे च प्रथमसमयं श्वे-

सोश्वो हेषावत्त्वादित्यनुमानं ततोऽयं श्वेतोऽश्वो धावति खुरविक्षे-
पशब्दविशेषवत्त्वादित्यपरम् । यत्त्वयं श्वेतो धावदश्वः हेषावत्त्वे
सति खुरविक्षेपशब्दवत्त्वादिति. तत्र तथासति श्वेतोऽश्वो धाव-
तीत्याकारानुपपत्तेरिति मूलम् । पदजन्येति । घटादिध्वनिमाकर्णय-
तः घटमालोचयतः ज्ञानविषयः घटः पतित इत्यन्वयबोधः । मिश्रा-
दिमतासिद्धयेति । तन्मते आकर्णतालोचनयोरन्वयबोधं प्रत्यजनक-
त्वात् । पदार्थोपस्थितिः प्रकृते घटज्ञानयोरुपस्थितिः । तुल्येति ।
ज्ञानविषयो घटः पतित इति ज्ञानस्य मिश्रेणापि मानसोपनीतत्वे-
नोपगमात् अन्वयबोधत्वेन तेषामुपपत्तिविरहात् ।

दर्शितानुव्यवसायं वक्तुमित्यादिना विवरीतुं घटज्ञानवान् अहं
पटज्ञानवांश्चेति ज्ञानभ्रमेण शङ्कते न चेति । तादृशस्यापीति । पुनः सं-
युक्तसमवायरूपलौकिकसन्निकर्षस्य भट्टमतेऽहेतुत्वात् । उपनीतेति ।
उपनयसन्निकर्षोभयघटितसामग्र्या भट्टमते नान्वयबोधसामग्रीत्वं
सन्निकर्षप्रवेशात् । पटज्ञानेति । पटज्ञानं शाब्दयामीत्यर्थः । घटादि-
ज्ञानस्येच्छादेर्वेति क्रमेणान्वयः । अनयोरविद्यमानत्वे सामग्रीद्वय-
स्यापि अन्वयबोधसामग्रीत्वमिति तद्विद्यमानत्वानुधावनम् । तत्र
पूरितविशेषणानुपादाने प्रथमदोषः भट्टमतसिद्धभिन्नत्वरूपविशे-
षणानुपादाने द्वितीयदोष इति विशेषणद्वयप्रवेशेपीत्यर्थः । मुख्येति ।
मानसत्वनियम इत्युक्तम् । कथञ्चिदिति । घटज्ञानवत्सोहं पटज्ञानव-
दिति ज्ञाने प्रायशोऽहं न स इति ज्ञानेपि कथञ्चित्स्वात्मनि परात्मा-
संसर्गाग्रहरूपं कारणमुपेत्येत्यर्थः । मुख्यविशेष्यतया इति । अथैवमी-
दृशरीत्या घटज्ञानवत्परात्मविशिष्टपटज्ञानवत्स्वात्मज्ञानस्य परात्मनो
मुख्यविशेष्यत्वाभावेन वारणेपि कथं पटज्ञानवत्स्वात्मविशिष्टघट-
ज्ञानवत्परात्ममुख्यविशेष्यकमानससामग्रीवारणं तादृशसामग्र्याः
पटज्ञानलौकिकप्रत्यक्षजनकतया भट्टैरनुपगमादिति चेन्न ज्ञानान्तर-
विशेष्यतापन्नत्वस्य साक्षात्परम्परया वा ज्ञानान्तरविशेष्यता-
नापन्नत्वरूपत्वात् । यद्वा ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठमु-
ख्याविशेष्यतायाः समानाधिकरणो यस्तन्निरूपितस्वाश्रयवृ-
त्तिप्रकारताकग्रहः स एव विवक्षणीयः स्वात्मनिष्ठतादृशे-
ग्रहस्य परात्मनिष्ठविशेष्यतासामानाधिकरण्याभावान्न दोषः ।
यत्त्वेवं सति भट्टाचार्याणां मुख्यत्वनिवेश आपातत एव घटज्ञा-

नंतत्परात्मविशिष्टपटज्ञानत्वस्वात्मग्रहस्यापि विशेष्यतया आश्रये स्वात्मनि तन्निरूपितस्वाश्रयवृत्तिप्रकारताकग्रहविरहादिति । तत्तुच्छम् । उपनीतघटज्ञानसमानाधिकरणपटज्ञानत्वादिना आत्मनि ज्ञानसामानाधिकरण्यघटकत्वेनात्मनो विशेष्यतया तन्निरूपितस्वाश्रयवृत्तिप्रकारताकग्रहस्य तद्वृत्तित्वेन मुख्यत्वस्यावश्यकत्वात् । वस्तुतो जागरे नियमतः स्वात्मनि विजातीयमनःसंयोगसत्त्वेनाऽनुव्यवसायस्य स्वात्ममुख्यविशेष्यकत्वाच्च पूर्वपक्षावतार इति ।

नन्वेवं योग्यतायाः शाब्दबोधभानोपगमेपि बाधकारणसम्भवात्समाधानासङ्गतिरित्यत आह यथाविवक्षणेत्विति । ज्ञाततादीतीति गर्हितत्वमादृत्य । ननु मिश्रमतासिद्धत्वं दातुं शक्यत एव व्यवसायानन्तरज्ञातताालिङ्गकज्ञानानुमितेर्विषयविशिष्टज्ञानानुमितिरूपाया ज्ञानप्रत्यक्षत्वेन मिश्रमतेपि प्रामाण्यग्राहकत्वात् तदनुत्तरशुद्धज्ञानानुमितेश्च मिश्राणां ज्ञानविषयतालिङ्गकानुमितित्वेन तत्सामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च मिश्रमतसिद्धत्वादित्यत आह यथाश्रुतेति । तथाच मिश्रमतासिद्धत्वनिवेशे आयासः स चेह नास्तीति भट्टमतासिद्धत्वं सम्यगिति भावः । विषयेति हेतुगर्भम् । विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषय इति व्याप्तीत्यर्थः । विषयभाने तद्धर्मप्रामाण्यस्य न भानमित्याशङ्काव्युदासाय विषयभानं साधितम् । तत्रेति । साक्षात्कार इति व्याख्यानात्प्रामाण्यस्य लौकिकभानं फलितम् । सन्निकर्षापेक्षया दोषप्राबल्यमालम्ब्याह यदि चेति । अभ्यासदशायामिष्टापत्तेराह । अनभ्यासेति । व्यवसायगर्भतज्ज्ञानसामग्र्या बलवत्त्वात् । तुल्येति । प्रामाण्यभासिका सामग्री लौकिकसन्निकर्षगर्भा अप्रामाण्यभासिका च दोषगर्भेति तुल्यत्वम् । लौकिकसामग्र्यपेक्षया दोषविशेषस्य प्राबल्ये विप्रकृते दोषविशेषानुपगमोऽऽनुपदं व्युत्पादयिष्यते । धर्मिज्ञानस्येति । तदात्मकप्रामाण्यनिश्चयव्यावर्त्तनाय । तदनुरोधेन औत्तरकालिकप्रामाण्यसंशयानुरोधेन । तत्र अनुव्यवसाये, अन्यथाऽनुव्यवसायस्य प्रामाण्यनिश्चयत्वेन प्रतिबन्धकतया ततः प्रामाण्यसंशयो न स्यादिति भावः । अप्रामाण्येति । अत्रापि तस्मिन् प्रामाण्याविरोध्यग्राहकत्वमर्थः ।

भ्रमत्वप्रमाभावयोरनुगमः ताहशेति । अनुपस्थिततयाऽनुव्यवसायस्याप्रामाण्यावगाहित्वासम्भवेन सामग्र्यास्तद्ग्राहकत्वाकत्वादिति भावः । ननु धर्मिनाशे धर्मिभानं न स्यात्तद्भासकसन्निकर्षाभावादत आह। तज्जनितेति । प्रामाण्यविषयकस्मरणरूपत्वे प्रामाण्यसंशयो न स्यादतः प्रामाण्याविषयकेति । मीमांसकानां धर्मिज्ञानाकारणत्वस्योक्तत्वादाह ।तदुपनीतेति। इत्येवेति। मिश्रभट्टाभ्यामिति शेषः । पूर्वकल्पं निरस्यति । एतेनेति । नन्विति । अन्यथा इदंत्वादिविशिष्टविशेष्यकत्वादेर्ग्रहापत्तिः ।

अनुव्यवसायात्पूर्वमप्रामाण्योपस्थितौ दोषविशेषवशान्न प्रामाण्यभानम् । लौकिकसामग्रीतोपि दोषविशेषबलवत्त्वस्य सत्प्रतिपक्षादौ वक्तव्यत्वादिति शङ्कते पित्तादीति । अपीतत्वादेरिति। लौकिकसन्निकर्षस्य दौर्बल्यप्रापकम् आहार्येति । आहार्यभ्रमत्वस्य लौकिकताया व्यवस्थापनात् । प्रकारेति । विपरीतानुगमाय विरुद्धपदं तादृशधर्मानवच्छिन्नत्वेन विशेष्यता विवक्षणीयेत्यर्थः। अग्राहकत्वान्तं व्याख्याय पश्चाज्ज्ञानग्राहकत्वोपादानप्रयोजनकथने बीजमाह । एवमिति । तद्विशेषणेति । ज्ञातताप्रत्यक्षसामग्र्याः प्रामाण्यग्राहकत्वेन ग्राहकत्वेन च भट्टमतसिद्धतया वारणात् । मिश्रादीति । घटादिग्राहकसामग्र्याः मिश्रमतासिद्धत्वोक्तावपि सङ्ग्रहसम्भवेन तथोक्त्यैव ज्ञानग्राहकत्वप्रवेशस्य सुवचतया भट्टमतसिद्धत्वपर्यन्तं व्यर्थं स्यादिति भावः । सति च ज्ञानग्राहकत्वे मिश्रमतासिद्धत्वोक्तौ ज्ञानजन्यज्ञाततावान् घट इति ज्ञाततप्रत्यक्षसाग्रीसङ्ग्रहेण भट्टमते बाधो दर्शितः । तन्मतसिद्धतेति । तथाच मिश्रमतसिद्धभिन्नत्वोक्तावपि भट्टमतेन बाध इति भावः ।गुरुणेति । गुरुमतसिद्धभिन्नत्वोक्तौ अनुमितिसामग्रीमादाय भट्टमते बाधासम्भवेपि प्रत्यक्षसामग्र्यनुधावनं मिश्रमतसिद्धभिन्नत्वोक्तावपि बाधं वक्तुम् । ज्ञाततारूपेति । मिश्राणां ज्ञातताज्ञानस्यैव सामग्रीघटकता न तु ज्ञातताया इति भावः । असङ्ग्रहादिति । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वात् । ज्ञानविषयो घट इत्यादिशाब्दानुमितिसामग्रीणामसङ्ग्रहेपि न क्षतिरित्यादि प्राक्सिद्धान्तितत्वेन पटज्ञानकालीनो घट इति शाब्दादिसङ्ग्रहापातो व्यर्थ एवेति न शङ्क्यम् घटादिपदस्य वस्तुविशेषोपलक्षणतया त-

त्प्रत्यक्षाप्रसिद्धेः ज्ञानान्तरान्निषयकशाब्दबोधाद्यप्रसिद्धेश्चोक्तशाब्दबोधमादायैव तत्प्रामाण्ये साध्यसत्ताया वाच्यत्वात् पटज्ञानविषयो घट इति शाब्दात्मकव्यवसायसामग्र्याः सङ्ग्रहस्य भट्टेनेत्यादिपङ्क्तौ दर्शनीयतया स्वाश्रयज्ञानविषयघटशाब्दबोधाद्यसङ्ग्रहनैयत्यस्य व्यक्तत्वाच्च। मिश्रमतेति। मिश्रमते लौकिकसन्निकर्षविगमेपि व्यवसायोपनीतघटत्वभानादिति भावः। वैकल्पिकतेति। विरोष्यितात्वं धर्मितावच्छेदकीकृत्य बाधग्रहस्य तद्धर्मितावच्छेदककतद्वत्ताज्ञानं प्रति विरोधित्वादिति भावः। ज्ञाने इति। ज्ञाने विषयबोधग्रहो विषयविशिष्टज्ञानभानं निवर्त्तयेत् विषयतायां तद्बाधग्रहश्च प्रामाण्यभानमित्याशयः। समाहितमिति। सर्वमते ज्ञानत्वविषयतद्वति तत्प्रकारकत्वानामेकत्र द्वयमितिरीत्यैव भानोपगमादिति भावः। उक्तव्यवसायेति। न चैवं विषयविशेषपरतया प्राक् तत्प्रवेशावश्यकत्वविरोधः तादृशविषये मानाभावात् तत्प्रामाण्यं वा पक्षाद्बहिर्भाव्यमिति भावः। तदपीतिपक्षे ज्ञानत्वप्रकारकत्वगर्भत्वामव सविषयकवृत्तिजातिप्रकारकत्वागर्भत्वं देयम्। विशिष्यपक्षत्वे च तन्न पक्षकार्यमित्यर्थः। शब्दाजन्येति। कारणाकारणसाधारणतादृशसामग्रीत्वस्य भट्टमतेऽतिप्रसक्तत्वेन ज्ञानग्रहोपधायकतानवच्छेदकत्वादिति भावः। शाब्दबोधव्यक्तिविशेषमादाय सङ्गमयति यत्कालीनेति। पदजन्यत्वेन गृहीतज्ञानोपस्थितिघटितसामग्रीत्वात् पदाजन्यज्ञानोपस्थितिघटितसामग्रीवृत्तिसमुदायत्वमन्यदित्यावेदयितुं यत्कालीनेत्यादि। तादृशसमुदायत्वं ज्ञानग्रहोपधायकतावच्छेदकमिति न भट्टस्य ज्ञानं पदाजन्यज्ञानोपस्थितौ ज्ञानग्रहोपधायकत्वाज्ञानाच्चत्प्रतिबन्धकस्य तत्र ज्ञानग्रहानुपधायकत्वज्ञानस्यैव सत्त्वादित्यर्थः। विशेषदर्शनम् एतत्कालीनकाम्यसाधनताज्ञानोपस्थितिः पदाजन्यतया न ज्ञानग्रहोपधायिकेति बाधदर्शनम्। तादृशेति। यत्समुदायत्वस्योक्तप्रकारेण तदीयाभ्युपगमे भानभावस्तस्यैव कालान्तरे तदीयाभ्युपगमे भानमिति न बाध इत्याशयः। अत एव यत्कालीन–तत्कालीनेति उपलक्षणम्। प्रकारान्तरेणापि बाधं निरस्यति उक्तेति। तद्दशायाम् उक्तविशेषदर्शनदशायाम्। व्यवसायेत्यनुव्यवसायोपलक्षणम्। सामान्यत इति। ज्ञानभासकसामग्री स्वानन्तरोत्पन्नज्ञानविषयकग्रहोपधा-

थिकेत्यभ्युपगमेत्यर्थः। गुरूणां सिसाधयिषिताया एव सामग्र्याः नैयायिकानामतथात्वे परतस्त्वासिद्धिरविरोधादित्यालोच्य न्यायमते चेत्युक्तम्। तस्मात् व्यवसायसामग्र्या दुःसङ्ग्रहत्वात्। येन रूपेण स्वाश्रयग्रहोपधायकतावच्छेदकता दर्शिता तस्य निरुक्तभट्टाभ्युपगमविषयतानवच्छेदकत्वमाह पदजन्येति। तादृशयोग्यताज्ञानस्येति। पदाजन्ययोग्यताज्ञानस्येत्यर्थः। योग्यताविषयकशाब्दबोधे अर्थाबाधरूपयोग्यताज्ञानत्वेन तादृशयोग्यताज्ञानकारणत्वस्य भट्टैर्नोपगमात्। अत्र यादृशशाब्दबोधे न तदनुप्रवेशस्तादृशसामग्री भट्टमतासिद्धाभिन्नापि न स्वाश्रयग्रहोत्पत्तिप्रयोजिकेति सूचयित्वा यादृशशाब्दबोधे न तदनुप्रवेशस्तादृशसामग्रीं व्यावर्त्तयितुं नियतपदमित्याशयेन तादृशसामग्रीं स्फुटयति पदजन्येति। तथाच तादृशशाब्दबोधसामग्र्या भट्टमतसिद्धत्वादेव व्यावृत्तिरिति भावः। कामनाविशिष्टस्येति। तत्र कामनावत् स्वधर्मिकेष्टसाधनताज्ञानोपयोगित्ववत् स्वधर्मिककार्यताबोधोपयोगित्ववत् स्वर्गकामकयागः कार्य इति बोधः। इष्टेति। यागे साक्षादिष्टसाधनत्वं बाधितम् इष्टसाधनत्वपूर्वोपस्थित्यधीनबोधविषय इति भावः। इतरेति। भट्टैरपि यद्धर्मविपरीतवयद्धर्मावच्छिन्नधर्मिकयद्धर्मावच्छिन्नाभावग्रहस्य तद्धर्मवत्तद्धर्मावच्छिन्नधर्मिकतत्प्रकारकशाब्दबोधहेतुत्वोपगमात्। ईदृशकार्यकारणभावबलेनैव पदानुपस्थिततदर्थस्य भानात् तथा च भट्टमतसिद्धत्वादेव न बाध इति भावः। अर्थाध्याहारेति। यत्किञ्चिदेकपदाधीनपदार्थोपस्थितिपदानधीनापरपदार्थोपस्थितिद्वयघटितसामग्र्या गुरुमते शाब्दबोधजनकत्वादिति भावः। स्पष्टीकृतं चैतत्तदासत्तिमूलटिप्पणयाम्। यद्यदिति वीप्सासमुदायप्रसिद्धये। गुरुमते इति। व्यवसायानुव्यवसायसामग्रीघटकानां भट्टमते ज्ञानग्राहकत्वाभावाज्ज्ञानं गुण इत्यादिशाब्दबोधसामग्रीघटककारणनिष्ठरूपाणामेव यच्छब्देन धर्त्तव्यत्वादिति भावः। गुरुमतसिद्धतादृशसामग्रीपर्याप्तज्ञानग्राहकतावच्छेदकरूपस्य भट्टमते ज्ञानग्राहकतानवच्छेदकत्वादुक्तविवक्षायामपि यद्यद्रूपशब्देन ज्ञानं गुण इति शाब्दबोधकारणगततच्छून्यकारणान्तर्भावेण पर्याप्तत्वं दुर्वारमित्याशङ्कावारणायानिवेशादित्यन्तम्। तथात्र पदजन्यकाम्यसाधनताज्ञानोपस्थितिघटितसामग्र्यां सत्यां भट्टमते तादृशशाब्दबोधो-

द्यात्ताद्दशसामग्रीत्वमेव यद्यद्रूपावच्छिन्नेत्यादिक्रमेण भट्टमतसि-द्धम् तत्तद्रूपशून्यं च गुरुमतेऽध्याहृतज्ञानग्राहकं शाब्दसामग्रीघट-ककारणमिति न सोऽर्थः। विशेषणतावच्छेदकप्रकारकज्ञानस्याकार-णत्वमप्याह वस्तुत इति। तात्पर्यादिति। काम्यसाधनताज्ञानप्रकारक-पाकप्रतीतिजनकत्वेनेच्छाप्रकारकपाकपदज्ञानम् आदिना अर्था-बाधरूपयोग्यताज्ञानं पाकः काम्यसाधनताज्ञानयोग्य इत्याकारं ग्राह्यम् तत्तद्रूपशून्यकारणपर्याप्तत्वमुपेक्ष्य तदन्तर्भावेण पर्याप्तत्वप्र-योजनमाह ज्ञाततेति। भट्टमतेपीति। विशेषणतावच्छेदकप्रकारक-निर्णयत्वेन वस्तुतोर्थाबाधरूपयोग्यताज्ञानत्वेनेति शेषः। तात्पर्या-सत्त्वे इति। तात्पर्यसत्त्वे गुरुमतेपि योग्यताज्ञानस्य पृथक्कारणत्वे मानाभावाद्भट्टमतासिद्धकारणं गुरुमते नैवास्तीति तत्सामग्रीवार-णम्। पूर्ववत् ज्ञानवानात्मेत्यादौ गुरुमते सामान्यतोभट्टाभ्यु-पगमाविषयत्वाद्बाधवारणमाशङ्क्य निराकरोति ज्ञानेति। व्यावृत्ते-ति। ज्ञानभासकसामग्र्यविषयकत्वं विशेषणमित्यर्थः। तद्व्यक्तिभि-न्नत्वमित्येके। शाब्दान्यत्वं मास्त्वित्याशयेन समाधानान्तरमाह व-स्तुतास्त्विति। परोक्षत्वमात्रप्रवेशे ज्ञानविषयकपरोक्षत्वनिवेशे च दोषं दर्शयन्नेव निरुक्तज्ञानांशे परोक्षत्वमावश्यकमित्याह एवञ्चेति। रूपेति। मनःसंयुक्तसमवायजन्यं घटं जानामीति ज्ञानं गुण इत्यनु-मितिवारणपि तादृशोपनीतभानावरणात्। अनेनैव दीधित्युक्तेनैव। दर्शितप्रयास इति। योग्यताया शाब्दबोधाप्रवेशः अध्याहृतज्ञान-ग्राहकशाब्दसामग्रीवारकाविवक्षाविशेषश्चेत्यर्थः। एवमिति। आ-दिना घटज्ञानवानात्मा घटज्ञानवानित्यादिग्रहः। अनेनापीति। अपि-ना ज्ञानान्तरविशेषणतापन्नातविशेषणस्य वैकल्पिकग्रहः। एतेन एतन्मते घटज्ञानं गुण इत्यादिशाब्दबोधसामग्रीवारणाय भट्टमत-सिद्धभिन्नत्वसत्त्वेन एतद्विशेषणगुरुत्वमालोच्यास्माभिर्लघुसामग्री-पक्षसङ्कोचेन। अप्रामाण्यग्राहकसामग्रीग्राह्याश्रयकान्यत्वनिवेशेन प्रथमविप्रतिपत्त्यभिप्रायेण तद्दूषणामानञ्चस्तदाप्याह एकस्यैवेति। व्याख्यानस्यैव विरोधवारकत्वादाह एवमिति। उभयत्रेति। तद्व-ति तत्प्रकारकत्वाश्रयेच्छाग्राहकेण प्रामाण्यग्रहात्तत्प्रवेशः तादृशे-च्छालौकिकप्रत्यक्षसामग्र्या प्रामाण्यग्रहे तु न तत्प्रवेश इति व्य-क्तम्। अत्यन्तायोगव्यवच्छेदेति। अत्रात्यन्तपदार्थस्यान्वयितावच्छे-

दकव्यापकत्वस्यायोगपदार्थे समभिव्याहृतक्रियासम्बन्धाभावेना-न्वयः । नीलं सरोजं भवत्येवेत्यादौ नीलभवनसम्बन्धाभावे अन्वयि-तावच्छेदकीभूतसरोजत्वव्यापकत्वबाधात् । नापि तद्यवच्छेदे तद-न्वयः नीलभवनसम्बन्धाभावव्यवच्छेदेऽपि तद्बाधात् । किन्त्वयोगे-ऽत्यन्तपदार्थस्य व्यवच्छेदः स चान्वयितावच्छेदकाव्यापकत्वरूपः । नचैवमपि नीलभवनसम्बन्धाभावस्य सरोजत्वाव्यापकत्वं सरोज-त्वाधिकरणे क्वचित्तद्यवच्छेदसत्त्व एवेति अत्राप्ययोगव्यवच्छेद एव पर्यवसानमिति वाच्यम् तथापि अन्वयितावच्छेदकसामानाधिकर-ण्येनैव तदन्वयपर्यवसानात्तत्रैवात्यन्तायोगव्यवच्छेद इति परिभाष्यते न त्वयोगव्यवच्छेद इति विशेषः । नीलेन सरोजेन भूयत एवेत्यादौ च यथा सरोजत्वसामानाधिकरण्येनैव नीलभवनायोगव्यवच्छेदो बुध्यते तद्वत्स्वाश्रयग्राहकेण गृह्यत एवेत्यादौ स्वाश्रयविषयकग्रह-त्वसामानाधिकरण्येनैव प्रामाण्यविषयित्वायोगव्यवच्छेदः प्रामाण्य-विषयितापर्यवसन्नः प्रतीयेत तथा च विधौ सिद्धसाधनादित्यर्थः । अत्यन्तायोगव्यवच्छेदप्रत्ययं निराकरोति ज्ञानमिति । एवञ्चेति । वि-शेष्ये कर्मणि आख्यातार्थायोगव्यवच्छेदभानासम्भवे चेत्यर्थः । विशे-षणीभूते कर्त्तरि क्रियाकर्तृत्वायोगव्यवच्छेदप्रत्ययस्थले चायोगे वि-शेषणनिष्ठाभावप्रतियोगित्वं क्रियाकर्तृत्वान्वयि तद्यवच्छेदपर्यव-सानमाह प्रकृतेपीति । नन्वेवकारस्य तादृशार्थे शक्तिविरहात्कथं तद्बोध इत्यत आह तद्बोध इति । एवकारस्याभावव्यवच्छेदयोः खण्ड-शक्तिः निष्ठत्वप्रतियोगित्वे संसर्गः अभावप्रतियोगित्वाभावे लक्षणा चेत्यभिप्रायः । बाधाद्यभावघटितत्वं भिन्नत्वे हेतुगर्भविशेषणम् । ज्ञानानुमित्यादिः ज्ञानवानिच्छावत्त्वादित्यादौ । तत्प्रत्यक्षं ज्ञातो घट इति घटस्य ज्ञाततेति वा । अनभिमतासिद्धिवदभिमतासिद्धिरप्यर्था-न्तरमित्याह अर्थान्तरमित्यादि । नन्वन्यथाख्यात्यनुपगमेन कथं पर-तस्त्वाभ्युपगम आपाद्यः । एवं ज्ञानं गुण इत्यादि ओदनसाधनताज्ञान-विषयपाक ओदनकामकर्त्तव्यताबोधविषय इत्यादिप्रामाण्याविषय-कज्ञानान्युपादाय तत्सामग्र्यग्राह्य इत्यभ्युपगम्येत्यर्थः । तस्माद् गुरूणां मते परतस्त्वाभावादेव न केनापि रूपेण तदभ्युपगमसम्भवः नापि बोधोऽन्यथाख्यातिसामग्र्याः साध्याघटकत्वादिति ।

अर्थान्तरस्येति । अनुव्यवसायसामग्रीमादायोक्तपरतस्त्व

सत्त्वेन चारितार्थ्याद्गुरुणा समं विवादे प्राथमिकज्ञानग्राहकसामग्र्याः प्रामाण्यग्राहकासिद्धिरित्यर्थः। न्यायमतेऽनुव्यवसायसामग्र्यां गुरुमतासिद्धत्वं शङ्कते यदिचेति। अस्त्येवेति। न्यायमते इति शेषः। गुरोरिति। तावता ज्ञानप्रत्यक्षसामग्रीत्वं धर्मितावच्छेदकीकृत्य प्रामाण्यग्राहकतानिश्चयेन गुरुनिष्ठेन प्रतिबन्धादनुव्यवसायसामग्र्यां तेन रूपेण प्रामाण्यग्राहकत्वनिश्चयो न्यायमतेन गुरोः सम्भवतीत्यर्थः। ज्ञानप्रत्यक्षोत्पादकसामग्रीत्वेनाभ्युपादानासम्भवेऽपि कालघटितकारणपर्याप्तसमुदायत्वेन तदुपादानसम्भवादनुव्यवसायसामग्रीवारणं शङ्कते। यदीति। विशेष्यवृत्तेः केनापि रूपेणाभावानङ्गीकारादिति भावः। शङ्कायाः सर्वथा तुच्छत्ववारणाय ज्ञानसामग्रीत्वादिनेति। आदिना ज्ञानग्राहकसामग्रीत्वग्रहः। इदानीमभ्युपगमे धर्मितावच्छेदकं निवेश्य शङ्कां सङ्क्रमयति यदिचेति। सामग्रीत्वादिनेत्यादिना प्रामाण्याविषयकस्वविषयकज्ञानकसामग्रीत्वग्रहः। एकतरेति। धर्मिज्ञानोत्पादकसामग्रीत्वस्य धर्मिज्ञानघटिततया बोध्यस्मरणोत्पादकसामग्रीत्वस्य बोध्यस्मरणघटिततया सत्त्वेन ज्ञानं गुण इत्यादिशाब्दबोधव्यक्तिनैव तज्ज्ञानपदेनोपादाय तदुत्पादकसामग्रीत्वेनोभयमतसिद्धान्यतराग्रादित्यर्थः। अन्यथाव्यातिव्यक्त्युत्पादकसामग्रीत्वं च गुरुमतेऽसिद्धमेवेति भावः। व्यवसायतया स्वीकृतज्ञानग्रहव्यक्तीति। इयं तज्ज्ञानव्यक्तिपदार्थ इति सूचनाय व्यक्तिपदम्, तथाच न्यायमतेऽनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वमनपवादमिति भावः।

अत्र मिश्रेण समं विवादे आहत्य नैयायिकानामुद्देश्यं सिद्धत्येव नत्वेतावता त्रिभिर्विवादे तेषामाहत्य तत्सिद्धिरावश्यकी। भट्टेन समं विवादे ज्ञाततालिङ्गकानुमितिसामग्र्याः प्रामाण्यग्राहकत्वस्य दुःसाधनत्वात् न्यायमते तादृशसामग्र्या एवाप्रसिद्धेः तस्यां ज्ञानविषयतालिङ्गकत्वमुपगम्य तत्साधने ज्ञाततायां विवादपर्यवसानापत्तेः। एवं च गुरुणा समं विवादे साध्याघटकीभूताया व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वासिद्धावपि न क्षतिः सर्वथोद्देश्यासिद्धिविरहादित्याशयेन समाधत्ते अनुव्यवसायेति। यावदनुव्यवसायसामग्र्याः प्रामाण्यग्राहकत्वे साधनीये यत्किञ्चित्तत्सामग्र्यास्तदग्राहकत्वस्य विरोधित्वादिति भावः। तर्हि गुरुणा समं विवादे नैयायिकानां स-

वंथोद्देश्यं न सिद्ध्येदित्यत आह ज्ञानस्येति। न्यायमते व्यवसायानुव्यवसाययोर्भेदव्यवस्थाप्यज्ञानस्य स्वविषयकत्वखण्डनेन व्यवसायसामग्र्याः साध्यघटकज्ञानग्राहकत्वखण्डनादेव प्रामाण्यग्राहकत्वरूपोद्देश्यसिद्धिरिति भावः। एवं भट्टेन समं विवादे ज्ञाततारूपपदार्थान्तरमस्तु मा वाऽनुमितिसामग्रीतल्लिङ्गकालस्थानिकवस्त्वन्तरलिङ्गका वा सर्वापि साध्यघटिकाऽस्तु ज्ञानस्यातीन्द्रियतां निराकृत्य प्राथमिकज्ञानग्राहकग्राह्यतानिराकरणादुद्देश्यसिद्धिर्बोध्या। वज्रलेपायितत्वादिति। भट्टमतासिद्धभिन्नसन्निवेशेऽपीदं विशिष्टज्ञानसामग्र्या इति विशेषणज्ञानस्याकारणतया गुरुभिरुपनीतभानानुपगमात्। एतन्मते इति। पूर्वमतेऽन्वयबोधसामग्रीत्वेन भट्टमतसिद्धत्वात्। सकलेति। ज्ञानवानिच्छाया इत्यादौ। तत्तद्ग्रहेति। तज्ज्ञानोत्पादकसामग्रीत्वेनाधिकरणाद्यात्मकाभावगर्भकारणानां प्रामाण्याग्राहकत्वाद्वित्यर्थः। ज्ञानमिति। अन्यथाख्यातिमादाय तज्ज्ञानव्यक्त्युत्पादकसामग्रीत्वमप्रसिद्धम् धर्मिज्ञानबोध्यस्मरणैकतरव्यक्तिमुपादाय तत्प्रसिद्धावपि क्वचिदन्यथाख्यातिसामग्र्यां गुरुमतासिद्धभिन्नत्वमित्येकसत्त्वेपि द्वयं नास्तीतिन्यायेन मतत्रयसिद्धान्यत्वमित्यर्थः। इत्यादिकमिति। उक्तरीत्या भट्टमते कथश्चिज्ज्ञानग्राहकपदसार्थक्यम् गुर्वादिमते संपूर्णं व्यर्थम्। पूर्वमते च घटादिसामग्रीवारणाय ग्राहकपदसार्थक्यं ज्ञानपदं तु भट्टानुग्रहायेति। एवं ज्ञानजन्याज्ञाततेति प्रत्यक्षमादाय बाधवारणाय पूर्वोक्तविशेषणानुधावने च न्यायमतसिद्धत्वघटितविशेषणं व्यर्थमित्यस्याविना परिग्रहः। श्रीरस्तु॥

हरिचरणसरोजे द्वन्द्वते पूजनीये
विविधवसुसमाजांस्तान् प्रमाणान्निशम्य।
मणिघृणिसुसमीक्षाकाशिकावर्णमन्त्रै-
र्भ्रमहरपरिपाटीपुष्पपूजां नमामि॥ १॥

इति श्रीरङ्गनाथसूरिसूनुनारायणानुजस्य कृष्णभट्टस्य स्वतस्त्वप्रथमविप्रतिपत्तिगादाधरीकाशिकाकृतिः(१) सम्पूर्णा॥

---

(१) अतः परं प्रत्यक्षगादाधर्याः प्रामाण्यवादस्य कालीशङ्कर्याख्यं क्रोडपत्रं यथोपलब्धं प्रकाश्यते।

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (प्रथमम्)

# प्रामाण्यवादगादाधरीक्रोडपत्रम्।

न च यस्य संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तेरिवेति मूलम्। यस्य संशयव्यतिरेकनिश्चयौ—यद्यतिरेकसंशयनिश्चयौ इति शिरोमणिः। अत्र परेत्वित्यादिना घटस्य संशय इत्यादौ स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वसामानाधिकरण्योभयसम्बन्धेन विषयितावििशिष्टविषयिताशालिज्ञानं संशयपदार्थः चरमविषयितायामेव षष्ठ्यर्थस्य निरूपकत्वस्य निरूप्यत्वस्य वाऽन्वय इत्युक्तम् भट्टाचार्येण।

ननु प्रथमविषयितायां षष्ठ्यर्थस्यान्वयः कथं न कृत इति। न च प्रथमविषयितायामन्वये एकदेशान्वयप्रसङ्गः, द्वितीयायामन्वये तु न तथा विषयिताविशिष्टविषयिताज्ञानोभयस्य संशयपदार्थत्वादिति वाच्यम् चैत्रस्य पुत्र इत्यादिवत् सप्रतियोगिकपदार्थतावच्छेदकेनेतरान्वयस्य व्युत्पन्नत्वात् पदार्थतावच्छेदकजात्या सहैवेतरान्वयस्याव्युत्पन्नत्वात् इति चेन्न प्रथमविषयितायां षष्ठ्यर्थान्वये घटं सन्देग्धीतिशाब्दबोधस्य घटत्वावच्छिन्नविषयिताशालिज्ञानाभावप्रकारक-घटं न जानामीत्याकारकनिश्चयप्रतिबध्यतानुपपत्तेरिति ध्येयम्।

केचित्तु प्रथमविषयितायामन्वये घटसंशयो न घटीय इति व्यवहारस्य प्रामाण्यापत्तिः। चरमविषयितायां घटीयत्वाभावेनोक्तव्यवहारस्य घटीयत्वाभाववत् तादृशविषयिताशालित्वादित्याहुः। तन्न तादृशव्यवहारस्य संशयधर्मिकघटविषयितावदन्यत्वबोधकतया प्रामाण्यापत्तेरयोगात् अन्यथा चरमविषयितायामन्वयेऽपि घटसंशयो न घटाभावीय इत्यादिव्यवहारस्याप्रामाण्येन तस्य प्रामाण्यापत्तेर्दुरुद्धरत्वादिति ध्येयम्॥ १॥

अथ निरुक्तविषयिताविशिष्टविषयिताशालिज्ञानस्य संशयपदा-

र्थत्वे भूतलं घटवन्नवेत्यादिसंशयस्य भूतलसंशयत्वापत्तेः तादृशविषयिताविशिष्टभूतलविषयितासत्त्वादिति । न च प्रकारिताविशिष्टप्रकारिताशालिज्ञानत्वमेव संशयत्वम् प्रकारितायाश्च भूतलनिरूपितत्वाभावान्नोक्तापत्तिरिति वाच्यम् वायौ रूपं नवेत्यादिसंशयस्य रूपसंशयत्वानुपपत्तेः असमानप्रकारकज्ञानस्य प्रतिबन्धकत्वे वायुवृत्तित्वसंशयत्वापत्तेश्चेति चेन्न प्रागुक्तोभयसम्बन्धेन—एवं स्वावच्छेदकीभूतधर्मावच्छिन्नस्वरूपाभावप्रतियोगितावच्छेदकावच्छिन्नत्व—एतत्त्रितयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानस्य संशयपदार्थत्वान्नानुपपत्तिः । अथवा स्वनिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदताकविषयित्वावच्छिन्नं यत् स्वं तदन्यत्वस्य चरमविषयितायां निवेशान्न भूतलं घटवन्नवेत्यादिसंशयस्य भूतलसंशयत्वापत्तिः संशये उभयकोटितानिरूपितविशेष्यताद्वयस्योपगमेन भूतलविषयितायां तादृशान्यत्वविरहात् न वा वायौ रूपं नवेत्यादिसंशयस्य रूपसंशयत्वानुपपत्तिः रूपविषयितायां तादृशान्यत्वसत्त्वादिति ध्येयम् ॥ २ ॥

तेन व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यत इति शिरोमणिः । व्यतिरेकज्ञानत्वेनेति तृतीयार्थोऽनतिरिक्तवृत्तित्वं नतु स्वरूपसम्बन्धरूपम् तथासति ग्राह्याभावज्ञानत्वस्य ग्राह्यज्ञानप्रतिबन्धकतावच्छेदकग्राह्याभावनिश्चयत्वघटकत्वेन ग्राह्यनिश्चयस्य च ग्राह्यज्ञानाहेतुतया ग्राह्यविशिष्टबुद्धौ व्यभिचारस्य दुर्वारत्वात् । पर्याप्तिनिवेशे च तदर्थपर्यालोचने लाघवासम्भवादित्युक्तम् भट्टाचार्येण ।

अथ यद्व्यतिरेकघटकीभूताखण्डधर्मप्रकारेण पदार्थान्तरावगाहिभ्रमस्य प्रतिबन्धकत्वानुरोधेन परस्परोपश्लेषावगाहिविषयिताशालिज्ञानत्वेनैव प्रतिबन्धकत्वं वाच्यम् तथाच यद्व्यतिरेकग्रहत्वपर्याप्तावच्छेदकताकप्रतिबन्धकत्वमेवासिद्धम् कुतोऽवच्छेदकतापर्याप्तिनिवेशे लाघवगौरवविवेचनमिति । न च यत्र विषयविशेषेऽनुमितेरितरसामग्रीसमवधानकाले व्याप्तिघटकपदार्थांशे भ्रमात्मकव्याप्त्यादिव्यतिरेकज्ञानं कस्यापि न जातम् तत्र विशिष्टज्ञानत्वेनैव प्रतिबन्धकता कल्प्यते लाघवादिति तत्रैव पर्याप्तिनिवेशसम्भव इति वाच्यम् तादृशविषयस्य प्रामाणिकत्वे पर्याप्तिघटितनियमस्य सम्भवेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितनियमस्वीकारस्यानौचित्यात् । नचा-

वच्छेदकतायाः प्रत्येकपर्याप्तिनिवेशेऽप्रसिद्धभ्रमस्थलविशेषे विशिष्टबुद्धौ व्यभिचारवारणासम्भवात्तदतिरिक्तधर्मानवच्छिन्नत्वे सति तदवच्छिन्नत्वत्वरूपैव पर्याप्तिर्निवेश्या तथाच तदपेक्षयाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेन गौरवमिति वाच्यम् व्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकताया अपि व्याप्त्यादिव्यतिरेकज्ञानत्वातिरिक्तप्रामाण्यज्ञानाभावादिनाऽवच्छेदात् दृष्टान्तासिद्ध्याद्यापत्तेः । अनतिरिक्तवृत्तित्वस्यापि स्वव्यापकतत्कत्वपर्यवसन्नतया व्यापकताघटकाभावप्रतियोगितावच्छेदकतापर्याप्तिनिवेशस्यावश्यकत्वेन व्यापकत्वमनिवेश्य पर्याप्तिनिवेशलाघवानवकाशस्यासम्भवदुक्तिकत्वाच्च इति चेत् ।

अत्र केचित् यद्धर्मावच्छिन्नव्यतिरेकज्ञानत्वे प्रतिबन्धकतावच्छेदकतापर्याप्तिनिवेशस्य भ्रमसाधारणप्रतिबन्धकत्वानुरोधेनाशक्यत्वेऽपि वक्ष्यमाणरीत्यैव पर्याप्तिर्निवेशयितुं शक्यते तादृशनिवेश एव लाघवासम्भवः । तथाहि अप्रामाण्यज्ञानाभावविशिष्टयद्धर्मावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकतादृशविषयत्वावच्छिन्नजनकतावच्छेदकत्वोपलक्षितविषयिताशालिज्ञानत्वपर्याप्तावच्छेदकताकप्रतिबन्धकतैव निवेश्यते । तथाच पर्याप्तिनिवेशे स्फुटतरगौरवम् जनकतायां निरुक्तविषयताशालिनिश्चयत्वव्यापकतानिवेशात् व्याप्त्यभावविशिष्टहेतुतावच्छेदकावच्छिन्नविशेष्यकधर्मान्तरप्रकारकनिश्चयत्वावच्छिन्नजनकतावच्छेदककतिपयविषयतानां व्याप्त्यभावप्रकारकज्ञानत्वावच्छिन्नप्रतिबन्धकतावच्छेदककोट्यप्रविष्टत्वेऽपि न क्षतिः । तादृशजनकतायां निरुक्तविषयित्वावच्छिन्नत्वनिवेशाच्च निरुक्तविषयताशालिनिश्चयत्वव्यापकजनकतावच्छेदकीभूतानामुदासीनज्ञानीयव्याप्तिघटकपदार्थविषयितानां व्याप्त्यभावज्ञानत्वावच्छिन्नप्रतिबन्धकतावच्छेदककोट्यप्रविष्टत्वेऽपि न क्षतिः । वस्तुतस्तु निरुक्तजनकतावच्छेदकविषयिताश्रयत्वोभयपर्याप्ताभावनिष्ठावच्छेदकताभिन्नसाक्षादवच्छेदकताकप्रतिबन्धकत्वमेव विवक्षणीयम् । तथाच भ्रमप्रमासाधारणव्याप्त्यभावज्ञानीयविषयतानां निरुक्तजनकतावच्छेदकत्वेन तादृशविषयिताश्रयत्वे उभयस्मिन् अभावनिष्ठावच्छेदकताभिन्नाया अनुमितिप्रतिबन्धकतावच्छेदकतायाः पर्याप्तत्वादनुमितौ दृष्टान्तत्वनिर्वाहः । ईदृशी-

त्या पक्षे साधनत्वनिर्वाहोऽपि बोध्यः । साक्षादवच्छेदकतायामभाव-निष्ठावच्छेदकताभेदानिवेशादनुमितिप्रतिबन्धकतावच्छेदककोटौ अप्रामाण्यनिश्चयाभावादीनां निवेशेऽपि न दर्शितरीत्या पर्याप्तिनिवेशासम्भवः । न च विशिष्टबुद्धौ व्यभिचारः ग्राह्याभावनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपिताया अभावनिष्ठावच्छेदकताभिन्नसाक्षादवच्छेदकताया निरुक्तविषयताज्ञानत्वोभयस्मिन् पर्याप्तत्वादिति वाच्यम् विरोधिकोटिप्रकारकत्वातिरिक्ताभावनिष्ठावच्छेदकताभेदस्य विवक्षणीयतया विरोधिकोटिप्रकारकत्वातिरिक्ताभावनिष्ठावच्छेदकताभिन्नत्वस्य विरोधिकोटिप्रकारकत्वनिष्ठावच्छेदकतायां सत्त्वेन तत्साधारणावच्छेदकत्वस्य निरुक्तविषयताज्ञानत्वोभयपर्याप्तत्वात् विशिष्टबुद्धौ व्यभिचाराभावात् । एतेनाप्रामाण्यनिश्चयाभावविशिष्टनिरुक्तविषयताशालिज्ञानत्वावच्छिन्नप्रतिबन्धकतानिवेशेनैव सामञ्जस्ये पर्याप्तिनिवेशस्यासङ्गतिः । विशिष्टबुद्धिप्रतिबन्धकतावच्छेदककोटौ अप्रामाण्यनिश्चयाभावनिवेशेन तद्घटितधर्मावच्छिन्नप्रतिबन्धकत्वाभावादेव विशिष्टबुद्धौ व्यभिचारासम्भवेन तन्मात्रप्रयोजनकस्य पर्याप्तिनिवेशस्यानर्थक्यादित्यपि परास्तम् । अनतिरिक्तवृत्तित्वनिवेशापेक्षया पर्याप्तिमनिवेश्य निरुक्तजनकतावच्छेदकविषयतायां स्वरूपसम्बन्धात्मकावच्छेदकतानिवेशोऽपि लाघवासम्भवादित्याहुः ।

तच्चिन्त्यम् । यद्यतिरेकज्ञानत्वव्यापकत्वेन प्रतिबन्धकत्वमनिवेश्य यद्यतिरेकनिश्चयत्वव्यापकतावच्छेदकविषयितावच्छिन्नत्वेन प्रतिबन्धकतानिवेशस्यापि शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात् । यद्व्यतिरेकज्ञानत्वव्यापकतानिवेशस्योभयत्रैव साम्यादिति ध्येयम् ।

नव्यास्तु यद्व्यतिरेकज्ञानत्वावच्छिन्नत्वपदेन यद्धर्मावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकावच्छिन्नविशेष्यताशालिग्रहत्वावच्छिन्नत्वमेव विवक्षणीयम् । साध्यीभूतजन्यत्वमपि तद्धर्मावच्छिन्नकारणताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितं ग्राह्यम् नातो धर्मभेदमादाय दोषः । न चैवमपि तादृशयद्व्यतिरेकग्रहत्वव्याप्त्यवच्छेदकताकत्वस्य प्रतिबन्धकतायां निवेशापेक्षया गुरुतरव्यापकतानिवेशोऽनुचित इति वाच्यम् अप्रामाण्यज्ञानाभावादेरपि अनुमित्यादिनिरूपितव्याप्त्यभावज्ञानादिनिष्ठप्रतिबन्धकतावच्छेदककोटौ प्रविष्टतया त-

प्रतिबन्धकतायामपि तादृशग्रहत्वपर्याप्तावच्छेदकत्वस्य विशिष्टधी-प्रतिबन्धकतावच्छेदकत्वेऽपि तस्याभावरूपतया अभावावृत्तितादृशग्रहत्वपर्याप्तावच्छेदकत्वस्य विशिष्टधीप्रतिबन्धकतायामपि सत्त्वेन विशिष्टव्यभिचारप्रसङ्गात् । विरोधिप्रकारत्वाभावातिरिक्ताभावावृत्त्यवच्छेदकतायाः पर्याप्तिनिवेशे चाभावद्वयघटिततादृशव्यतिरेकग्रहानिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वनिवेशापेक्षयाऽभावत्रयघटितनिरुक्तावच्छेदकत्वपर्याप्त्यधिकरणयद्व्यतिरेकग्रहत्वकत्वस्य प्रतिबन्धकताविशेषणत्वे लाघवानवकाशः । एतेन व्यापकताघटकाभावप्रतियोगितावच्छेदककोटावपि पर्याप्तिनिवेशस्यावश्यकतया व्यापकतानिवेशापेक्षया पर्याप्तिनिवेशे लाघवानवकाशोऽसम्भवदुक्तिक इति प्राग् यदुक्तं तदपि प्रत्युक्तम् । निरुक्तपर्याप्तिघटकाभावत्रयप्रतियोगितावच्छेदककोटावपि पर्याप्तिनिवेशस्यावश्यकत्वादित्याहुः ।

एतदपि प्रतिबन्धकतावच्छेदककोटौ तत्तद्धर्मपर्याप्तावच्छेदकताकप्रतियोगितासम्बन्धावगाहित्वनिवेशमतानुसारेण संसर्गांशे भ्रमानभ्युपगमेन च यथाकथञ्चित् सङ्गच्छतं प्रतिबन्धकतावच्छेदककोटौ प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकतापर्याप्तिनिवेशमते प्रतियोगितासम्बन्धेन व्याप्तिप्रकारकस्य व्याप्तिघटकपदार्थांशे भ्रमात्मकव्याप्त्यभावज्ञानस्यापि प्रतिबन्धकतयाऽखण्डव्याप्तित्वावच्छिन्नप्रकारतायां प्रतिबन्धकतावच्छेदकतावच्छेदकत्वेन यद्धर्मपदेन व्याप्तित्वस्य धर्तुमशक्यतया दृष्टान्तासिद्ध्यादिप्रसङ्गात । एवं संसर्गांशे भ्रमोपगमे व्याप्तित्वावच्छिन्नप्रतियोगित्वसंसर्गघटकव्याप्तिघटकपदार्थांशे भ्रमात्मकतादृशप्रतियोगित्वसम्बन्धावगाहिव्याप्त्यभावज्ञानस्यापि प्रतिबन्धकत्वेन वास्तवव्याप्तित्वावच्छिन्नप्रतियोगितासंसर्गतावगाहितायाः प्रतिबन्धकतानवच्छेदकतया यद्धर्मपदेन व्याप्तित्वादेरुपादानासम्भवेन तद्दोपप्रसङ्गाच्चेत्यवधेयम् ।

केचित्तु अप्रसिद्धभ्रमस्थले उक्तरीत्याऽभावत्रयघटितपर्याप्ति निवेश्य वास्तवयद्व्यतिरेकग्रहत्वावच्छिन्नप्रतिबन्धकतानिवेशोऽपि सम्यक् तत्र च व्यापकतानिवेशापेक्षया लाघवानवकाश इत्यभिप्रायेण ग्रन्थं सङ्गमयन्ति ॥ ३ ॥

अथ तथापि विरोधिप्रकारकत्वाभावनिष्ठावच्छेदकत्वानिरूपक-

यद्व्यतिरेकग्रहत्वावच्छिन्नप्रतिबन्धकत्वनिवेशेनैव विशिष्टबुद्धौ व्यभिचारवारणं सम्भवति विरोध्यप्रकारकयद्व्यतिरेकप्रकारकग्रहत्वरूपनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां विरोधिप्रकारकत्वाभावनिरूपकत्वसत्त्वेन तस्या हेत्वघटकत्वात् इति किं गुरुतरव्यापकतानिवेशेनेति चेन्न निश्चयत्वं हि केषाञ्चिन्मते विरोधिप्रकारकत्वानवच्छिन्नतदभावप्रकारिताशालिज्ञानत्वरूपम्, केषाञ्चिन्मते विरोधिप्रकारकत्वानवच्छिन्नतदभावप्रकारकत्वावच्छिन्नकिञ्चिद्धर्मावच्छिन्नविशेष्यकत्वरूपम्, केषाञ्चित् विरोध्यप्रकारकतदभावप्रकारकज्ञानत्वरूपमित्यादिनानामतानुसारेण विशिष्टबुद्धौ व्यभिचारवारणाय विरोधिप्रकारित्वावच्छिन्नाभावनिष्ठावच्छेदकत्वानिरूपकतदभावप्रकारितानिष्ठावच्छेदकतानिरूपिका विरोधिप्रकारत्वावच्छिन्नाभावनिष्ठावच्छेदकत्वानिरूपककिञ्चिद्धर्मावच्छिन्नविशेष्यकत्वनिष्ठावच्छेदकतानिरूपिका च सती विरोधिप्रकारकत्वाभावनिष्ठावच्छेदकत्वानिरूपिका या यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकता तन्निवेशापेक्षया यद्व्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतानिवेशस्यैव लघुत्वादिति ध्येयम् ॥ ४ ॥

अथ यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिवेशोऽपि तादृशव्याप्त्यादिव्यतिरेकज्ञाने यद्धर्मावच्छिन्नांशे यद्धर्मावच्छिन्नत्वं भासते तद्धर्मावच्छिन्नांशे तद्धर्मावच्छिन्नव्यतिरेकावगाहि-अभावो हेत्वसमानाधिकरण-इत्यादिज्ञाननिरूपितप्रतिबन्धकताया अपि व्याप्त्यादिव्यतिरेकज्ञानत्वव्यापकतया व्याप्त्यादिनिश्चयाजन्ये अभावो हेत्वसमानाधिकरण इत्यादिज्ञाने व्यभिचारो दुर्वार इति । न च यद्व्यतिरेकज्ञानत्वसमनियतप्रतिबन्धकतानिवेशान्नायं दोष इति वाच्यम् प्रतिबन्धकताया भ्रमसाधारणत्वात्तादृशसमनियत्याप्रसिद्धेः । न चाभावाद्यंशे हेतुसामानाधिकरण्यादिसंशयात्मकव्याप्त्यादिव्यतिरेकज्ञाने उक्तप्रतिबन्धकत्वाभावान्नेयमाशङ्केति वाच्यम् प्रतियोगिविशेषिताभावज्ञानस्य विशिष्टवैशिष्ट्यावगाहितानियमे विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतादृशज्ञानाप्रसिद्धेः । न च स्वव्यापकत्वस्वभिन्नत्वोभयसम्बन्धेन यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतावदन्ययद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकता निवेशनीया व्याप्त्यादिव्यतिरेकवद्वृत्वादिमान् देश इत्यादिज्ञानीयतादृशहेत्वभावज्ञानप्रतिबन्धक-

तावदन्यत्वं व्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतायामपि नास्तीति भेदप्रतियोगिकुक्षिनिक्षिप्तप्रतिबन्धकतायां यद्व्यतिरेकज्ञानत्वव्यापकता निवेशः। यदि च विशेष्यताप्रकारतानां विशेष्यविशेषणभाववैपरीत्येन प्रतिबन्धकता नानैव तथाच व्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतायामपि न तादृशप्रतिबन्धकतावदन्यत्वमिति दृष्टान्तासिद्ध्यादिप्रसङ्ग इत्युच्यते तदा स्वव्यापकत्वस्वानाधिकरणवृत्तित्वोभयसम्बन्धेन तादृशप्रतिबन्धकतावदन्यत्वं निवेशनीयमिति वाच्यम् एवमपि व्याप्त्यादिव्यतिरेकवद्धेतुमत्त्वाद्यभावग्रहत्वव्यापकीभूतव्याप्त्यादिव्यतिरेकग्रहत्वव्यापकतावदन्यतादृशप्रतिबन्धकताकानुमित्यादौ व्याप्त्यादिव्यतिरेकवद्धेत्वादिनिश्चयाजन्ये व्यभिचारस्य दुर्वारत्वात् व्याप्त्यादिव्यतिरेकवद्धेतुव्यतिरेकानिश्चयत्वावच्छिन्नप्रतिबन्धकतायास्तादृशसंशयावृत्तित्वेन तादृशहेतुव्यतिरेकग्रहत्वव्यापकत्वाभावेन स्वपदेनोपादातुमशक्यत्वात्। यद्व्यतिरेकानिश्चयत्वव्यापकप्रतिबन्धकतावदन्यव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतां निवेश्योक्तव्यभिचारवारणेऽपि व्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतायां व्याप्त्यादिव्यतिरेकानिश्चयत्वावच्छिन्नप्रतिबन्धकतावत्त्वेन तादृशप्रतिबन्धकत्ववदन्यत्वाभावाद्दृष्टान्तासिद्ध्यादिप्रसङ्गः। न च यद्व्यतिरेकग्रहत्वव्यापकयद्व्यतिरेकविषयित्वावच्छिन्नप्रतिबन्धकत्वमेव निवेशनीयम् तथाचाभावो हेत्वसमानाधिकरण इत्यादिज्ञानीयप्रतिबन्धकतायां व्याप्त्यादिव्यतिरेकग्रहत्वव्यापकत्वेऽपि तादृशविषयित्वावच्छिन्नत्वाभावादेव न व्यभिचार इति वाच्यम् अभावो हेत्वसमानाधिकरण इत्यादिज्ञानीयप्रतिबन्धकतायाम् 'एकत्र द्वयमिति' रीत्या हेतुसामानाधिकरण्यत्वव्याप्त्याभावत्वोभयावच्छिन्नप्रकारताकाभावविशेष्यकज्ञानीयतादृशप्रकारत्वावच्छिन्नत्वस्यापि सत्त्वेन व्यभिचारस्य दुर्वारत्वादिति।

नैवम् यद्व्यतिरेकग्रहत्वाव्यापकयद्व्यतिरेकत्वावच्छिन्नप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्यताशालिग्रहत्वव्यापकप्रतिबन्धकताकं यत्तद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नजनकताकमिति समुदितार्थस्य विवक्षणात् तथाचाभावो हेत्वसमानाधिकरण इत्यादिज्ञाननिरूपितप्रतिबन्धकताया व्याप्त्यादिव्यतिरेकग्रहत्वाव्यापकत्वविरहेण व्युदासः। अनु-

मित्यादिनिरूपितधूमादिनिष्ठव्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिबन्धकताया व्याप्त्यादिव्यतिरेकग्रहत्वाव्यापकत्वेन सङ्ग्रहश्च प्रतियोगितासम्बन्धेन व्याप्त्यभाववान् भाव इत्यादिज्ञाननिरूपितव्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतामादाय व्यभिचारवारणाय यद्ग्रहत्वाव्यापकत्वमपहाय यद्व्यतिरेकग्रहत्वाव्यापकत्वनिवेशः। न च तथापि व्याप्त्यादिप्रकारकगुणकर्मान्यत्वविशिष्टहेत्वादिविशेष्यकनिश्चयाजन्ये उक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावति गुणकर्मान्यत्वाभाववत् सत्त्वमित्यादिज्ञाने व्यभिचारो दुर्वार इति वाच्यम् विशेष्यतावच्छेदकत्वेन यद्धर्मस्य निवेशस्तद्धर्मविशिष्टग्रहत्वाव्यापकत्वस्यापि प्रतिबन्धकतायां निवेशनीयत्वादिति ध्येयम्।

केचित्तु यदभावावगाहिताप्रयुक्तयद्व्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतानिवेशान्न प्रागुक्तदोषावकाश इत्याहुः।

यत्तु व्याप्तिशरीरेऽप्रामाण्यनिश्चयानास्कन्दितयद्व्यतिरेकग्रहत्वव्यापकतानिवेशेनैवाभावो हेत्वसमानाधिकरण इत्यादिज्ञाने व्यभिचारवारणसम्भवः। हेतुसामानाधिकरण्याद्यंशेऽप्रामाण्यसंशयास्कन्दितव्याप्त्यादिव्यतिरेकग्रहस्योक्तविशिष्टधीप्रतिबन्धकत्वाभावेन व्यापकत्वाभावात् ग्राह्याभावनिश्चयस्याप्रामाण्यज्ञानाभावविशिष्टत्वेनैव प्रतिबन्धकत्वात् इति यथाश्रुतमेव सम्यगिति।

तन्न संशयसाधारणप्रतिबन्धकतास्थलेऽप्रामाण्यनिश्चयाभावस्य प्रतिबन्धकतावच्छेदकघटकत्वस्यावश्यकत्वेऽपि प्रकृतव्याप्तिशरीरेऽप्रामाण्यनिश्चयाभावमपेक्ष्य लाघवेनाप्रामाण्यज्ञानाभावस्य सामान्यनिरुक्तिपत्रिकोक्तयुक्त्याऽभावविशिष्टान्यत्वस्य वा निवेशौचित्यात्। उक्तदोषवारणाय गुरुतरनिश्चयत्वावच्छिन्नाभावनिवेशसम्भवेऽपि ग्राह्याभावनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय घटादिविशिष्टबुद्धौ व्यभिचारवारकानतिरिक्तरूपावच्छेदकत्वनिवेशवैफल्यापत्तेश्चाप्रामाण्यनिश्चयाभावस्य ग्राह्याभावनिश्चयप्रतिबन्धकतावच्छेदकाघटकतया स्वरूपसम्बन्धरूपावच्छेदकतानिवेशस्यैव सम्यक्त्वादिति ध्येयम्॥ ५॥

इदं पुनरिहावधेयम्। अप्रामाण्यग्रहाभावविशिष्टयद्व्यतिरेकग्रहत्वस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशापेक्षयाऽप्रामाण्यनिश्चयाभावविशिष्टयद्व्यतिरेकग्रहत्वस्य स्वरूपसम्बन्धरूपावच्छेदकत्व-

निवेश एव लाघवादुचितः। निश्चयत्वस्य स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वापेक्षया लघुशरीरत्वात् तावतैव च बाधप्रतिबन्धकतामादाय घटादिविशिष्टबुद्धौ, एवं विशेषणान्तरादानेऽपि अभावो हेत्वसमानाधिकरण इत्यादिज्ञाने च व्यभिचारानवकाशः तत्तत्प्रतिबन्धकताया अप्रामाण्यनिश्चयाभावविशिष्टव्याप्त्यादिव्यतिरेकग्रहत्वावच्छिन्नत्वात् इति तत्कथमुपेक्षितमिति चेदत्राहुः।

निश्चयत्वस्य मतभेदेन भिन्नतायाः प्रागेवोक्ततया एकमतसिद्धनिश्चयत्वावच्छिन्नाभावनिवेशे मतान्तरासङ्ग्रहः। एवमप्रामाण्यज्ञानस्याननुगमेन प्रतिबन्धकतावच्छेदकतावच्छेदककोटौ यद्यनुगतरूपेणाप्रामाण्यनिश्चयाभावो न निवेश्यते किन्तु तत्तद्व्यक्तित्वावच्छिन्नाभावा एव गत्यन्तराभावात्तदाऽप्रामाण्यनिश्चयसामान्याभावस्य प्रतिबन्धकतानवच्छेदकतया दृष्टान्तासिद्ध्यादिप्रसङ्गः। तत्तदप्रामाण्यज्ञानाभावस्य व्याप्तिघटकत्वे च बाधादिप्रतिबन्धकतामादाय विशिष्टबुद्धौ व्यभिचारतादवस्थ्यम् तत्तदप्रामाण्यनिश्चयाभावस्य बाधप्रतिबन्धकतायामप्यवच्छेदकत्वादिति ध्येयम्। नच तथापि यद्व्यतिरेकसंशयवृत्तिप्रतिबन्धकतानिवेशेनैव बाधादिप्रतिबन्धकतावारणसम्भवात् यद्व्यतिरेकग्रहत्वव्यापकतानिवेशनमफलमिति वाच्यम् पर्वतत्वादिसामानाधिकरण्येन घटादिनिश्चयात्मकपर्वतत्वावच्छेदेन घटादिकोटिकपर्वतत्वसामानाधिकरण्येन घटाभावादिकोटिकसंशयवृत्तिप्रतिबन्धकताके पर्वताद्यवच्छेदेन घटाभावादिबोधकव्यभिचारवारकतया व्यापकत्वनिवेशस्यावश्यकत्वादिति ध्येयम्॥ ६॥

अथ धूमत्वाद्यवच्छिन्नविशेष्यकव्याप्त्यादिव्यतिरेकत्वावच्छिन्नप्रकारताकज्ञानस्य जातित्वादिना धूमत्वाद्यवगाहिजातिमान् व्याप्त्यभाववानित्यादप्रतिबन्धकज्ञानसाधारणत्वात् सर्वत्रैव प्रतिबन्धकतायां व्यापकत्वं सम्भवतीति चेन्न स्वावच्छेदकीभूतविषयताशालियद्व्यतिरेकग्रहत्वव्यापकताया विवक्षितत्वात स्वपदं प्रतिबन्धकतापरम्। संशयेपि प्रतिबन्धकतावच्छेदकविषयतासत्त्वात् न बाधादिप्रतिबन्धकतामादाय विशिष्टबुद्धौ व्यभिचारः। वस्तुतस्तु यद्व्यतिरेकप्रकारतात्वावच्छिन्नस्वप्रतिबन्धकतावच्छेदकताश्रयमुख्यविशेष्यतानिरूपितयदभावत्वावच्छिन्नप्रकारताशालिग्रहत्वव्यापकतायाः स्वप्रतिबन्धकतावच्छेदकधर्मितावच्छेदकताख्यप्रकारताभिन्नमुख्य—

विशेष्यतानिरूपितयद्भावत्वावच्छिन्नप्रकारताशालिग्रहत्वव्यापक-प्रतिबन्धकताया वा निवेश एव कार्यः । तेन व्याप्त्यभावावगाहिता-प्रयुक्तप्रतिबन्धकतावच्छेदकविषयताशालिघटादिव्यतिरेकज्ञानत्व—व्यापकताहशप्रतिबन्धकताकानुमितौ घटादिनिश्चयाजन्यत्वेन व्य-भिचारः । प्रथमकल्पे स्वप्रतिबन्धकतावच्छेदकतायां घटादिव्यति-रेकप्रकारतात्वावच्छिन्नत्वाभावात्- द्वितीयकल्पेऽपि धर्मितावच्छे-दकताख्यप्रकारताभिन्नघटादिव्यतिरेकप्रकारतायां स्वप्रतिबन्धक-तावच्छेदकत्वाभावात् इति । अवच्छेदकत्वव्यतिरेकप्रकारतात्वाव-च्छिन्नावच्छेदकताकव्याप्त्याभावावगाहिताप्रयुक्तप्रतिबन्धकताकानु-मितौ अवच्छेदकत्वनिश्चयत्वावच्छिन्नाजन्यत्वात् व्यभिचारवार-णाय मुख्यविशेष्यतानिरूपितत्वं यदभावत्वावच्छिन्नप्रकारताविशे-षणमिति कृतं पल्लवितेन ॥ ७ ॥

मिश्रमते स्वप्रतिबन्धकताशालियत्संशयव्यतिरेकानिश्चयप्रतिब-ध्यत्वस्य हेतुत्वमुक्तम् । अत्र घटादिविशिष्टबुद्धौ व्यभिचारवारणाय यत्संशयोपादानम् । यत्पदेन व्यभिचारमादायाव्यभिचारविशिष्ट-बुद्धौ व्यभिचारवारणाय यद्व्यतिरेकनिश्चयोपादानम् । यत्पदेनाव्य-भिचारमादाय तद्विशिष्टबुद्धौ तत्संशयप्रतिबध्यत्वस्य तद्व्यतिरेक-निश्चयप्रतिबध्यत्वस्य च सत्त्वाद्व्यभिचार इति तद्वारणाय यत्संश-यव्यतिरेकनिश्चययोरभावत्वप्रकारतानैयत्यविशेषणं वैकल्पिकमि-त्युक्तम् । तत्र मेयत्वादिना व्याप्त्यान्तरावगाहिपक्षधर्मत्वाभावविष-यकनिश्चयेऽनुमितिप्रतिबन्धके व्याप्त्यभावत्वादिप्रकारकत्वाभावात् दृष्टान्तासिद्ध्यादिवारणाय व्यतिरेकनिश्चये यदभावप्रकारतानैयत्य-निवेशकल्प एव स्वप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वं नि-वेशितं भट्टाचार्येण ।

तस्यायमभिप्रायः । संशयपदेन यद्रूपावच्छिन्नप्रकारताशालि-संशयविवक्षणेऽपि दृष्टान्तासिद्ध्यादिवारणसम्भवः । यद्व्यतिरेकनि-श्चयपदेन यद्व्यतिरेकत्वावच्छिन्नप्रकारताकनिश्चयविवक्षणे तु निश्चये यदभावत्वप्रकारतानैयत्यनिवेशे व्यभिचारविशिष्टबुद्धौ व्यभिचा-रवारणासम्भव इति यद्व्यतिरेकनिश्चये यदभावत्वप्रकारतानैयत्यनि-वेशकल्प एव यदभावावगाहिताप्रयुक्तनिवेशनमिति । अथ संशये यदभावत्वप्रकारतानैयत्यनिवेशकल्पे स्वरूपसम्बन्धेन व्याप्तित्वेन

रूपेण व्याप्त्यवगाहिप्रतियोगितासम्बन्धेनाभावांशे व्याप्तित्वेन घटा-
द्यवगाहिसंशये यदभावत्वप्रकारतानैयत्यविरहेण दृष्टान्तासिद्धिः ।
एवंरीत्या प्रामाण्यसंशयविशेषे प्रामाण्याभावत्वप्रकारतानैयत्यविर-
हेण स्वरूपासिद्धिश्चेति । न च यत्संशयपदेन यन्निरूपितप्रतियोगि-
तावच्छेदकावच्छिन्नकोटिकसंशयस्य विवक्षणान्नोक्तदोषः व्याप्त्य-
भावत्वस्यैव व्याप्तिनिरूपितप्रतियोगितावच्छेदकतयोक्तसंशयस्य
वास्तवव्याप्त्यभावत्वावच्छिन्नकोटिकत्वात् इति वाच्यम् एवमपि
व्याप्तिमानाधेयत्वाभाववान् वा धूम इत्याकारकसंशये इदं ज्ञानं प्रा-
माण्यवत्प्रकारित्वाभाववद्वा इत्याकारकसंशये च व्याप्त्यभाववत्त्वा-
८ द्विप्रकारकत्वाभावेनोक्तदोषतादवस्थ्यादाधेयत्वाभावत्वादेरपि व्या-
प्त्यादिनिरूपितप्रतियोगितावच्छेदकत्वादिति चेन्न यदभावत्वप्रकार-
तानैयत्यपदेन यद्रूपावच्छिन्नप्रकारतात्वव्यापकीभूतरूपपर्याप्त्यव-
च्छेदकताकनिरूपकताकाभावत्वावच्छिन्नावच्छेदकतानात्मकविष-
यतानैयत्यस्य यद्रूपावच्छिन्नसंशये विवक्षितत्वात् । व्याप्तित्वाव-
च्छिन्नप्रकारतात्वव्यापकं भ्रमज्ञानीयनिरूप्यनिरूपकभावापन्नव्या-
प्तिप्रकारताकत्वमाधेयत्वत्वावच्छिन्नप्रकारतात्वञ्चेति तदवच्छिन्न-
निरूपकताकाभावत्वावच्छिन्नविषयतानैयत्यमुक्तसंशयेऽक्षतमेवेति
पर्याप्तिनिवेशात् अव्यभिचारत्वावच्छिन्नप्रकारतात्वव्यापकीभूतशु-
द्धप्रकारतात्वावच्छिन्ननिरूपकतामादाय न व्यभिचारः । अवच्छेदक-
तानात्मकविषयतानिवेशादव्यभिचारत्वावच्छिन्नप्रकारतात्वव्याप-
कीभूताभावत्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतामादायाभाव-
साध्यकस्थलेऽव्यभिचारविशिष्टबुद्धौ न व्यभिचारः । एतेन प्रतियो-
गिताया अभावविशेषणीभूतव्याप्तिघटकपदार्थांशे भ्रमरूपव्याप्तिसं-
शये व्याप्त्यभावत्वप्रकारतात्वविरहेण दृष्टान्तासिद्धिरपि निरस्ता ।
वास्तवव्याप्तित्वावच्छिन्नप्रकारतात्वव्यापकभ्रमप्रमासाधारणनिरूप्य-
निरूपकभावापन्नप्रकारतात्वमादाय दृष्टान्तासिद्धिवारणादिति ॥ ८ ॥

अथ व्यतिरेकनिश्चये यदभावत्वप्रकारतानैयत्यानिवेशपक्षे स्व-
प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वानिवेशेऽपि पक्षधर्म-
त्वाभावेन व्याप्त्यभावावगाहिनिश्चयमादाय दृष्टान्तासिद्धितादव-
स्थ्यम् । न च यदभावावगाहित्वपदेन यन्निरूपितप्रतियोगिताव-
च्छेदकावच्छिन्नावगाहिताविवक्षणान्नोक्तदोष इति वाच्यम् पक्षध-

र्मत्वाभावत्वस्यापि व्याप्तिनिरूपितप्रतियोगितावच्छेदकतयोक्तदो·
षतादवस्थ्यात् । पर्वतो वह्निमानिति विशिष्टबुद्धौ वह्निमदवृत्तिध·
र्मवत्तानिश्चयस्य प्रतिबन्धकतया वह्न्यधिकरणावृत्ति—आधेय·
त्वाभाववान् वह्न्यधिकरणावृत्तिवह्निसामानाधिकरण्याभाववान्
वा पर्वत इत्यादिनिश्चये व्याप्तिनिरूपितप्रतियोगितावच्छेद·
कावच्छिन्नावगाहिताप्रयुक्तप्रतिबन्धकताशालिनि यदभावत्वप्रका·
रतानैयत्यविरहेणासिद्धितादवस्थ्याच्चेति चेन्न यदभावावगाहि·
तापदेन यद्रूपावच्छिन्नप्रतियोगिताकाभाववृत्तियद्रूपाश्रयनिरूपि·
तप्रतियोगितावच्छेदकावच्छिन्नावगाहित्वस्य विवक्षितत्वात् ।
तथाचाव्यभिचारत्वस्य यद्रूपपदेनोपादानस्थले व्यभिचाराभा·
वावगाहित्वमिव व्यभिचारावगाहित्वमपि तादृशमतो नाव्यभिचा·
रनिश्चये व्यभिचारः । पक्षधर्मत्वाभावत्वेन व्याप्यभावावगाहिनि·
श्चयमादायासिद्धिवारणाय इत्यन्तम् प्रतियोगितावच्छेदकविशेषणम्
तद्व्यक्तिपदेन व्याप्यभावमादाय वह्न्यधिकरणावृत्तितद्व्यक्तिमानिति
निश्चयासिद्धिवारणाय यन्निरूपितप्रतियोगितावच्छेदकत्वविशेष·
णमिति ध्येयम् ॥ ९ ॥

ननु यत्संशय इत्यादेर्यत्संशयनिष्ठप्रतिबन्धकतार्थकत्वे वि·
भिन्नधर्मितावच्छेदककभूतलाद्यंशे घटाभावनिश्चयात्मकपर्वतादि·
विशेष्यकघटसंशयनिष्ठप्रतिबन्धकताके घटविशिष्टबुद्धौ व्यभिचा·
रः । एवं सामानाधिकरण्येन घटाभावनिश्चयात्मकसामानाधिकर·
ण्येन घटकोटिकावच्छेदकावच्छेदेन घटाभावकोटिकसंशयनिष्ठप्र·
तिबन्धकताकेऽवच्छेदकावच्छेदेन घटविशिष्टबुद्धौ व्यभिचार इति
चेन्न किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नकोटिता·
शालिसंशयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य विव·
क्षितत्वात् । नचैवं सत्यपि व्यभिचारनिश्चये व्यभिचारवारणायो·
पात्तस्य यदभावत्वप्रकारतानैयत्यविशेषणस्य वैयर्थ्यम् सर्वासा·
मेव व्यभिचारनिश्चयप्रतिबन्धकतानामव्यभिचारि न वा व्यभि·
चारि नवेत्यादिसंशयवृत्तिविभिन्नरूपावच्छिन्नानां चालनीन्यायेन
तादृशसंशयत्वव्यापकत्वादिति वाच्यम् स्वावच्छिन्नप्रतिबध्यतानि·
रूपितप्रतिबन्धकतावच्छेदकत्वसामानाधिकरण्योभयसम्बन्धेन ज्ञा·
नीयविषयताविशिष्टयद्रूपावच्छिन्ननिरूपितविषयतारूपसंशयत्ववि·

शिष्टप्रतिबन्धकत्वस्य विवक्षितत्वात् । संशयत्ववैशिष्ट्यञ्च व्यापकतासम्बन्धेन तथा चाव्यभिचारि नवा व्यभिचारिनवेत्यादिसंशयीयविषयभेदेन संशयत्वस्य भिन्नतया प्रतिबन्धकत्वस्य भिन्नत्वेऽपि व्यापकतासम्बन्धेन तादृशसंशयत्ववैशिष्ट्यमक्षतमेव । नच यदभावत्वप्रकारतानैयत्यविशेषणसार्थक्यार्थमेतादृशविवक्षाऽनुचितेति वाच्यम् धूमो वह्निव्याप्यो नवा वह्निव्याप्तिमानाधेयत्वाभाववान् वा इत्यकारकसंशयसाधारणैकप्रतिबन्धकत्वाभावेनानुमित्यादिप्रतिबन्धकतानामपि तादृशसंशयत्वाव्यापकत्वेन दृष्टान्तासिद्ध्यादिवारणायैवैतादृशविवक्षाया आवश्यकत्वादिति ध्येयम् ॥ १० ॥

अथ तथापि घटाभाववद्भूतलकालीनपटवान्न वा पर्वत इत्यादिसंशयत्वस्य व्यापकतासम्बन्धेन घटादिविशिष्टबुद्धिप्रतिबन्धकतायां सत्त्वात्तादृशविशिष्टबुद्धौ व्यभिचारः । एवं घटाभाववद्भूतलकालीनपटवान्न वा पर्वत इत्यादिसंशयत्वविशिष्टप्रतिबन्धके च घटविशिष्टबुद्धौ व्यभिचार इति । मैवम् । तादृशसंशयत्वविशिष्टप्रतिबन्धकतायां तादृशसंशयनिरूपितविशेष्यतावच्छेदकविशिष्टविषयकानिश्चयत्वाव्यापकत्वस्य तादृशसंशयनिरूपितप्रकारतावच्छेदकविशिष्टविषयकनिश्चयत्वाव्यापकत्वस्य च विशेषणतोपगमेन तद्दोषवारणादिति ध्येयम् ॥ ११ ॥

अथ तथापि धूमो व्याप्यः अव्यभिचाराभाववांश्चेत्यादि समूहालम्बनबुद्धौ व्यभिचारसंशयप्रतिबध्यत्वस्य व्यभिचारव्यतिरेकनिश्चयप्रतिबध्यत्वस्य च सत्त्वाद्व्यभिचार इति चेन्न संशयप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणत्वे सति यद्व्यतिरेकनिश्चयप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्य हेतुताया विवक्षितत्वादिति । वस्तुतस्तु निश्चयीयविषयताया अभिन्नत्वमते स्वप्रतिबन्धकतायां यत्संशयत्वघटकविषयित्वावच्छिन्नत्वानिवेशेनैवोपपत्तौ संशयत्वव्यापकत्वपर्यन्तमपि न निवेशनीयमिति सुधीभिरवधेयम् ॥ १२ ॥

अत्र च यदभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताशालियद्व्यतिरेकज्ञाने यदभावत्वप्रकारतानैयत्यनिवेशेनैव सामञ्जस्ये निश्चयत्वघटकयत्तदभावाप्रकारकत्वदलम्, यदभावत्वप्रकारतानियतयदभावावगाहिताप्रयुक्तस्वप्रतिबन्धताकत्वस्यैव सम्यक्त्वे व्यतिरेकनिश्चयो-

पादानमेव वा किमर्थमिति चिन्त्यम् ।

एतत्कल्पे व्याप्तिमद्भेदादिकोटिकसंशयस्य प्रामाणिकत्वे तत्र
व्याप्यभावत्वप्रकारतानैयत्यविरहेणासिद्धितादवस्थ्यमतः कल्पा-
न्तरमाह यदभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्त इत्या-
दि । कल्पान्तरमाह स्वप्रतिबन्धकतानवच्छेदकयदभावत्वानव-
च्छिन्नयदभावावगाहितासामान्यकत्वे सतीति वा वक्तव्यमिति ।

अथात्र घटादिव्यतिरेकनिश्चयप्रतिबध्यघटादिविशिष्टज्ञाने घटा-
द्यभावत्वानवच्छिन्नघटाद्यभावविषयतासामान्यान्तर्गताया अभाव-
वानित्यादिनिश्चयकालीनाभाववानित्यादिनिश्चयीयाभावत्वावच्छिन्न-
विषयितायाः स्वप्रतिबन्धकतानवच्छेदकत्वविरहेण सत्यन्ताभावेन
व्यभिचाराप्रसक्त्या तद्वारकयत्संशयप्रतिबध्यत्वदलं व्यर्थमिति । एवं
व्यभिचाराभावत्वानवच्छिन्नव्यभिचाराभावविषयितासामान्यान्तर्ग-
ताया अभाववान् व्यभिचारवानिति–निश्चयकालीनाभाववानिति–
निश्चयीयाभावत्वावच्छिन्नविषयताया अव्यभिचारधीप्रतिबन्धकता-
नवच्छेदकत्वविरहेण व्यभिचारज्ञाने व्यभिचारावारकव्यतिरेकनिश्च-
यप्रतिबध्यत्वदलमपि व्यर्थमिति । न च स्वप्रतिबन्धकतायां ज्ञानवै-
शिष्ट्यानवच्छिन्नत्वानिवेशान्न दोष इति वाच्यम् एवमपि प्रतियो-
गितासम्बन्धेन घटाभावांशे घटत्वेन पदार्थान्तरावगाहिभ्रमीयघ-
टाभावविषयताया एवं व्यभिचारत्वेनाव्यभिचारपदवृत्तित्वेन वा
व्यभिचारावगाहिभ्रमीयव्यभिचारविषयितायास्तादृशविषयितासा-
मान्यान्तर्गतायाः स्वप्रतिबन्धकतानवच्छेदकत्वविरहेण तद्दोषताद-
वस्थ्यात् । न च यदभावत्वानवच्छिन्नयदभावविषयतायां भ्रमा-
न्यवृत्तित्वमपि निवेश्यमिति वाच्यम् तथापि घटवद्वृत्तित्वेन
घटाभावावगाहिघटवद्वृत्तिमानिति—निश्चयीयघटाभावविषयता-
यास्तादृशविषयतासामान्यान्तर्गताया घटवत्त्वाज्ञानप्रतिबन्धकता-
नवच्छेदकत्वविरहेण यत्संशयप्रतिबध्यत्वदलवैयर्थ्यस्य दुर्वारत्वात्
भ्रमात्मकाव्यभिचारनिश्चये व्यभिचारापत्तेश्चेति ।

मैवम् स्वप्रतिबन्धकतावच्छेदकतानवच्छेदकयदभावत्वानव-
च्छिन्नविषयितानिष्ठयन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वसा-
मान्यकत्वस्य सत्यन्तेन विवक्षणादेव सामञ्जस्यात् । तथा
च व्याप्यभावत्वानवच्छिन्नविषयितानिष्ठस्य व्याप्तिनिरूपित-

प्रतियोगितावच्छेदकीभूततत्तद्व्यक्त्यभावत्वावच्छिन्नत्वस्यानुमितिप्रतिबन्धकतानवच्छेदकतया दृष्टान्तासिद्धिविरहः। एवञ्च घटाभावत्वानवच्छिन्नविषयितानिष्ठघटनिरूपितप्रातियोगितावच्छेदकीभूततत्तद्व्यक्त्यभावत्वावच्छिन्नत्वस्य घटविशिष्टधीप्रतिबन्धकतावच्छेदकतावच्छेदकतया घटादिविशिष्टज्ञाने व्यभिचारवारणाय यत्संशयप्रतिबध्यत्वदलसार्थक्यमिति। स्वप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमपि देयम् तेन द्रव्याभाववान् घटाभाववानिति–निश्चयकालीनद्रव्याभाववद्भूतलमिति–निश्चयीयघटाभावत्वानवच्छिन्नविषयतानिष्ठस्य घटनिरूपितप्रतियोगितावच्छेदकीभूतद्रव्यत्वाभावत्वावच्छिन्नत्वस्य घटविशिष्टधीप्रतिबन्धकतावच्छेदकतावच्छेदकत्वेऽपि नोक्तदोषतादवस्थ्यम्। अव्यभिचाराभावत्वानवच्छिन्ना या पूर्वक्षणवृत्तित्वविशिष्टाव्यभिचाराभावत्वावच्छिन्नविषयिता तन्निष्ठस्याव्यभिचारनिरूपितप्रातियोगितानवच्छेदकीभूतपूर्वक्षणवृत्तित्वविशिष्टस्याव्यभिचारस्याभावत्वावच्छिन्नत्वस्याव्यभिचारधीप्रतिबन्धकतानवच्छेदकतया अव्यभिचारज्ञाने व्यभिचार इत्यतः सामान्यपदम्। तथाच सति निरुक्तप्रतियोगितावच्छेदकावच्छिन्नत्वसामान्यान्तर्गतव्यभिचारविषयितानिष्ठव्यभिचारत्वावच्छिन्नत्वस्यातथात्वात् न व्यभिचारः। न च व्याप्तिमद्वृत्तिधर्मवत्तानिश्चयस्य व्याप्त्यभावावच्छेदकत्वेन गृहीतधर्मवत्तानिश्चयस्य चानुभवासिद्धत्वेनानुमित्यप्रतिबन्धकतया दृष्टान्तासिद्धाधवारकस्योक्तविवक्षणस्य प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविशेषणस्य च विशिष्टबुद्धौ अतिप्रसङ्गसम्पादकस्य प्रक्षालनाद्धीत्यादिन्यायेन वैयर्थ्यमिति वाच्यम् अखण्डाभाववटकतया सार्थक्यसम्भवेन प्रक्षालनाद्धीति न्यायानवकाशात्।

वस्तुतस्तु साध्यवद्वृत्तित्वेन व्याप्त्यभाववत्तानिश्चयस्याधेयत्वाभाववान् साध्याभाववानिति निश्चयकालीनाधेयत्वाभाववत्तानिश्चयस्य चानुमितिप्रतिबन्धकतया दृष्टान्तासिद्धिरतस्तद्वारणायोक्तविवक्षणमावश्यकमेवेति। एवं ग्राह्याभावानवगाहितयापि यदभावज्ञानस्य यत्र प्रतिबन्धकता तत्र तदभावावच्छेदकत्वेन गृहीतधर्मवत्त्वतद्व्याप्यवृत्तिधर्मवत्त्वयोर्ज्ञानस्यापि प्रतिबन्धकत्वमिति प्राचीनमते आवश्यकमेव। अत एवानुमितिमात्रप्र-

तिबन्धकतां निवेद्य व्यभिचारादौ हेत्वाभासलक्षणसमन्वयकृतप्राचीनाः तद्व्याप्येपि हेत्वाभासलक्षणं सङ्गमयन्ति । एवञ्चाधेयत्वाभाववान् व्याप्त्यभाववानिति—निश्चयकालीनाधेयत्वाभाववत्ताज्ञानीयाया व्याप्तिमद्वृत्तित्वेन व्याप्त्यभाववत्ताज्ञानीयायाश्च व्याप्त्यभावत्वावच्छिन्नविषयायिताया अनुमितिप्रतिबन्धकतावच्छेदकत्वेन दृष्टान्तासिद्धिरतः प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविशेषणस्योक्तविवक्षणस्य च सार्थक्यमित्यपि केचित् । तन्न पक्षधर्मत्वाभाववान् हेतुरिति ज्ञानीयव्याप्त्यभावत्वानवच्छिन्नविषयितानिष्ठस्य व्याप्तिनिरूपितप्रतियोगितावच्छेदकीभूतपक्षाधर्मत्वाभावत्वावच्छिन्नत्वस्यानुमितिनिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकतया दृष्टान्तासिद्ध्यापत्तेः । यदभावत्वानवच्छिन्नविषयितायां यदभावीयत्वनिवेशेऽपि पक्षधर्मत्वाभावत्वेन व्याप्त्यभावावगाहिज्ञानीयविषयितामादायोक्तदोषापत्तेरिति ध्येयम् ।

इदन्तु बोध्यम् । यद्रूपावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वानवच्छिन्नयद्रूपावच्छिन्नप्रतियोगिताकाभाववृत्तियद्रूपाश्रयनिरूपितप्रतियोगितावच्छेदकावच्छिन्नविषयितासामान्ये स्वनिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वं विवक्षणीयम् नातः पूर्वोक्तदोषाणामवकाशः । न च व्याप्तित्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वानवच्छिन्नव्याप्तित्वावच्छिन्नप्रतियोगिताकाभाववृत्तिव्याप्तित्वाश्रयनिरूपितप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नविषयित्वाप्रसिद्ध्या घटपदेन व्याप्तेरुपादातुमशक्यतया दृष्टान्तासिद्धिः एवंरीत्या स्वरूपासिद्धिश्चेति वाच्यम् सम्बन्धान्तरावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नविषयिताया एव तादृश्याः प्रसिद्धत्वादिति पक्षधर्मत्वाभावत्वेन व्याप्त्यभावज्ञानीयपक्षधर्मत्वाभावत्वावच्छिन्नविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकतया दृष्टान्तासिद्धिरतो वृत्त्यन्तं प्रतियोगिताविशेषणम् । व्याप्तिमद्वृत्तित्वेन व्याप्त्यभावविषयतामादाय दृष्टान्तासिद्धिरतो यद्रूपाश्रयनिरूपितत्वं तद्विशेषणम् । साध्याभावावच्छेदकत्वेन गृहीतसम्बन्धान्तरावच्छिन्नप्रतियोगिताकव्याप्त्यभावविषयितामादाय दृष्टान्तासिद्धिवारणाय प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवे-

शः । निरुक्तप्रतियोगितावच्छेदकावच्छिन्नत्वञ्च तादृशप्रतियोगितावच्छेदकमात्रावच्छिन्नत्वरूपं बोध्यम् नातः साध्यवदवृत्तित्वेन व्याप्तिमदवृत्तित्वेन वा घटितसम्बन्धावच्छिन्नप्रतियोगिताकव्याप्त्यभावत्वोभयत्वावच्छिन्नविषयितामादाय दृष्टान्तासिद्धिः । एवं द्वितीयकल्पेऽपि यदभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहितापदेन निरुक्तविषयित्वमेव विवक्षणीयम् अतस्तत्कल्पे नोक्तदोषाणामवकाश इति ध्येयम् ।

अत्रेदं चिन्त्यते । यत्पदेनाव्यभिचारमुपादायाव्यभिचारनिश्चये व्यभिचारवारणाय पृथक् सत्यन्तनिवेशकल्पद्वये अव्यभिचारनिश्चये व्यभिचारवारकयद्व्यतिरेकनिश्चयोपादानमनर्थकम् निश्चयत्वघटकपकार्थमपहाय यद्व्यतिरेकज्ञानसामान्यप्रतिबध्यत्वनिवेशेनैव यत्पदेन व्यभिचारमादायाव्यभिचारनिश्चये व्यभिचारवारणसम्भवात् । एवञ्च यत्पदेन घटादिकमादाय घटादिविशिष्टबुद्धौ व्यभिचारवारकयत्संशयप्रतिबध्यत्वदलमनर्थकम् घटादिविशिष्टबुद्धौ घटादिव्यतिरेकसामान्यप्रतिबध्यत्वादेव व्यभिचारानवकाशादिति सुधीभिर्विभावनीयम् ॥

अथवा यन्निश्चयविरहविशिष्टस्य यद्धर्मिकव्यतिरेकज्ञानस्याभावो यद्विशेष्यकयत्प्रकारकयज्जातीयकार्यतानियताव्यवहितपूर्ववर्त्ती तद्धर्मिकतन्निश्चयस्तद्विशेष्यकतत्प्रकारतज्जातीयकार्यजनक इति समुदितार्थः । व्याप्यभावसंशयद्वितीयक्षणोत्पन्नव्याप्तिनिश्चयाद्यत्र तदनन्तरक्षणेऽनुमितिस्तत्र तत्पूर्वक्षणे विशेषणाभावाद्विशिष्टाभावोऽक्षत एवेति न दृष्टान्तासिद्धिरिति भट्टाचार्येणोक्तम् । यत्र प्रामाण्यनिश्चयो नास्ति किन्तु इष्टसाधनताज्ञानाप्रामाण्यधर्मिकप्रामाण्यव्यतिरेकज्ञानमस्ति तत्र प्रामाण्यनिश्चयविरहविशिष्टस्य तद्व्यतिरेकज्ञानस्याभावे प्रवृत्तेर्नियताव्यवहितपूर्ववर्तित्वाभावात् स्वरूपासिद्धिरतो यद्व्यतिरेकज्ञाने यद्धर्मिकत्वनिवेशः । एवं प्रामाण्यनिश्चयविरहविशिष्टस्येष्टसाधनताज्ञानधर्मिकान्यप्रकारकज्ञानस्याभावस्य प्रवृत्तिनियताव्यवहितपूर्ववर्त्तित्वाभावात्तद्दोषः स्यादतो यद्व्यतिरेकप्रकारकत्वनिवेशः । अथात्र यन्निश्चयविरहविशिष्टे इत्युक्तावपि दृष्टान्तासिद्धिर्दुर्वारा धूमहेतौ व्याप्यभावज्ञानकालीनालोकादिहेतुकव्याप्तिनियमात् यत्र पर्वतविशेष्यकवह्न्यनुमितिस्त-

त्र व्याप्तिनिश्चयविरहविशिष्टस्य धूमधर्मिकव्याप्तिव्यतिरेकज्ञानस्याभावे पर्वतविशेष्यकवह्निप्रकारकानुमितिनियताव्यवहितपूर्ववर्तित्वाभावात्। न च प्रयोजनविरहेण यन्निश्चये यद्धर्मिकनिश्चयत्वाव्याप्तिनिवेशादुक्तस्थले आलोकादिधर्मिकव्याप्तिनिश्चयसत्त्वे व्याप्तिनिश्चयविरहरूपविशेषणाभावादेव विशिष्टाभावोऽनुमितिपूर्वक्षणेऽक्षत एवेति वाच्यम् हेतुभेदेन व्याप्तेर्विभिन्नतया धूमालोकादिनानाहेतुकानुमितौ एकव्याप्त्यसत्त्वेन धूमहेतुकव्याप्त्यसत्त्वेन यत्पदेन धूमहेतुकव्याप्तेरुपादेयतया तन्निश्चयविरहरूपविशेषणाभावस्योक्तस्थलीयानुमितिपूर्वक्षणे सत्त्वात् । अत एव हेतुभेदेऽभिन्नसाध्यव्यभिचरितसामानाधिकरण्यरूपव्याप्तेरेवानुमितिप्रयोजिकत्युक्तावपि न निरासः। साध्याव्यभिचारितसामानाधिकरण्यरूपव्याप्तेरपि हेतुतावच्छेदकसम्बन्धभेदेन भिन्नतया संयोगसम्बन्धावच्छिन्नतादृशव्याप्तिव्यतिरेकप्रकारकधूमविशेष्यकज्ञानानन्तरोत्पन्नसमवायादिसम्बन्धावच्छिन्नतादृशव्याप्तिज्ञानात् यत्र वह्न्यनुमितिस्तत्र यत्पदेन संयोगसम्बन्धावच्छिन्नतादृशव्याप्तेरुपादाने दृष्टान्तासिद्धितादवस्थ्यात् इति। नच यन्निश्चयविरहविशिष्टस्य यद्धर्मिकयद्व्यतिरेकज्ञानस्याभावोऽव्यवहितोत्तरत्वसम्बन्धेन तन्निश्चयविशिष्टस्य तादृशसम्बन्धेन तद्व्यतिरेकज्ञानविशिष्टान्यस्य वा यद्विशेष्यकयत्प्रकारकयज्जातीयकार्यस्य नियताव्यवहितपूर्ववर्तीति विवक्षणान्नोक्तदोष इत्युक्तस्थलीयानुमितौ व्याप्तिनिश्चयविशिष्टत्वाभावात् धूमहेतुकव्याप्तिव्यतिरेकज्ञानविशिष्टत्वाच्चेति वाच्यम् एवं सति घटादिनिश्चयविरहविशिष्टस्य घटादिव्यतिरेकज्ञानस्याभावेपि अव्यवहितोत्तरत्वसम्बन्धेन घटादिनिश्चयविशिष्टस्य तादृशसम्बन्धेन घटादिव्यतिरेकज्ञानविशिष्टान्यस्य घटादिप्रकारकज्ञानस्य नियताव्यवहितपूर्ववर्तित्वसत्त्वेन व्यभिचारापत्तेः। द्वितीयकल्पे यन्निश्चयविरहविशिष्टस्येत्यस्य वैयर्थ्यापत्तेश्च। व्याप्त्यभावसंशयाद्द्वितीयक्षणोत्पन्नव्याप्तिनिश्चयाद्यत्र तदनन्तरक्षणेऽनुमितिस्तत्रत्यानुमितौ अव्यवहितोत्तरत्वसम्बन्धेन व्याप्तिव्यतिरेकज्ञानविशिष्टान्यत्वाभावादेव दृष्टान्तासिद्ध्यनवकाशादिति विभावनीयम्। पत्रिका समुदिता॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
प्रामाण्यवादगादाधरीक्रोडपत्रम्॥

॥ श्रीगुरुः शरणम् ॥

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितम् (द्वितीयम्)

# अनुमानगादाधरीक्रोडपत्रम् ।

शिष्यावधानं च व्याप्तिविशिष्टेत्यादिप्रकृतशब्दस्य विशिष्य शुश्रूषा अनुमाननिरूपणत्वेन सामान्यतस्तादृशशब्दे प्रमाणतत्त्वप्रतिपादकज्ञानविषयत्वावगतावपि विशिष्य तादृशशब्दे बुभुत्सितार्थप्रतिपादकत्वाग्रहेण विशिष्य शुश्रूषा न सम्भवति इति अनुमानमिदानीं निरूप्यते इति प्रतिज्ञाय तादृशनिरूपणे च प्रकृतशब्देऽनुमानविषयकत्वग्रहेण विशिष्यबुभुत्सितप्रमाणतत्त्वप्रतिपादकत्वग्रहात् विशिष्य शुश्रूषा निर्वहतीति प्रतिज्ञायाः शिष्यावधानफलकत्वम् ।

अस्यायमभिप्रायः । विशिष्य शुश्रूषा तादृशानुपूर्व्यव-
च्छिन्नश्रवणेच्छा, सा च प्रमाणतत्त्वप्रतिपत्तिरूपेष्टसाधनताज्ञा-
नात् भवतीति प्रकृतस्थले यदनुमाननिरूपणं भवति तत्प्रमाण-
तत्त्वप्रतिपत्तिजनकज्ञानविषयो भवतीति व्याप्त्या अनुमाननिरूपण-
त्वरूपसामान्यधर्मपुरस्कारेण तादृशशब्दे प्रमाणतत्त्वप्रतिपत्तिरूपे-
ष्टसाधनताज्ञानविषयत्वावगमेऽपि तादृशानुपूर्व्यवच्छिन्नशब्दश्रवणे-
च्छा न सम्भवतीति तादृशशब्देऽनुमाननिरूपणत्वसन्देहेन प्रमाण-
तत्त्वप्रतिपादकत्वरूपव्यापकधर्मस्य सन्देहात् तादृशेष्टप्रयोजकत्वानि-
श्चयात् प्रतिज्ञायाञ्च सत्यां मत्कर्तव्यप्रकृतशब्देऽनुमानविषयकत्वग्रहेण
तादृशव्यापकधर्मग्रहात् तादृशानुपूर्व्यवच्छिन्नश्रवणेच्छा जायत इति
केचित् । परेतु प्रमाणतत्त्वमत्र विविच्यत इति प्रतिज्ञया सा-
मान्यतस्तादृशशब्दे प्रमाणतत्त्वप्रतिपत्तिजनकज्ञानविषयत्वावगमे-
ऽपि अनुमानतत्त्वप्रतिपत्तिरूपविशेषफलार्थिनां प्रकृतशब्दे शुश्रू-

षा न सम्भवतीत्यनुमानं निरूप्यत इति प्रतिज्ञायां सत्याञ्च प्रकृत-निरूपणेऽनुमानविषयकत्वग्रहेण अनुमानज्ञानजनकज्ञानविषयत्वावगमात् विशेषफलार्थिनां तादृशश्रवणेच्छा भवतीति प्रतिज्ञाया आवश्यकत्वम् । इत्थञ्च विशिष्य तादृशशब्दे बुभुत्सितेत्यादौ विशिष्येत्यस्य बुभुत्सितेत्यादौ अन्वय इति वदन्ति ॥ १ ॥

स्वनिरूपितकार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे तत्कार्योपधायकव्यापाराव्यवहितपूर्वक्षणावच्छेदेन स्वावच्छेदकसम्बन्धेन वर्तते यत् तद्वृत्तित्वविशिष्टं यत् कारणत्वं तत्करणत्वम् ।

नचैवं चक्षुरादेः संयोगादिव्यापारसम्बन्धेन कारणत्वानुपपत्तिः तादृशसंयोगरूपव्यापाराव्यवहितपूर्वक्षणावच्छेदेन संयोगादिसम्बन्धेनावर्त्तमानत्वात् इति चेन्न सामान्यतश्चाक्षुषत्वावच्छिन्नं प्रति स्वजनकादृष्टवत्त्वसम्बन्धेन चक्षुरादेः कारणत्वं व्यापारस्य विशेषतः कारणत्वादेवातिप्रसङ्गभङ्गात् ॥ २ ॥

तदभिधानानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः तन्निरूपितसङ्गतिः ।

शब्दप्रयोगात्मकाभिधाने गुरोः कण्ठताल्वभिघातः कारणम् । तत्र च कण्ठक्रिया, तत्र कण्ठक्रियाप्रवृत्तिः, तत्र च वाक्येच्छा वाक्यसाधनताज्ञानं च, वाक्येच्छायाञ्च वाक्यार्थबुबोधयिषा वाक्यार्थज्ञानसाधनताज्ञानञ्च, वाक्यार्थबुबोधयिषायाञ्च शिष्यीयवाक्यार्थबोधे गुरोरसिद्धत्वज्ञानम्, तादृशासिद्धत्वज्ञाने असिद्धत्वव्याप्येच्छाविषयत्वज्ञानं, तज्ज्ञाने च प्रश्नवाक्यज्ञानं, प्रश्नवाक्यज्ञाने च प्रश्नवाक्यप्रयोगः, प्रश्नवाक्यप्रयोगे च जिज्ञासाप्रत्यक्षम् जिज्ञासाप्रत्यक्षे च जिज्ञासा कारणम् इति जिज्ञासाया अनन्तराभिधानप्रयोजकता बोध्या ॥ ३ ॥

अथ प्रत्यक्षोपजीवकं किमिति जिज्ञासा यथा प्रत्यक्षनिरूपणानन्तरानुमानाभिधानप्रयोजिका तथाऽनुमानाभिधानानन्तरोपमानाभिधानप्रयोजिका परम्परया अनुमानज्ञानसम्पादनेन तस्यामपि प्रयोजकत्वादिति प्रत्यक्षोपजीवकत्वस्यानुमाननिरूपितसङ्गतित्वापत्तिरिति चेन्न जिज्ञासामद्वारीकृत्य जिज्ञासायाः प्रयोजकत्वनिवेशात् । प्रकृते चोपमानाभिधानप्रयोजकजिज्ञासाद्वारैव तादृशजिज्ञासाया उपमानाभिधानप्रयोजकत्वात् । अथ तथापि घट-

पटनिरूपणानन्तरं घटसम्बन्धज्ञानात् यत्र दण्डो निरूपितः तत्र दण्डधर्मस्य पटनिरूपितसङ्गतित्वापत्तिरिति चेन्न तदभिधानप्रयोज्यत्वस्य तदभिधानानन्तराभिधानप्रयोजकजिज्ञासायां निवेश्यत्वात् ।

अत्रेदं बोध्यम् । जिज्ञासामद्वारीकृत्य इत्यादि विशेषणमफलम् प्रत्यक्षोपजीवकं किमिति जिज्ञासाया अनुमानाभिधानप्रयोज्यत्वाभावेनैवानुमाननिरूपितप्रसङ्गत्वापादनस्य प्रत्यक्षोपजीवकत्वेऽसम्भवात् । न च जिज्ञासायां तदभिधानप्रयोज्यत्वं निवेश्यमित्यादिपाठः प्रामादिक इति वाच्यम् तथा सति उक्तस्थले दण्डनिष्ठधर्मस्य पटसङ्गतित्वेऽनुभवविरोधात् तस्याः प्रसङ्गसङ्गतित्वे प्रत्यक्षोपजीवकत्वस्यापि अनुमाननिरूपितत्वे को दोष इति तद्वारकविशेषणमफलम् तस्माज्जिज्ञासायां तदभिधानप्रयोज्यत्वानिवेशे जिज्ञासामद्वारीकृत्य इति विशेषणं नास्त्येवेति ।

अत्र केचित् यथाऽनुमानं निरूपितं तदनन्तरमनुमानकरणं किमिति जिज्ञासा तदनन्तरं कार्यत्वेन विशेषानुमानाजिज्ञासा तदनन्तरं तन्निरूपितम् । तत्र प्रत्यक्षकार्यत्वस्यानुमाननिरूपितसङ्गतित्वापत्तिवारणाय जिज्ञासामद्वारीकृत्य इति विशेषणमिष्टमिति प्रलपन्ति । तदसत् तत्रानुमानाभिधानानन्तराभिधानप्रयोजकत्वाभावाद्विशेषजिज्ञासाया इति ॥ ४ ॥

व्याप्तिवैशिष्ट्यविशेषितव्याप्तिविशिष्टाभिन्नत्वोपलक्षितपक्षधर्मप्रतियोगिकत्वाविशिष्टसम्बन्धविषयताकज्ञानजन्यत्वस्य विवक्षणेऽपि लक्षणवाक्यजन्यबोधे वैशिष्ट्यांशे व्याप्तेः सम्बन्धोऽपि भासते इति वैशिष्ट्यविषयतायां व्याप्तिसम्बन्धावच्छिन्नत्वमपि भासते एवं सम्बन्धांशे प्रतियोगिकत्वस्य सम्बन्धभानात् तदवच्छिन्नत्वमपि भासते उक्तनियमात् एवञ्च तत्सम्बन्धावच्छिन्नविषयताविरहेण परामर्शस्यासङ्ग्रह इति चेन्न यस्य सम्बन्धो यत्र भासते तदीयसम्बन्धावच्छिन्नत्वं तन्निष्ठविषयतायां भासत एवेति नियमस्याप्रामाणिकत्वात् घटं जानातीति शाब्दबोधे घटादिविषयतायां घटत्वसमवायावच्छिन्नत्वभानानियमात्, अत एव गुरुमते विशिष्टबुद्धौ विशेषणसम्बन्धभानानभ्युपगमे घटविषयतायां समवायावच्छिन्नत्वविरहेऽपि तादृशशब्देन घटत्वविशिष्टविषयकज्ञानलाभः परन्तु यत्र यद्विशेषणतया भासते तदवच्छिन्नत्वं तन्निष्ठविषयतायां भासत एवेति नि-

यमः । एवञ्च व्याप्तिनिष्ठावच्छेदकतानिरूपकवैशिष्ट्यनिष्ठावच्छे-
दकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकसम्बन्धविषय-
ताकज्ञानजन्यत्वं तादृशवाक्यलभ्यमिति नानुपपत्तिरिति ॥ ६ ॥

व्याप्तिविशिष्टश्चासौ पक्षधर्मश्चेति कर्मधारयोत्तरतल्प्रत्य-
येन व्याप्तिवैशिष्ट्यसमानाधिकरणपक्षधर्मतालाभः । तत्र तल्-
प्रत्ययस्याधेयत्वविशिष्टमर्थः । प्रकृतार्थतावच्छेदकताघटकप्र-
तियोगित्वसम्बन्धावच्छिन्नाधेयत्वञ्च प्रतियोगितानिरूपकत्वमे-
व । तदेकदेशप्रतियोगितायाञ्च पक्षधर्मपदार्थस्य प्रतियोगिता-
सम्बन्धेन पक्षानुयोगिकसम्बन्धविशिष्टस्यान्वयः । तादृशपक्षधर्मे
च व्याप्तिविशिष्टस्याभेदेनान्वयः व्याप्तिविशिष्टस्याभेदेनान्वये पार-
तन्त्र्येण व्याप्तिविशिष्टस्याप्यन्वयः । एवञ्चाभेदसम्बन्धेन व्याप्ति-
विशिष्टोपलक्षितव्याप्तिवैशिष्ट्यविशेषितपक्षधर्मत्वोपलक्षितधर्मनि-
ष्ठप्रतियोगितानिरूपकत्वसम्बन्धावगाहिताशालिबोधजन्यत्वमर्थः ।
एतन्मते सम्बन्धस्यापि विशिष्टबुद्धौ भानाङ्गीकारात् वह्निव्या-
प्यधूमवान्पर्वत इति ज्ञाने व्याप्तेः सम्बन्धतया भासमानस्य
स्वरूपस्यानुयोगित्वं भासते हेतौ, तथा तत्प्रतियोगिकत्वमपि संयो-
गे भासत इति तादृशपरामर्शस्य व्याप्तिवैशिष्ट्यानुयोगिधूम-
प्रतियोगिकसंयोगावगाहित्वमक्षतम् । न च तादृशधूमप्रतियोगि-
कत्वस्य सम्बन्धोऽपि तादृशशाब्दविषयीभूतवाक्यार्थ इति तदव-
गाहिज्ञानलाभेन परामर्शसङ्ग्रहस्तत्र संयोगांशे धूमप्रतियोगिकत्व-
स्य संसर्गतया भानेऽपि तत्सम्बन्धभानास्वीकारादिति वाच्यम्
तद्विशिष्टविषयकत्वपदेन तदवच्छिन्नविषयताकत्वलाभेन तादृशधू-
मप्रतियोगिकत्वावच्छिन्नविषयताकत्वलाभात् । तादृशधूमप्रति-
योगिकसंयोगस्य विषयतायामन्वये पारतन्त्र्येणावच्छिन्नसम्बन्धे-
न तादृशप्रतियोगिकत्वस्याप्यन्वयात् । एवञ्च विशेषणत्वं तादृश-
शाब्दबोधविषयीभूतविषयतावच्छेदकतया भासमानत्वम् । इत्थञ्च
व्याप्तिविशिष्टस्य पक्षधर्मत्वस्य धर्मांशे उपलक्षणत्वमपि तादृश-
बोधाविषयतावच्छेदकतयाऽभासमानत्वमेवेति व्याप्तिविशिष्टस्या-
भेदानवगाहिपरामर्शस्य सङ्ग्रहः । न च व्याप्तिवैशिष्ट्य
इत्यत्र वैशिष्ट्यांशे व्याप्तेः शाब्दबोधे भाने व्याप्तिसम्बन्धो भासते
इति परामर्शे च स्वरूपांशे व्याप्तिप्रतियोगिकत्वभानेऽपि तत्सम्ब-

न्धाभानात् असङ्गइ इति वाच्यम् व्याप्तिसम्बन्धसम्बन्धांशे बो-
धविषयतावच्छेदकत्वाभानेन सामञ्जस्यात् । एतच्चापाततः
शाब्दबोधविषयपरामर्शविषयांशे विशेषणस्य व्याप्त्यादेः पार-
तन्त्र्येण विषयतायां स्वनिष्ठावच्छेदकतानिरूपकवैशिष्ट्यनिष्ठाव-
च्छेदकतानिरूपकधूमनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिरूपक-
त्वनिष्ठावच्छेदकतानिरूपकताकत्वसम्बन्धेनान्वयादभिमतपरामर्श-
लाभादनुपपत्त्यनवतारः । स्वयमेव तादृशप्रतियोगिकत्वस्य वि-
शेषणत्वविवक्षणात् प्रकारान्तरेण विशेषणत्वनिरूपणासम्भवा-
त् । उपलक्षणस्य तु तादृशपारतन्त्र्येणानन्वयात् । अत्र च
व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वपदेन कीदृशशाब्दबोध इति
चेत् व्याप्तिविशिष्टविषयतानिरूपितप्रतियोगिकत्वविषयतानिरूपि-
ताभेदसंसर्गविषयतानिरूपितानुयोगित्वविषयतानिरूपिता या वि-
षयता पक्षधर्मनिष्ठा व्याप्तिविषयतानिरूपितप्रतियोगिकत्ववि-
षयतानिरूपितसम्बन्धविषयतानिरूपितानुयोगित्वविषयतानिरूपि-
तवैशिष्ट्यविषयतानिरूपितप्रतियोगिकत्वविषयतानिरूपितसम्बन्ध-
विषयतानिरूपितानुयोगिकत्वविषयतानिरूपितविशेष्यत्वावच्छिन्ना
तन्निरूपितप्रकारतानिरूपितप्रतियोगिकत्वविषयतानिरूपितसम्बन्ध-
विषयतानिरूपितानुयोगिकत्वविषयतानिरूपितप्रतियोगिकत्वविषय-
तानिरूपितसम्बन्धविषयतानिरूपितानुयोगित्वविषयतानिरूपितस-
म्बन्धविषयतानिरूपितप्रतियोगिकत्वविषयतानिरूपितसम्बन्धविष-
यतानिरूपितानुयोगित्वविषयतानिरूपितवगाहित्धीया या वि-
षयता व्याप्तिनिष्ठावच्छेदकतानिरूपकवैशिष्ट्यनिष्ठावच्छेदकता-
निरूपकधर्मनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेकतानि-
रूपकानिरूपकत्वनिष्ठावच्छेदकतानिरूपकत्वसंसर्गविषयतानिरूपिता
तन्निरूपितप्रतियोगिकत्वविषयतानिरूपितसम्बन्धविषयतानिरूपि-
तानुयोगिकत्वविषयतानिरूपितज्ञानविषयतानिरूपितप्रतियोगिकत्व-
विषयतानिरूपितसम्बन्धविषयतानिरूपितानुयोगित्वविषयतानिरू-
पितजन्यत्वविषयताशाली शाब्दबोधः ॥

धर्मिविशेष्यतानिष्ठं यद्व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकत्वं
तन्निरूपितं यन्निरूपितस्वसम्बन्धावच्छिन्नावच्छेदकत्वं तन्निरूपिता-
वच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वेन निर्धर्मितावच्छेदकज्ञानीयप्र-

कारतात्वाभाव् साध्यव्याप्यवान् पक्ष इति ज्ञानसङ्ग्रहान्नाव्या-
प्तिः । इदन्त्वावच्छिन्नविशेष्यकव्यभिचारग्रहे भ्रमप्रमासाधारण-
व्याप्तिप्रकारतानिरूपितविशेष्यतावत्त्वेन प्रतिबन्धकतया ताद्दश-
व्याप्तिप्रकारतात्वस्य तथाविधप्रतिबन्धकतावच्छेदकतावच्छेदक-
रूपस्य सङ्ग्रहः ।

अत्रेदं बोध्यम् । इदन्त्वावच्छिन्नविशेष्यतानिरूपितप्रकारतानिष्ठं यत् भ्रमप्रमासाधारणं व्याप्तिप्रकारतात्वं तत्र निर्धर्मितानिवच्छेदककव्याप्तिज्ञानीयप्रकारतासाधारणं यच्च निर्धर्मितावच्छेदककज्ञानीयं तच्च न ताद्दशप्रतिबन्धकतावच्छेदकतावच्छेदकमिति कथमुभयानुगमः । न च ताद्दशव्याप्तिप्रकारतात्वमेकमेवेति वाच्यम् धूमत्वावच्छिन्नविषयतानिरूपिताधिकरणत्वावच्छिन्नविषयतानिरूपिताधेयत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितप्रतियोगितात्वावच्छिन्नविषयतानिरूपितावच्छेदकतात्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितसाध्यतावच्छेदकविषयतानिरूपितधर्मिविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितधूमत्वविषयतात्वपर्यवसन्नस्य ताद्दशरूपस्य विलक्षणविषयतानिरूपितत्वघटितत्वेन भिन्नत्वात् इदन्त्वावच्छिन्नविशेष्यतायां निरूपितत्वसम्बन्धेन यद्विशेषणं प्रकारत्वं तत्र विशेषणं यत् ताद्दशप्रकारतात्वं तदेवानुगमाक्रान्तम् तच्च न निर्धर्मितावच्छेदककज्ञानीयप्रकारतायामिति न तत्सङ्ग्रह इति चेत् ।

अत्र केचित् । ताद्दशव्यभिचारज्ञानप्रतिबन्धकतावच्छेदकतावच्छेदकरूपवत्प्रकारत्वावच्छिन्नजनकतावच्छेदकतावच्छेदकरूपत्वेन ताद्दशरूपानुगमः । तथा च ताद्दशव्याप्तिविशिष्टवैशिष्ट्यबुद्धिम्प्रति ताद्दशव्याप्तिप्रकारताकज्ञानत्वावच्छिन्नजनकतामादायैव ताद्दशरूपसङ्ग्रह इति न कोऽपि दोष इति वदन्ति । परन्त्वेताद्दशाभिप्रायस्य भट्टाचार्यीयत्वे सन्दर्भविरोधः व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकतावच्छेदकत्वेन व्याप्तिप्रकारतां निवेश्य तदवच्छिन्नजनकतावच्छेदकतावच्छेदकत्वेन ताद्दशव्यभिचारज्ञानप्रतिबन्धकतावच्छेदकतावच्छेदकरूपवत्त्वेन प्रकारत्वेन प्रकारतां निवेश्य तदवच्छिन्नजनतावच्छेदकतावच्छेदकरूपत्वेन निवेशस्यानुचितत्वात् ।

वस्तुतः अप्रतिबन्धकज्ञानवृत्तित्वेपि प्रतिबन्धकतावच्छेदकत्ववत् प्रतिबन्धकतावच्छेदकतानवच्छेदकवृत्तित्वेपि तादृशानुगतव्याप्तिप्रकारतात्वस्य तादृशप्रतिबन्धकतावच्छेदकतावच्छेदकतावच्छेदकत्वमक्षतमेवेति तादृशव्याप्तिप्रकारतात्वस्यानुगतरूपेण निरूपितत्वत्वेन घटितस्यानुगतस्य लाभान्नाननुगम इति एवंविधैव रीतिरवयवग्रन्थे पञ्चमविषयताघटितकल्पे इति न तत्र प्रतिबन्धकतानुसरणप्रयास इति ध्येयम् ।

अधिकरणं धूमायं वृत्तिराधिकरणीया अवच्छेदकत्वं प्रतियोगित्वीयम् इत्यादिरीत्या व्याप्तिघटकतावत्पदार्थज्ञानवारणाय विलक्षणविषयताशालित्वेन ज्ञाननिवेशः । अत्र चैकविशेष्यतापन्नस्यापरविशेषणतापन्नस्य वस्तुनो विशेष्यत्वप्रकारत्वयोरवच्छेद्यावच्छेदकभावो वैलक्षण्यम् नतु तयोरभेद इत्येकमतम् । तथा च धूमत्वावच्छिन्नप्रकारतानिरूपिताधिकरणत्वावच्छिन्नविशेष्यत्वावच्छिन्नाधिकरणत्वावच्छिन्नप्रकारतानिरूपिताधेयत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतेत्यादिरीत्या निवेशनीया । परेतु धूमत्वावच्छिन्नप्रकारतानिरूपिताधिकरणप्रकारतानिरूपिताधेयत्वप्रकारतेत्यादिविषयतानिवेशो लाघवेन तादृशविशेष्यत्वप्रकारत्वयोरभेदात् । न चैतन्मते पुरुषाभाववान् दण्ड इति ज्ञानकालेऽपि रक्तदण्डवत् पुरुषवान् देश इति ज्ञानानुपपत्तिः पुरुषप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यतायाः तादृशबाधज्ञानप्रतिबध्यतावच्छेदकविषयतारूपायास्तत्र सत्त्वादिति वाच्यम् पुरुषत्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकताकदण्डत्वावच्छिन्नविशेष्यताया एव पुरुषाभाववान् दण्ड इति ज्ञानप्रतिबध्यतावच्छेदकत्वात् । उक्तज्ञाने च दण्डत्वावच्छिन्नविशेष्यतायाः पुरुषत्वावच्छिन्नप्रकारतानिरूपितत्वेऽपि प्रकारतात्वेन तादृशप्रकारतानिरूपितत्वाभावात् । एवञ्चैतन्मते तत्तद्धर्मावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपिकताकतद्धर्मावच्छिन्नविशेष्यताशालिबुद्धित्वेन प्रतिबन्धकत्वे महागौरवम् । पूर्वमते तु तत्तद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यतानिरूपकबुद्धित्वेन प्रतिबध्यप्रतिबन्धकभावकल्पने लाघवम् उक्तज्ञाने पुरुषत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताविरहात् न तादृशबाधप्रतिबध्यत्वापत्तिः । न

चैवमपि धूमविशिष्टधर्मिविशिष्टधर्मिविशिष्टधर्मिविशिष्टवान् देश इत्यादि बहुविधान्तरा निर्धर्मितावच्छेदकज्ञानस्य बाधप्रतिबध्यतया तदवच्छेदकशरीरे गौरवम् पूर्वमते दुष्परिहरमिति वाच्यम् तथापि तत्तद्वस्तुप्रकारकतत्तद्वस्तुविशेष्यकज्ञानोत्तरं तत्तद्वस्तुप्रकारकस्मरणे तत्तद्वस्तुविशेष्यकस्मरणं च तत्तद्वस्तुप्रकारकतत्तद्वस्तुविशेष्यकसंस्काराणां कारणतया तत्र विपरीतस्मरणवारणाय तत्तद्वस्तुप्रकारतात्वावच्छिन्ननिरूपिततत्तद्वस्तुविशेष्यताकसंस्कारत्वेन हेतुतायाः कल्प्यतया परमते महागौरवात्। वस्तुतस्तु पूर्वमतेऽपि तत्रधूमत्वनिष्ठावच्छेदकताकावच्छेदकताकचरमप्रकारताकज्ञानत्वेन प्रतिबध्यत्वादिकल्पनाल्लाघवमप्यस्तीति इत्यलं पल्लवितेन ॥

यत्तु व्याप्यविशिष्टधर्मिविशेष्यकत्वं विशेषदर्शनजन्यतावच्छेदकं बाधाभावजन्यतावच्छेदकञ्च तादृशधर्म्यविशेष्यकत्वम् अतो नाव्यवहितोत्तरत्वनिवेशप्रयुक्ताननुगम इति । तन्मन्दम्। तथापि करावच्छेदेन पुरुषत्वग्रहविशिष्टकरादिग्रहोत्तरकालीने करादिमानयं पुरुष इति प्रत्यक्षे बाधज्ञानाभावस्य व्यभिचारापत्तेर्विनाऽव्यवहितोत्तरत्वनिवेशनं वारयितुमशक्यत्वात्। करावच्छिन्नाविशेष्यकत्वस्यापि बाधाभावजन्यतावच्छेदके निवेशे करादिग्रहशून्यकालीनकरादिमानयमिति ज्ञानस्य बाधकालेऽप्यापत्तेः तादृशज्ञानस्य बाधाभावजन्यतावच्छेदकानाक्रान्तत्वात् ।

अत्रेदमवधेयम् । पुरुषत्वाच्छेदकत्वेन गृह्यमाणधर्मावच्छिन्नाविशेष्यकत्वं यदि बाधाभावजन्यतावच्छेदकं तदा नोक्तदोषः । अथ किमिदं पुरुषत्वावच्छेदकत्वेन गृह्यमाणधर्मावच्छिन्नाविशेष्यकत्वम्? यदि करावच्छेदेन पुरुषत्वग्रहविशिष्टकरावच्छिन्नाविशेष्यकान्यत्वम् तदा करादिमान् पुरुषः करादिमांश्चायं पुरुष इति समूहालम्बनं यस्य जातं तादृशज्ञानस्य बाधोत्तरमापत्तिः तादृशज्ञानस्य बाधाभावजन्यतावच्छेदकानाक्रान्तत्वात् । यदि च करावच्छेदेन पुरुषत्ववत्त्वग्रहाविशिष्टकरप्रकारकनिश्चयानुत्तरत्वं बाधाभावजन्यतावच्छेदकम् तदा अव्यवधाननिवेशादननुगम इति चेन्न बाधग्रहकालीनो यः करावच्छेदेन पुरुषत्वनिश्चयस्तद्विशिष्टकरप्रकारकनिश्चयाविशिष्टकरावच्छिन्नधर्मिकपुरुषत्वप्रकारकप्र-

त्यक्षं प्रति करावच्छेदेन पुरुषत्वज्ञत्वग्रहविशिष्टकरप्रकारकनि-
श्चयो हेतुस्तादृशविशिष्टप्रत्यक्षान्यबुद्धिम्प्रति बाधनिश्चयाभावो
हेतुरिति तादृशहेतुविरहेणैव बाधोत्तरं तादृशसमूहालम्ब-
नग्रहोत्पत्तिकालीनविशिष्टप्रत्यक्षापादनासम्भवात् । न च
तथापि बाधग्रहकालीनत्वं यदि बाधाधिकरणकालवृत्तित्वं तदा
स्थूलकालमादायाव्यवर्तकम् यदि तादृशक्षणवृत्तित्वं तदा क्षण-
त्वसाध्यस्वपदार्थनिवेशोऽननुगम इति वाच्यम् बाधवैशिष्ट्याव-
च्छेदेन बाधाधिकरणकालवृत्तित्वस्य विवक्षणाद्बाधासमानकाली-
नस्य बाधवैशिष्ट्यावच्छेदेन बाधाधिकरणवृत्तित्वानभ्युपगमा-
दिति दिक् ।

लौकिकविषयतासम्बन्धेन तद्व्यक्तिप्रत्यक्षे तद्व्यक्तित्वादिना
हेतुत्वानङ्गीकारे तत्तद्व्यक्तिभासकसामग्र्यवैलक्षण्येन तद्घटग-
ततद्रूपाभानेऽपि ज्ञानबलात् घटान्तरमात्रसन्निकर्षेऽपि तद्रूप-
वत्तया तद्घटस्य प्रत्यक्षापत्तिरिति तादृशविशेषकारणता-
दरः । एवं च तद्व्यक्तिलौकिकविषयताप्रयोजकसामग्री तद्व्य-
क्तिवृत्तित्वावच्छिन्ना तद्व्यक्तिभासिका इति सामग्रीभेदः ।
अदृष्टभावनादिप्रत्यक्षवारणाय तेषां तादात्म्येन प्रतिबन्धकता इति
भट्टाचार्यमतम् । अत्रेदमालोचनीयम् । तद्व्यक्तिलौकिकप्रत्यक्षे तद्व्य-
क्तेरीदृशकार्यकारणभावे मानाभावः । तद्व्यक्तित्वसमानाधिकरणलौ-
किकविषयत्वे लौकिकसन्निकर्षरूपसामग्र्यास्तद्व्यक्तित्वसामानाधि-
करण्यप्रयोजकत्वस्वीकारेणैवान्यसन्निकर्षे तद्व्यक्तिभानासम्भवात् ।
अत एव चैत्रनिर्मितघटत्वादेः कार्यतावच्छेदकत्वाप्रवेशेऽपि ता-
दृशधर्मसमानाधिकरणलौकिकविषयत्वोपपत्तिः । यच्चादृष्टादेः प्र-
तिबन्धकत्वं कल्पितम् तन्न सम्यक् तत्तद्व्यक्तिरूपविशेषसामग्रीवि-
रहादिति । परन्त्वितरयावद्विशेषबाधस्य नियामकत्वे महत्वादा-
वपि कारणत्वानुपपत्तिः तत्रोक्तरीत्या परमाण्वादेः प्रत्यक्षवार-
णसम्भवादिति ॥

व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकतानिरू-
पितजन्यताशालिज्ञानत्वरूपानुमितिलक्षणं विशिष्टस्मरणादावति-
व्याप्तिवारणायादृतम् । अत्र व्याप्यपक्षोभयवैशिष्ट्यावगाहित्वं
वह्निव्याप्यधूमः पर्वतवान् वह्निव्याप्यधूमे पर्वत इति ज्ञानवार-

चार्येण निवेशितम् तत्र सम्यक् पुरुषेतरनिष्ठविशेष्यतानिरूपितरक्तत्वप्रकारत्वावच्छिन्नप्रकारतामादाय रक्तदण्डवानित्यस्य दण्डाभाववत्तानिश्चयप्रतिबध्यतया सङ्ग्रहापत्तेः । न च यद्रूपावच्छिन्नाभाववत्ताबुद्धिः प्रतिबन्धिका तद्रूपावच्छिन्नेतरनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नप्रकारताशालिबुद्धित्वेन प्रतिबध्यता विवक्षणीयेति वाच्यम् प्रमेयाभाववान् घट इत्यादिभ्रमस्यासङ्ग्रहात् । न च प्रकारतावच्छेदकधर्मेतरधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वं निवेश्यमिति वाच्यम् दण्डवत्दण्डवत् घटवानित्यस्यासङ्ग्रहात । न च तादृशविशेष्यतायां स्वावच्छेदकीभूतधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वमपि निवेश्यमिति वाच्यम् दण्डवद्दण्डवान्दण्ड इत्यस्यासङ्ग्रहापत्तेः । यद्वा इतरविशेषणत्वानवच्छिन्नत्वमितरनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वमुच्यते तदा द्वयोरेकमिति रीत्या दण्डवद्घटांशे रक्तत्वप्रकारकज्ञानस्य रक्तत्वाभावनिश्चयाप्रतिबध्यत्वम् । एवं दण्डवद्घटवद्दण्डवानिति ज्ञानस्य प्रतिबध्यत्वं स्यात् दण्डेतरघटादिनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वात् ।

केचित्तु इतरविशेषणत्वानवच्छिन्नत्वं स्वेतरनिष्ठविशेष्यत्वानवच्छिन्नत्वमित्यत्र रक्तत्वाभाववानिति ज्ञानस्य प्रतिबध्यत्वं न रक्तदण्डवानिति ज्ञानस्य तत्र रक्तत्वप्रकारतायां रक्तवद् दण्डादिकं तन्निष्ठविशेष्यत्वानवच्छिन्नत्वात् । न च दण्डवान् रक्तपुरुष इत्यादिज्ञाने दण्डसामान्याभावविषयकज्ञानस्याप्रतिबध्यत्वं स्वेतरनिष्ठविशेष्यतायां स्वनिष्ठप्रकारतानिरूपितत्वस्य विशेषणीयत्वात । न च दण्डवत्घटवद्दण्डवान् पुरुष इत्यादि ज्ञानस्यापि न प्रतिबध्यत्वम् घटनिष्ठविशेष्यतायां दण्डप्रकारतानिरूपितत्वादिति वाच्यम् इतरनिष्ठविशेष्यतायां स्वनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वस्यापि विशेषणीयत्वात् घटनिष्ठविशेष्यतायां दण्डविशेष्यतानिरूपितप्रकारत्वावच्छिन्नत्वस्य सत्त्वात् । न च दण्डवद्घटदण्डवान्पुरुष इति पुरुषांशे एकत्र द्वयमितिरीत्या ज्ञाने दण्डसामान्याभाववत्त्वज्ञानप्रतिबध्यत्वं न स्यात् दण्डनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नप्र-

टनिष्ठविशेष्यतानवच्छिन्नत्वस्य दण्डनिष्ठप्रकारतायामसत्त्वादिति वाच्यम् । एकत्र द्वयमिति रीत्या ज्ञाने प्रकारताद्वयस्य परस्परावच्छेद्यावच्छेदकभावे मानाभावात् । न च यन्निष्ठप्रतिबध्यतावच्छेदिका तन्निष्ठेतरविशेषणत्वानवच्छिन्नतन्निष्ठप्रकारतानिरूपितविशेष्यतावत्त्वेन तदभाववत्तानिश्चयप्रतिबध्यत्वानुपपत्तिरिति ध्येयम् ।

अथानुमानाप्रामाण्यवादिचार्वाकमते अत्र स्वावच्छिन्नोत्पादकसामग्रीव्यापकव्यभिचारप्रकारकज्ञानसामग्रीकज्ञानवृत्तिधर्मत्वरूपहेतुमत्त्वात् हेत्वंशे व्यभिचारप्रकारत्वाभावसामानाधिकरण्यसत्त्वेन साध्यासत्त्वाच्च तद्विलक्षणे न कोपि दोष इति भट्टाचार्येणोक्तम् । अथात्र यत्राभावः पर्वतावृत्तिविशेषणतया हेतुः पर्वतभिन्नत्वं साध्यम् तत्र प्रतियोगितासम्बन्धेन हेतौ अभावरूपे व्यभिचारप्रकारत्वे नैयत्यम् नैयायिकमतसिद्धव्याप्तिनिश्चयस्यापि इति सिद्धसाधनमतः प्रकृतहेत्वंशे स्वरूपसम्बन्धेन व्यभिचारप्रकारकत्वं तथासति स्वरूपसम्बन्धेन व्यभिचारप्रकारकत्वमेवोच्यताम् प्रकृतहेत्वंश इत्यभिधानेन । नच पर्वतो वह्निमान् वह्निमान् वह्निमद्वृत्तिधर्मशून्यत्वादित्यत्र स्वरूपसम्बन्धेन व्यभिचारप्रकारकत्वानियमात् सिद्धसाधनवारणाय प्रकृतहेतुतावच्छेदकावच्छिन्नार्थत्वनिवेशनमावश्यकमिति वाच्यम् यत्र व्याप्तिप्रकारकज्ञानत्वं पक्षः तत्र स्वरूपसम्बन्धेन व्यभिचारप्रकारकत्वाभावसामानाधिकरण्यं नैयायिकसम्मतं व्याप्तिप्रकारान्यधर्मिकज्ञानेपि व्याप्तिज्ञानसत्त्वात् स्वरूपसम्बन्धेन व्यभिचारप्रकारकत्वाभावसत्त्वाच्चेति सिद्धसाधननिराकरणादिति हेत्वंशे इत्यभिधानमिति-ध्येयम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
सङ्गत्यनुमितिक्रोडपत्रम् ॥

---

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (तृतीयम्)

# व्याप्तिपञ्चकक्रोडपत्रम् ।

साध्यवद्भिन्नसाध्याभाववदवृत्तित्वस्येति । अत्र च साध्याभावः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावस्य कालिकेन साध्यतायां विशेषणताविशेषसम्बन्धावच्छिन्नसाध्याभावमादाय महाकालत्वादित्यादौ नाव्याप्तिरिति भट्टाचार्येणोक्तम् ।

ननु वन्हिमान्धूमादौ अव्याप्तिभिया साध्याभावाधिकरणतायां साध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशादुक्तस्थले समवायस्यातथात्वान्नाव्याप्तिसङ्गमनमिति । नच सम्बन्धघटकसाध्यवत्तायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाप्रवेशेन तत्रत्याव्याप्तिदानसङ्गतिः समवायस्य विशेषणतासम्बन्धेन साध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वादिति वाच्यम् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य कालिकेन साध्यतायां महाकालत्वादिहेतावव्याप्तिवारणाय तस्यावश्यनिवेश्यत्वादित्यस्वरसो न श्रद्धेयः साध्यनिरूपितावच्छेदकसम्बन्धेन साध्यवद्भिन्नवृत्तित्वम् तेनैव सम्बन्धेन साध्याभावाधिकरणत्वमिति कल्पाभिप्रायेणैव सङ्गतिरिति । यत्तु द्रव्यत्वस्यापि द्रव्यत्वाभावाभावत्वेन स्वरूपसम्बन्धेन वृत्तित्वमते प्रथमकल्पेपि तत्राव्याप्तिसङ्गतिरिति । तच्चिन्त्यम् ॥ १ ॥

साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमित्यस्य गादाधर्यां तादृशतन्निष्ठप्रतियोगितावच्छेदकयत्सम्बन्धेन साध्यवद्भिन्नवृत्तित्वमभावस्य तत्सम्बन्धेन तद्वद्वृत्तित्वस्य विवक्षितत्वादिति साध्यवद्भिन्नवृत्तिताघटको यः साध्यतावच्छेदकसम्बन्धेन वृत्तिमत् यत्किञ्चित्साध्यनिरूपितत्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धस्तेन सम्बन्धेन साध्यवद्भिन्नवृत्तिसाध्याभाववान् यः तदवृत्तित्वमर्थः । तथा च

कालिकसम्बन्धस्य साध्यवद्भिन्नवृत्तित्वाघटकत्वात् न तेन सम्बन्धेन साध्याभाववत्तामादाय प्रमेयवान् कालत्वादित्यादावव्याप्तिरिति भावः ।

अथैवमपि यत्र पृथिवीत्वविशिष्टस्य प्रमेयस्य स्वरूपसम्बन्धेन साध्यता पृथिवीत्वादिकं हेतुः तत्र स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकपृथिवीत्वविशिष्टप्रमेयाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्तस्यापि प्रमेयतया साध्यान्तर्गतस्य साध्यतावच्छेदकसम्बन्धेन वृत्तिमतः स्वनिष्ठप्रतियोगितावच्छेदककालिकसम्बन्धेन साध्याभावस्य साध्यवद्भिन्ने जन्यजलादौ हेतुमति च वृत्तेरव्याप्तिः । न च साध्यवद्भिन्नवृत्तिताघटकीभूतयत्साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धेन तत्साध्यवद्भिन्नवृत्तिः साध्याभाववानयं तदवृत्तित्वमित्येव विवक्षितम् तथा चोक्तस्थले तादृशाभावरूपप्रमेयस्य केवलान्वयितया तद्भिन्नत्वाप्रसिद्धिः साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्यत्किञ्चित्साध्यपदेन धर्तुमशक्यतया तन्निरूपितप्रतियोगितावच्छेदककालिकसम्बन्धस्य लक्षणाघटकत्वान्न तत्राव्याप्तिरिति वाच्यम् साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्त्वविवक्षया निष्प्रयोजनत्वापत्तेः । यथाकथञ्चित्सम्बन्धेन वृत्तित्वविवक्षणे समवायसम्बन्धावच्छिन्नप्रमेयाभावस्य कालिकसम्बन्धेन योऽभावस्तस्यापि केवलान्वयितया तद्भिन्नत्वाप्रसिद्धेः । साध्यतावच्छेदकसम्बन्धेन तत्साध्यवत्त्वस्य च विवक्षणे च तत्सम्बन्धेन तदधिकरणाप्रसिद्धेः तन्निरूपितप्रतियोगितावच्छेदकीभूतकालिकसम्बन्धस्य लक्षणघटकतया तेन सम्बन्धेन हेतुमतः साध्याभाववत्त्वमादाय समवायेन प्रमेयत्वावच्छिन्नसाध्यकस्थलेऽव्याप्त्यभावात् घटत्वविशिष्टव्याप्यत्ववान् घटत्वादित्यादावव्याप्तेश्च तत्र तत्साध्यवद्भिन्नत्वाप्रसिद्धेः । यत्तु तादृशप्रतियोगितावच्छेदकतत्सम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नवृत्तितानियामकेन तत्सम्बन्धेन साध्याभाववत्त्वं विवक्षणीयम् तथा चोक्तस्थले कालिकसम्बन्धेन साध्यवद्भिन्ने जन्ये तेन सम्बन्धेन वृत्तित्वाप्रसिद्ध्या तत्सम्बन्धस्य लक्षणाघटकत्वात् नाव्याप्तिरिति । तदतीव तुच्छम् । वह्निमान्धूमादित्यादौ तादृशप्रतियोगितावच्छेदकस्वरूपसम्बन्धेन साध्यवत्त्वाप्रसिद्ध्याऽसम्भवापत्तेः । कालिकसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन जलान्य-

त्वादिविशिष्टप्रमेयस्य कालिकसम्बन्धेन साध्यतायां तत्पृथिवीत्वे घटत्वादौ तथाप्यव्याप्त्यापत्तेः तत्र जलान्यत्वविशिष्टप्रमेयत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य कालिकसम्बन्धेन योऽभावस्तस्यापि प्रमेयतया साध्यान्तर्गतस्य प्रतियोगितावच्छेदककालिकसम्बन्धेन साध्यवद्भिन्ने जले तेन सम्बन्धेन वृत्तित्वप्रसिद्ध्या तस्यापि लक्षणघटकतया तेन सम्बन्धेन साध्याभावस्य हेतुमति जन्यपृथिव्यादौ च तत्सत्त्वात् साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्त्वविवक्षया निष्प्रयोजनत्वापत्तेश्च। समवायसम्बन्धेन प्रमेयत्वावच्छिन्नसाध्यकद्रव्यत्वादिप्रकारकप्रमाविशेष्यत्वादिहेतौ कालिकसम्बन्धेन साध्यवद्भिन्ने तेन सम्बन्धेन वृत्तिमत्त्वाप्रसिद्ध्या तस्य लक्षणाघटकत्वात् तेन सम्बन्धेन हेतुमतः साध्याभाववत्त्वमादायाव्याप्त्यसम्भवात्। नच साध्यवन्मात्रवृत्तिसाध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वविवक्षणात् नोक्ताव्याप्तिरिति वाच्यम् तादृशाभावीयकालिकसम्बन्धावच्छिन्नाभावस्य नित्यवृत्तेरैक्येऽपि कालहेतोर्भिन्नतया उक्तस्थलेऽव्याप्त्यसम्भवेऽपि क्रियाजन्यत्वविशिष्टप्रमेयत्ववान् पृथिवीत्वादित्यादावव्याप्त्यापत्तेस्तथाप्यनुद्धारात् तत्र नित्यमात्रस्यैव साध्यवत्त्वात् अव्याप्यवृत्तेरभावस्य लाघवेन वैलक्षण्यात्। यद्यपि स्वाभावात्मकसाध्यतावच्छेदकसम्बन्धेन वृत्तिमत्यावत्साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षणीयम् स्वाभावात्मकत्वनिवेशात् समवायसम्बन्धेन मेयः साध्यकस्थले समवायसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावनिष्ठप्रतियोगितायाः साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्यावन्निरूपितत्वविरहेऽपि स्वाभावात्मकतादृशयावत्साध्यनिरूपितत्वाक्षततया न तादृशप्रतियोगित्वाप्रसिद्धिः । न च तस्यापि यावत्साध्याप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति वाच्यम् तादृशयावत्साध्यनिरूपितप्रतियोगितापदेन तादृशसाध्यत्वव्यापकानुयोगितानिरूपितप्रतियोगिताया एव विवक्षितत्वात् साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्त्वाविवक्षायां स्वाभावात्मकसाध्यत्वव्यापकानुयोगितानिरूपितप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति तन्निवेशः । आकाशाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायामाकाशत्वादिहेतौ स्वाभावात्मकता

दृशाभावरूपसाध्यत्वव्यापकानुयोगितानिरूपितं यथा स्वनिष्ठं प्रतियोगित्वं तथा साध्यीयकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वमपि इत्यतस्तदवच्छेदकस्वरूपसम्बन्धेन हेतुमत आकाशाभावात्मकसाध्याभावमादायाव्याप्तेर्वारकतया स्वनिष्ठत्वमपि सार्थकम् तथा च पृथिवीत्वविशिष्टप्रमेयवान् पृथिवीत्वादित्यादौ तादृशाभावस्य कालिकसम्बन्धावच्छिन्नाभावत्वरूपानुयोगितायास्तादृशप्रमेयात्मकसाध्यत्वस्य प्रमेयान्तरवृत्तेर्व्यापकत्वविरहात् तन्निरूपितप्रतियोगितावच्छेदककालिकसम्बन्धस्य लक्षणाघटकतया तेन सम्बन्धेन हेतुमतः साध्याभाववत्त्वेऽपि नाव्याप्तिरिति तदव्यनादेयमिति जलाद्यष्टकान्यत्वरूपपृथिवीमात्रवृत्तितादृशप्रमेयेणैव पृथिवीमात्रस्य तादृशाभावत्वसिद्धौ गौरवात् प्रमेयमात्रस्य तादृशाभावत्वकल्पनात्। तादृशाभावीयकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे तथात्वकल्पने पृथिवीति अधिकरणत्वोल्लेखितादृशप्रतीत्यसम्भवेऽपि आधेयत्वोल्लेखिप्रतीत्यापत्त्या तस्याप्यवृत्तिप्रतियोगिकत्वेन जन्यनित्यसाधारणप्रमेयानात्मकतया पृथिवीमात्रस्य तादृशाभावकत्वानिर्वाहकत्वेन च तादृशाभावस्य तथात्वकल्पनासम्भवाच्च तादृशाभावात्मकसाध्यात्मव्यापकानुयोगितानिरूपितप्रतियोगित्वाप्रसिद्ध्या तत्राव्याप्तितादवस्थ्यात्। साध्यवद्भिन्नवृत्तिताघटकसम्बन्धेन सार्द्धं साध्याभाववत्त्वघटकसम्बन्धस्यैक्यविवक्षया निष्प्रयोजनकत्वापत्तेश्च कालिकसम्बन्धेन प्रमेयसाध्यककालत्वादिहेतौ कालिकसम्बन्धस्य प्रमेयान्तरवृत्तितादृशसाध्याभावात्मकसाध्यत्वव्यापकानुयोगितानिरूपितप्रतियोगितानवच्छेदकतया तेन सम्बन्धेन हेतुमतः साध्याभावमादायाव्याप्त्यसम्भवात्। साध्यांशे यत्किञ्चित्त्वनिवेशस्याप्रामाणिकत्वापत्त्या न्यूनतापाताच्च। एतेन स्वनिरूपकसाध्याभावात्मकसाध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यकान्यप्रतियोगिकत्वमेव तादृशप्रतियोगितापदेन विवक्षणीयम् समवायेन प्रमेयसाध्यकस्थले तादृशप्रमेयाभावनिष्ठाया विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताया अपि तादृशाभावीयकालिकसम्बन्धाभावादिरूपसाध्यानिरूपितत्वेन तादृशप्रतियोगिकत्वादव्याप्तिरतः साध्यतावच्छेदकसम्बन्धेन साध्ये वृत्तिमत्त्वम् एतद्घोकस्थले तादृशाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियो-

गिताया अपि तदीयकालिकसम्बन्धावच्छिन्नाभावात्मकतादृशसाध्यनिरूपितत्वेन लक्षणाघटकत्वान्नाव्याप्तिरिति परास्तम् । पृथिवीत्वविशिष्टप्रमेयत्ववान् पृथिवीत्वादित्यादावव्याप्तेस्तथाप्यनुद्धाराच्च तादृशाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायाः अपि तदीयकालिकसम्बन्धावच्छिन्नाभावात्मकतादृशसाध्यानिरूपितत्वेन लक्षणाघटकत्वादिति चेत् ।

अत्रोच्यते साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्यत्किञ्चित्साध्यनिरूपितस्वनिष्ठप्रतियोगितापदेन साध्यतावच्छेदकसम्बन्धातिरिक्तसाध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नसाध्यवद्भिन्ननिष्ठाधिकरणतानिरूपकतानवच्छेदकीभूतानुयोगितानिरूपितप्रतियोगित्वत्वस्यैव विवक्षितत्वात् । समवायेन साध्यके साध्यतावच्छेदकसम्बन्धातिरिक्तप्रमेयप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नतादृशाधिकरणत्वाप्रसिद्ध्याऽव्याप्तेर्वारणाय साध्यतावच्छेदकवृत्तित्वं निवेशितम् । तथा तादृशसम्बन्धातिरिक्तादृशसम्बन्धेन वृत्तिमत्प्रमेयप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नं साध्यवद्भिन्ननिष्ठं स्वरूपसम्बन्धावच्छिन्नाधिकरणत्वमेव तत्र प्रसिद्धम् तन्निरूपकतानवच्छेदकं सत्तानिष्ठानुयोगित्वमेव नतु तादृशाभावीयकालिकसम्बन्धावच्छिन्नाभावत्वरूपानुयोगित्वं तस्य साध्यवद्भिन्ननिष्ठतादृशाधिकरणतानिरूपकतावच्छेदकत्वात् अतस्तन्निरूपितप्रतियोगितावच्छेदककालिकसम्बन्धेन हेतुमतः साध्याभावमादायापि न तत्राव्याप्तिः । एवञ्च पृथिवीत्वविशिष्टप्रमेयवान् पृथिवीत्वादित्यादौ तादृशप्रमेयाभावीयकालिकसम्बन्धावच्छिन्नाभावत्वरूपानुयोगितायाः साध्यवद्भिन्ननिष्ठतादृशसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकतया तन्निरूपितकालिकसम्बन्धस्य लक्षणाघटकत्वात्तेन सम्बन्धेन हेतुमतः साध्याभाववत्त्वमादाय नाव्याप्तिः । न च प्रतियोगितायां स्वनिष्ठत्वनिवेशनमनर्थकमाकाशाभावस्य कालिकसम्बन्धावच्छिन्नाभावत्वरूपानुयोगितायाः साध्यवद्भिन्ननिष्ठतादृशाधिकरणतानिरूपकतानवच्छेदकत्वविरहात् तन्निरूपितप्रतियोगितावच्छेदकस्वरूपसम्बन्धस्य लक्षणाघटकत्वात् आकाशाभावीयकालिकसम्बन्धावच्छिन्नाभावस्य स्वरूपसम्बन्धेन साध्यतायां आकाशत्वादिहेताव-

व्याप्यसम्भवात् इति वाच्यम् कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य कालिकसम्बन्धावच्छिन्नाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नाधिकरणताया एव पारमार्थिकतया तादृशाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाधिकरणताया एवाप्रसिद्ध्या तादृशानुयोगितायास्तादृशाधिकरणतानिरूपकतानवच्छेदकत्वस्याक्षतत्वात्। अन्यथाकाशादावपि आकाशाभावीयकालिकसम्बन्धावच्छिन्नाभावो नास्तीति प्रतीत्यापत्तिः अत्रापि स्वरूपसम्बन्धेनाकाशाभावीयकालिकसम्बन्धावच्छिन्नाभावात्मकस्य तादृशाभावस्य सत्त्वात्। तदभ्युपगमेपि कपालेपि संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावो नास्तीत्यापत्तेः अत्रापि समवायसम्बन्धेन घटस्वरूपस्य तादृशाभावस्य सत्त्वात्। आकाशाभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नाभावस्य कालिकसम्बन्धेन योऽभावस्तस्य स्वरूपसम्बन्धावच्छिन्नाभावस्याकाशाभावीयकालिकसम्बन्धावच्छिन्नाभावस्वरूपत्वे आकाशाभावस्य केवलान्वयितया तादृशस्वरूपसम्बन्धेन कालेऽसत्त्वात् तादृशानुयोगितायास्तन्निष्ठस्वरूपसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वस्यात्यन्तमसम्भाविततया साध्यवद्भिन्ननिष्ठाधिकरणतानवच्छेदकमहाकालान्यत्वविशिष्टनित्यत्वाभावत्वरूपानुयोगितानिरूपकप्रतियोगितावच्छेदकस्वरूपसम्बन्धेन हेतुमतः साध्याभाववमादायाव्याप्तिवारकतया तत्सार्थक्योपपादनेऽपि प्रतियोगितायां साध्यनिरूपितत्वनिवेशनेनापि तादृशसम्बन्धवारणसम्भवात्।

वस्तुतः साध्यवद्भिन्ननिष्ठायाः साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नत्व-आकाशाभावीयकालिकसम्बन्धावच्छिन्नाभावीयत्वउभयाभावविशिष्टायाः साध्यतावच्छेदकसम्बन्धातिरिक्तसाध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यप्रतियेगिकसम्बन्धान्यसम्बन्धायास्तादृशनित्यत्वाभावनिरूपितकालिकसम्बन्धावच्छिन्नाधिकरणताया एव निरूपकतावच्छेदकत्वात् उक्तानुयोगिता लक्षणघटिकैव नास्ति कुतस्तामादायाव्याप्तिः। न च यत्र कालिकसम्बन्धेन प्रमेयत्वावच्छिन्नस्य साध्यता कालत्वादिकं हेतुः तत्राव्याप्तिः वृत्तिमन्मात्रस्यैव कालिकादिसम्बन्धेन वृत्तिमत्तया साध्यतावच्छेदकीभूतकालिकसम्बन्धस्यैव साध्यतावच्छेदकसम्बन्धातिरिक्तसाध्यतावच्छेदकसम्बन्धेन

वृत्तिमत्प्रमेयप्रतियोगिकसम्बन्धान्यसम्बन्धतया तत्सम्बन्धावच्छिन्नस्य तत्सम्बन्धेन तादृशसाध्यवद्भिन्ननिष्ठाधिकरणत्वस्याप्रसिद्धेरिति वाच्यम् तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन साध्यतायां सद्धेतावव्याप्तिवारणाय सम्बन्धित्वनिवेशस्यावश्यकतया साध्यतावच्छेदककालिकसम्बन्धेन साध्यवद्भिन्नावृत्तिगगनादिनिष्ठायास्तादृशसम्बन्धानुयोगिताया गगनादितादात्म्यानुयोगिताया एव प्रसिद्धेः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्भिन्ननिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्यानुयोगितायां निवेशे सत्तावान् द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यादावव्याप्तिः स्यादतस्तदुपेक्षितम् । यद्वा साध्यतावच्छेदकसम्बन्धानवच्छिन्नसाध्यतावच्छेदकसम्बन्धेन वृत्तिमत्यत्किञ्चित्साध्यनिरूपितत्वोभयाभाववत्साध्यवद्भिन्ननिष्ठं यदधिकरणत्वं तन्निरूपकानुयोगितानिरूपितस्वनिष्ठप्रतियोगित्वमेव तादृशप्रतियोगितापदेन विवक्षणीयम् तथा च कालिकसम्बन्धेन प्रमेयत्वावच्छिन्नसाध्यकस्थले गगनादिनिष्ठतादात्म्यसम्बन्धावच्छिन्नसम्बन्धित्वमेव तादृशं प्रसिद्धम् एवञ्च विशेषरूपेण संसर्गतानभ्युपगमेपि न क्षतिरित्यवधेयम् । न च तथापि वृत्त्यनियामकसम्बन्धेन साध्यतायां सद्धेतावव्याप्तिवारणाय वृत्तिनियामकसम्बन्धेन प्रतियोगितावच्छेदकत्वस्यावश्यं विवक्षणीयतया विषयताया अपि प्रतियोगितावच्छेदकत्वात् यत्र नित्यज्ञानान्यत्वविशिष्टप्रमेयस्य स्वरूपसम्बन्धेन साध्यता जलत्वादिकं हेतुस्तत्राव्याप्तिर्दुर्वारा । एवं तादृशप्रमेयाभावस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपानुयोगितायाः साध्यवद्भिन्ननित्यज्ञाननिष्ठस्वरूपसम्बन्धावच्छिन्नतादृशाधिकरणतानवच्छेदकतया तन्निरूपिततादृशाभावनिष्ठप्रतियोगितावच्छेदकविषयितासम्बन्धस्यापि लक्षणघटकतया तेन सम्बन्धेन साध्याभावस्यापि साध्यवद्भिन्ननित्यज्ञाने जन्यज्ञानादौ सत्त्वादिति वाच्यम् वृत्तिनियामकसम्बन्धेन व्याप्त्यनभ्युपगन्तृमतमवलम्ब्यैव तत्परिष्कारादिति तन्मते वृत्त्यनियामकसम्बन्धस्यापि प्रतियोगितानवच्छेदकत्वात् । तदभ्युपगन्तृमते तु तादृशसाध्यकानुमानस्य केवलान्वयिसाध्यकसमशीलतया तादृशसाध्यकाव्याप्तेरिष्टत्वात् । वस्तुतस्तु साध्यवद्भिन्ननिष्ठतादृशाधिकरणतानवच्छेदकत्वसाध्यवत्यत्किञ्चिद्व्यक्तिनिष्ठसाध्यतावच्छेदकस-

कत्वोभयाभाववत्त्वे सति सा-
-सम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वोभयाभाववत्त्वे सति सा-
ध्यतावच्छेदकसम्बन्धेन स्वावच्छिन्नाधिकरणसाध्यवत्यत्किञ्चि-
त्कान्यत्वे सति किञ्चिद्व्यक्त्यसम्बन्धस्वविशिष्टसामान्यकत्वे सति
साध्यवद्भिन्ननिष्ठताद्दशाधिकरणतानवच्छेदिका याऽनुयोगिता तन्नि-
रूपितप्रतियोगित्वमेव तादृशप्रतियोगितापदेन विवक्षणीयम् । तथा
च नित्यज्ञानान्यत्वविशिष्टप्रमेयाभावस्य विषयतासम्बन्धावच्छिन्न-
प्रतियोगिताकाभावस्वरूपानुयोगितायां साध्यवद्व्यक्तीभूतेच्छानिष्ठ-
तादृशाधिकरणतानवच्छेदकत्वस्य साध्यवद्भिन्ननित्यज्ञाननिष्ठताद-
शाधिकरणतानवच्छेदकत्वस्य च द्वयोः सत्त्वेन स्वावच्छिन्नान-
धिकरणसाध्यवद्यत्किञ्चिद्व्यक्तिकान्यत्वसत्त्वेन तस्य लक्षणघटकत्वा-
त् नोक्ताव्याप्त्यवकाश इति । तथा च साध्यतावच्छेदकसम्बन्धेन
साध्यवद्यत्किञ्चिद्व्यक्तिकसम्बन्धविशिष्टसामान्यकत्वे सति साध्य-
तावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वीयस्वरूपसम्बन्धावच्छिन्न-
प्रतियोगिताकसाध्यवद्भिन्नसम्बन्धत्वाभावात् स्वविशिष्टान्यसामा-
न्यकसाध्यतावच्छेदकसम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवद्य-
त्किञ्चिद्व्यक्तिकान्यत्वे सति साध्यवद्भिन्नावृत्तित्वं साध्यतावच्छेदक-
सम्बन्धावच्छिन्नाधिकरणत्वसामान्यकसाध्यवद्भिन्नवृत्तिसाध्यता-
वच्छेदकसम्बन्धीयान्यत्वसाध्यतावच्छेदकसम्बन्धप्रतियोगियत्कि-
ञ्चित्साध्यनिरूपितत्वोभयाभाववत्स्वावच्छिन्नसम्बन्धिताकभिन्ना वा
याऽनुयोगिता तन्निरूपितप्रतियोगित्वमेव तादृशप्रतियोगितापदेन
विवक्षितमिति निष्कर्ष इत्यवधेयम् ॥ २ ॥

वस्तुतः साध्याभाववति चेत्युक्त्वा साध्याभावो वा साध्यता-
वच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः इत्युक्तौ साध्याभावो वै-
त्यनेन सह साध्याभाववति साकल्यविशेषणस्यापि सान्निध्येन वै-
कल्पिकसंशयः स्यात् स च न वै रक्षितः अतस्साध्याभाववति
चेत्युक्तमिति गदाधरभट्टाचार्याः । अत्र हेतुतावच्छेदकावच्छिन्ना-
भावनिवेशापेक्षया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिन्यधिक-
रणाभावे हेतुतावच्छेदकावच्छिन्नप्रतियोगित्वनिवेशनं यद्यपि गुरु
तथापि यथा सन्निवेशे न वैयर्थ्यम् । नच साध्याभाववत्सकल-
निष्ठहेतुतावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणताकाभावप्रतियोगि-
त्वापेक्षया हेतुतावच्छेदकावच्छिन्नयत्प्रतियोगितावच्छेदकावच्छि-

ष्ठानधिकरणत्वं साध्याभाववतः तद्धर्मवत्त्वरूपस्य तदपेक्षयाऽपि लाघवमिति वाच्यम् तथासति व्याप्तेः प्रतियोगित्वरूपतानुपपत्तेः ॥३॥

हेतुतावच्छेदकसम्बन्धातिरिक्तहेतुप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नसाध्याभाववदवृत्तित्वमिति भट्टाचार्येणोक्तम् ॥

अत्रेदं बोध्यम् । समवायेन सत्तासाध्यकसंयोगेन प्रमेयहेतुकेऽव्याप्तिर्हेतुतावच्छेदकसंयोगातिरिक्तहेतुप्रतियोगिकसम्बन्धान्यः संयोग एव तेन सम्बन्धेन जात्यादिनिरूपितवृत्तित्वाप्रसिद्धिरिति। नच हेतुतावच्छेदकसम्बन्धातिरिक्तहेतुतावच्छेदकसम्बन्धेन वर्तमानहेतुप्रतियोगिकसम्बन्धान्यसम्बन्धेन वृत्तित्वं विवक्षणीयम् तथा च तत्र तादृशसम्बन्धः कालिकसंयोगादिरेव नतु स्वरूपात्मकस्वस्य हेतुतावच्छेदकसम्बन्धातिरिक्तत्वेपि तादृशहेतुप्रतियोगिकत्वाभावादिति स्वरूपसम्बन्धोपि तदन्यः तेन सम्बन्धेन वृत्तित्वप्रसिद्धेर्नाव्याप्तिरिति वाच्यम् तथा सति सविषयकसाध्यकविषयित्वसम्बन्धेन प्रमेयहेतुकेऽप्रसिद्धेर्दुर्वारत्वात् सकलसम्बन्धानामेव हेतुतावच्छेदकसम्बन्धेन वर्तमानहेतुप्रतियोगिकत्वात् । न च हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वहेतुतावच्छेदकावच्छिन्नत्वोभयाभाववत्त्वं विवक्षितमिति वाच्यम् तावतापि सत्ताभाववान् प्रमेयादित्यादौ साध्यत्वाधिकरणनिरूपिततादृशोभयाभाववद्धेतुतावच्छेदकधर्मान्यधर्मावच्छिन्नवृत्तित्वस्य हेतौ सत्त्वादव्याप्तितादवस्थ्यात् । अत्रोच्यते तादृशोभयाभाववदवृत्तितानवच्छेदकवत्त्वमेव व्याप्तिरिति ध्येयम् ॥ ४ ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
व्याप्तिपञ्चकगादाधरीक्रोडपत्रम् ॥

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (तुरीयम्)

# सिंहव्याघ्रलक्षणक्रोडपत्रम् ।

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानाधिकरणत्वमित्यत्राधिकरणताद्वयमनतिप्रयोजनकमिति भट्टाचार्येणोक्तम् ।

अत्रेयमाशङ्का वह्निमान्धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकवृत्तित्वाभावरूपव्याप्तिरव्याप्तिका साध्यनिष्ठाधेयत्वानिरूपकधूमत्वावच्छिन्ननिरूपितवृत्तित्वसत्त्वात् । अधिकरणतानिवेशे साध्यनिष्ठाधेयत्वानिरूपकवृत्ति—अधिकरणतानिरूपितवृत्तित्वाभावविवक्षयाऽव्याप्तिवारणात् साध्याधिकरणतापदसार्थक्यमिति ।

अत्रोच्यते । हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतावत्त्वसम्बन्धेन साध्यनिष्ठाधेयत्वानिरूपकतद्दन्यत्वमित्यर्थकरणादधिकरणताद्वयमनतिप्रयोजनकमित्याशयः ॥ १ ॥

यत्तु हेतुपदं हेतुतापरमिति । हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरणं तदनवच्छिन्ना या अधिकरणता तद्भिन्नं यत्साध्यवद्वृत्तित्वाभावाधिकरणत्वादिकं तद्भिन्नत्वमर्थः तथा च धूमविशेषे महिमत्स्वावयवावच्छेदेन वह्निमत्संयुक्तत्वाभावाधिकरणत्वसत्त्वेपि तादृशाधिकरणत्वस्य निरुक्ताधिकरणत्वभिन्नत्वाभावात् वह्निमान्धूमादित्यादौ नाव्याप्तिरिति भावः । एवञ्चेति । तथा च कालविधया पर्वतस्य धूमनिष्ठवह्निमत्संयुक्तत्वाभावाधिकरणतावच्छेदकत्वसत्त्वेपि तादृशावच्छेदकहेतुतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नत्वविरहान्न तत्राव्याप्तिरिति भावः । नचैवं हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य स्वानुयोग्यधिकरणतायां निवेशनमफलम् यतो वह्निमान्धूमादित्यादौ धूमनिष्ठस्वावयवावच्छेद्यवह्निसंयुक्तत्वाभावाधिकरणत्वस्य स्वानुयोगिनो यदधिकरणं धूमावयवादि तदभिन्नतया स्वपदेनोपादातुमशक्यत्वात् तादृशं यत्स्वं व्याप्यवृत्तितद्व्यत्वाधिकरणत्वं तद्भिन्नत्वात् तद्भिन्नत्वस्य च हेतौ विरहात् अव्याप्तिवारणरूपं यत्प्रयोजनं तच्च

न सम्भवति धूमनिष्ठाधिकरणत्वस्य स्वानुयोगिनो यदधिकरणं धूमावयवादि तन्निष्ठसंयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपकतावच्छेद्यत्वात् । न च स्वानुयोगि यदधिकरणं तन्निष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वानिरूपकं यत्तदन्यत्वस्य साध्यवद्वृत्तित्वाभावाप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिवारकतया तत्सार्थक्यसम्भव इति वह्निमदवृत्तिघटादित्यादौ तु तादृशाधिकरणत्वस्य प्रसिद्धः । तादृशघटाद्यधिकरणीभूतत्वनिष्ठसंयोगसम्बन्धावच्छिन्नावच्छेदकत्वनिरूपकताया गगनाद्यप्रसिद्ध्या च तादृशस्य स्वपदेनोपादातुमशक्यत्वादिति वाच्यम् वृत्त्यनियामकसम्बन्धेन हेतुतायां मैत्रत्ववान्धूमादित्यादावतिव्याप्तिवारणाय स्वानुयोगिनो यत्सम्बन्धि तन्निष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वस्यावश्यकतया सत्तावान्द्रव्यत्वादित्यादावव्याप्तिवारणाय तत्सार्थक्यसम्भवात् अन्यथा गगनादेरपि स्वस्मिन्नपि सम्बन्धित्वस्य प्रसिद्ध्याऽव्याप्त्यापत्तेः । अथ स्वविषयकं घटादित्यादौ विषयतासम्बन्धेन साध्यतायामव्याप्तिः प्रकृतहेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरणं तन्निष्ठतादृशसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपकं यदधिकरणत्वं तदन्यसाध्याभाववदवृत्तित्वाधिकरणत्वाप्रसिद्ध्या विषयितासम्बन्धेन वस्तुमात्रस्यैव सम्बन्धत्वात् । नच निजमतेऽप्येतद्दोषस्याप्यावश्यकत्वमिति वाच्यम् हेतुपदस्य हेतुभिन्नत्वानुयोगितत्तद्धेतुपरतया विषयितासम्बन्धेन सम्बन्धि यत् तत्तद्घटविषयकं यज्ज्ञानं तदवच्छेद्यविषयकत्वात् सम्बन्धत्वाभावाधिकरणत्वस्य तत्तज्ज्ञानत्वादेरेव प्रसिद्धेः । न च वृत्त्यनियामकसम्बन्धेन तदनभ्युपगमन्तृमत एव तत्तल्लक्षणकरणात् तत्राव्याप्तिर्न क्षतिकरीति वाच्यम् यतस्तन्मत एव परिष्कारः । अन्यथा हेतुतावच्छेदकसम्बन्धेन स्वानुयोग्यधिकरणत्वविवक्षया निष्प्रयोजनकत्वापत्तेः । नच हेतुनिरूपितहेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरणं तदनवच्छिन्नत्वमेव विवक्षणीयम् तथाचोक्तस्थले पटादेरेव तादृशाधिकरणत्वं घटानिरूपितविषयितासम्बन्धेन सम्बन्धित्वाप्रसिद्ध्या पटादिनिष्ठाधिकरणत्वस्य स्वपदेन घटुमशक्यत्वात् अतो न तत्राव्याप्तिरिति वाच्यम् प्रमेयहेतुकस्थले तथाप्यव्याप्तेरनुद्धारात् । प्रमेयानिरूपितविषयितासम्बन्धेन वृत्तिपदार्थ

प्रसिद्धा हेतुतावच्छेदकावच्छिन्ननिरूपितहेतुतावच्छेदकसम्बन्धेन स्वानुयोगितावच्छेदकावच्छिन्नस्य यदधिकरणं तदनवच्छेद्यावि-लक्षणन्तु न सत् तावतापि तत्रातिव्याप्तितादवस्थ्यात् सर्वेषां प्रमेयानां तादृशसाध्यवद्वृत्तित्वाभावाधिकरणतावश्यात् । नचैतद्दोषो-ऽप्येतन्मते इष्ट एवेति वाच्यम् अव्याप्तिसम्भवं तां विहाय वक्ष्यमा-णाव्याप्त्यसङ्गतिमात्रानुधावनेन न्यूनता इति चेदत्र केचित् । हेतुता-वच्छेदकसम्बन्धावच्छिन्नावच्छेदकत्वनिवेशे हेतुतावच्छेदकसम्ब-न्धेन स्वानुयोग्यधिकरणत्वं न विवक्षणीयम् तावतैव तात्पर्यात् एवञ्च वृत्त्यनियामकसम्बन्धेन व्याप्तेरनभ्युपगमेऽपि न क्षतिः । साध्यवद्वृत्तित्वाभावस्यैव विवक्षणीयतया तत्सम्बन्धेन वृत्तित्वा-प्रसिद्ध्याऽत्रैव वृत्त्यनियामकसम्बन्धेन साध्यकहेतावतिव्याप्तिविर-हात् तथा च विषयताया वृत्त्यनियामकतया तत्सम्बन्धमादाया-व्याप्तिरेव नास्तीति का व्याप्तिरिति इत्याहुः ॥ २ ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सिंह-व्याघ्रगादाधरीक्रोडपत्रम् ॥

---

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (पञ्चमम्)

# व्यधिकरणगादाधरीक्रोडपत्रम्।

ॐ नमः शिवाय। हेतुसमानाधिकरणाभावविशिष्टानुयोगिता-
व्याप्यधर्मवत्त्वम्। अभाववैशिष्ट्यञ्च स्ववृत्तित्वस्वसमानाधिकरण-
भेदप्रतियोगितानवच्छेदकवृत्तित्वाविशिष्टत्वोभयसम्बन्धेन। अवच्छे-
दकत्वञ्च निरूपकतासम्बन्धेन वृत्तित्ववैशिष्ट्यञ्च स्वनिरूपकवृत्त्य-
धिकरणताविशिष्टप्रतियोगिनानिरूपकत्वस्वावच्छेदकत्वोभयसम्ब-
न्धेन। अधिकरणतावैशिष्ट्यञ्च स्वावच्छेदकत्वस्वावच्छेदकताघटक-
सम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। अथवा अभावविशिष्टानुयोगिता-
व्याप्यधर्मवत्त्वम्। अभाववैशिष्ट्यञ्च स्ववृत्तित्वस्वाधिकरणहेत्वधिक-
रणवृत्तिभेदप्रतियोगितानवच्छेदकवृत्तित्वविशिष्टत्वोभयसम्बन्धेन।
शेषं पूर्ववत्। व्याप्यत्वं तदभाववदवृत्तित्वम् अत्र वृत्तित्वं स्वावच्छि-
न्नाधिकरणवृत्त्यभावीयसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदक-
प्रतियोगिताकत्वसम्बन्धावच्छिन्नं ग्राह्यम्। अथवा साध्यव्याप-
कतावच्छेदकप्रतियोगिताकहेत्वधिकरणवृत्तियत्किञ्चिदभाववृत्ति-
तावच्छेदकान्यहेतुतावच्छेदकवत्त्वमेव व्याप्तिः। वृत्तिता च स्वाव-
च्छिन्नाधिकरणवृत्त्यभावविशिष्टानुयोगितावत्त्वसम्बन्धेन। अनुयो-
गितायामभाववैशिष्ट्यञ्च पूर्ववत्।

केचित्तु हेत्वधिकरणवृत्तिसाध्यव्यापकतावच्छेदकप्रतियोगि-
ताकाभावत्वव्यापकाभाववत्त्वकत्वम्। अभाववत्त्वञ्च स्वविशि-
ष्टाधिकरणतावद्वृत्तित्वस्वतादात्म्योभयसम्बन्धेन। अधिकरणतायां
स्ववैशिष्ट्यञ्च स्वनिरूपितप्रतियोगितावत्त्व-स्वविशिष्टहेतुव्यापकत्वो-
भयसम्बन्धेन। स्वनिरूपितप्रतियोगितावत्त्वञ्च स्वावच्छेदकसम्ब-
न्धावच्छिन्नत्वस्वाश्रयनिरूपितत्वोभयसम्बन्धेन। हेतौ स्ववैशिष्ट्यञ्च
सामानाधिकरण्यसम्बन्धेन। नच तथापि व्यापकतावच्छेदकप्रतियो-
गितायां व्यापकताघटकसम्बन्धावच्छिन्नत्वालाभ इति वाच्यम् स्वा-
वच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकत्व-स्वसामानाधिकरण्ये-

तन्नितयसम्बन्धेन साध्यवन्निष्ठाभावीयप्रतियोगिनाविशिष्टान्यप्रतियोगिताया एव व्यापकतावच्छेदकप्रतियोगितापदेन विवक्षितत्वादित्याहुरिति ॥

जगदीशभट्टाचार्यस्य तु अभावविशिष्टानुयोगितावदन्यावृत्तिहेतुतावच्छेदकत्वत्वमेव व्याप्तिः । अभाववैशिष्ट्यञ्च स्ववृत्तित्व–स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकवृत्तित्ववत्त्वोभयसम्बन्धेन । वृत्तितावत्त्वञ्च स्वनिरूपकवृत्त्यधिकरणताविशिष्टप्रतियोगितानिरूपितत्वस्वावच्छेदकत्वोभयसम्बन्धेन । अधिकरणतावैशिष्ट्यञ्च स्वानवच्छेदकसम्बन्धावच्छिन्नयत्किञ्चित्साध्याधिकरणनिरूपितवृत्तिताविशिष्टान्यत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वस्वनिरूपकतावच्छेदकत्वोभयसम्बन्धेन । वृत्तितावैशिष्ट्यञ्च स्वानवच्छेदकत्वसम्बन्धेन ।

ननु सर्वत्र द्वित्वाद्यवच्छिन्नप्रतियोगिताकसाध्याभावमादायैव तल्लक्षणसम्भवात् व्यधिकरणधर्मावच्छिन्नाभावानुपगमेऽपि क्षतिविरहेण तादृशाभावखण्डनं मूलकृताऽकिञ्चित्करमतो लक्षणान्तरमाह हेतुसमानाधिकरणस्येति चक्रवर्त्तिद्वितीयलक्षणावतरणं भट्टाचार्याणां न सङ्गच्छते व्यधिकरणधर्मावच्छिन्नाभावमादायैवाऽव्याप्तिवारकसाध्यनिष्ठत्वादिविशेषणघटिततल्लक्षणस्य व्यर्थविशेषणघटितत्वसूचनायैव व्यधिकरणधर्मावच्छिन्नाभावस्य खण्डितत्वात् । अत्र केचित् हेत्वधिकरणवृत्तित्वं यादृशप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रकारतावच्छेदकातिरिक्तानवच्छिन्नप्रकारताशालिज्ञानं प्रति येन सम्बन्धेन स्वप्रकारकज्ञानं विरोधि तत्सम्बन्धावच्छिन्नम् साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तानवच्छिन्नप्रकारताशालिज्ञानं प्रतियेन सम्बन्धेन स्वप्रकारकं ज्ञानं विरोधि तत्सम्बन्धावच्छिन्नं वा ग्राह्यम् । तत्र च प्रथमकल्पे गौरवेण द्वितीयकल्प एव भट्टाचार्यस्य निर्भरस्तत्र कल्पे साध्यप्रतियोगिताकत्वं न निविष्टम् किन्तु तादृशसम्बन्धलाभाय साध्यपदम् तथाच तत्कल्प एव द्वित्वाद्यवच्छिन्नप्रतियोगिताकसाध्याभावमादायैव लक्षणसमन्वयसम्भवात् व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि न क्षतिः । यदि च, साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रकारताशालिग्रहप्रतिबन्धकतावच्छेदकतावच्छेदकसम्बन्ध-

निवेशस्तु व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगम एव सङ्गच्छते अन्यथा प्रतियोगितावच्छेदकावच्छिन्नवत्ताज्ञानविरोधितावच्छेदक-सम्बन्धनिवेशस्यैव युक्तत्वादिति सूक्ष्ममीक्ष्यते तदाऽव्याप्यवारक-तादृशसम्बन्धनिवेशस्य वैयर्थ्यमेव प्रथमकल्पपरित्यागे बीजमिति । न च द्वितीयकल्पे दोषान्तरं गौरवमवागत्या स्वीकार्यम् न च तदेव गौरवं लक्षणान्तरकरणे बीजमत्रापि तदपरिहारादिति वाच्यम् वह्नित्वेन वह्निघटोभयं नास्तीति प्रत्ययस्य वह्नित्वमात्रेऽवच्छेदकत्वा-वलम्बनमते तादृशाभावमादायाव्याप्तेरेव प्रथमलक्षणपरित्यागे बीजत्वादिति । न च तादृशोभयाभावप्रतियोगिताया व्यासज्यवृत्ति-तया साध्यतावच्छेदकपर्याप्तत्वप्रतियोगितायाः साध्यपदेन लाभान्ना-व्याप्तिरिति वाच्यम् तथापि वह्नित्वेन तार्णघटान्यतरन्नास्तीति प्रती-तिसिद्धाभावप्रतियोगितावच्छेदकत्वमादायाव्याप्तेर्दुर्वारत्वादित्याहुः तच्चिन्त्यम् । यत्तु अखण्डाभावघटकतया साध्यपदसार्थक्यम् । न च द्वितीयकल्पेपि सामानाधिकरण्यपदस्याखण्डाभावघटकतया सार्थ-क्यस्य व्यधिकरणधर्मावच्छिन्नानभ्युपगमे क्षतिविरहेण प्रतियोग्यवृ-त्तिश्चेत्यादिग्रन्थानुत्थितिरिति वाच्यम् अखण्डाभावघटकतया सा-र्थक्यस्य उभयत्र तुल्यत्वेपि साध्यपदव्यावर्तनीयो व्यधिकरणधर्मा-वच्छिन्नाभावं विना न सम्भवतीति साध्यसामानाधिकरण्येनेत्यस्य व्यावर्तनीयश्च व्यधिकरणधर्मावच्छिन्नाभावं विनापि सम्भवतीति द्वितीयकल्प तत्स्वीकारस्यावश्यकत्वादिति तन्न परमार्थविवेचनया साध्यपदसामानाधिकरण्यपदयोर्व्यधिकरणधर्मावच्छिन्नाभावमादायैव व्यावृत्तिस्तत्र साध्यपदस्य यदि व्यधिकरणधर्मावच्छिन्नाभावं वि-नाप्युपपत्तिस्तदाऽपि सामानाधिकरण्यपदस्यापि तथोपपत्तिसम्भवे व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमस्यानावश्यकत्वात् ।

परेतु समनियताभावयोरनैक्य एव प्रथमलक्षणमन्यथा वह्नित्वेन घटाभावस्यापि साध्यप्रतियोगिकतयाऽव्याप्तिरिति समनियताभावै-क्यमते द्वितीयलक्षणमिति यत् भट्टाचार्येणोक्तं तत्रैव तस्यैव निर्भर इति वदन्ति । तदत्यन्तमसत् । कल्पद्वयस्थले प्रथमकल्पे निर्भरस्य ग्रन्थकारीयरीतिविरुद्धत्वात् । द्वितीयकल्पस्य मतद्वयसाधारणतया तत्रैव निर्भरस्योचितत्वाच्च ।

केचित्तु अखण्डाभावघटकतया साध्यपदसार्थक्यम् द्वितीय-

कल्पे च गुरुधर्मावच्छिन्नाभावानभ्युपगमेऽखण्डाभावघटकतयापि न सामानाधिकरण्यदलस्य सार्थक्यमत एव द्वितीयकल्प एव प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थस्योत्थितिरित्याहुरिति ।

यादृशप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः साध्यवृत्तितथाविधप्रतियोगितायाश्चाप्रसिद्ध्या न पूर्वोक्तलक्षणे प्रतियोगिव्यधिकरणत्वं निवेशितमिति । ननु तद्रूपघटोभयाभावीयप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूततादृशोभयत्वावच्छिन्नाधिकरणत्वस्याप्रसिद्ध्या तत्प्रतियोगिताया लक्षणघटकत्वेऽपि रूपघटोभयाभावीयप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूततादृशोभयत्वावच्छिन्नाधिकरणत्वस्य कपालादौ प्रसिद्ध्या तदीयसाध्यनिष्ठतादृशप्रतियोगित्वस्य प्रसिद्धेः कथं न प्रतियोगिव्यधिकरणत्वं प्रथमलक्षणे निवेशितम् । न च रूपघटोभयं नास्तीति प्रतीतिस्तु घटमात्र एव प्रतियोगित्वमवगाहत इति वाच्यम् घटवति कपाले पाकदशायां रूपाभावादुभयाभावसत्त्वेन तादृशोभयं नास्तीति प्रतीतिविषयत्वस्य घटमात्रप्रतियोगिकाभावे कल्पयितुमशक्यत्वात् घटान्यत्वविशिष्टसत्त्वरूपोभयं नास्तीति प्रतीतिविषयत्वस्य विशिष्टसत्त्वाभावे कल्पयितुमशक्यत्वाच्च तथासति वाच्यत्वादावपि तथा प्रतीतिर्न स्यादिति । नच वह्नित्वेन वह्निघटोभयं नास्तीति प्रतीतिसिद्धाभावमादाय प्रथमलक्षणेऽव्याप्तेर्वारणाय, साध्यमात्रनिष्ठत्वस्य प्रतियोगितायां निवेशनीयतया वह्निमान्धूमादित्यादौ साध्यमात्रप्रतियोगिकाभावसत्त्वेऽपि उक्तस्थले साध्यमात्रनिष्ठनिरुक्तप्रतियोगित्वाप्रसिद्धिर्निष्प्रत्यूहैवेति वाच्यम् सर्वत्र द्वित्वावच्छिन्नाभावमादाय इत्याभासविरोधादुक्तस्थल एव साध्यमात्रप्रतियोगिकोभयाभावाप्रसिद्धिः । न च गगनं शब्दादित्यादौ तादात्म्येन साध्यतायां घटगगनोभयत्वावच्छिन्नाभावीयप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूततादृशोभयत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्या द्रव्यघटोभयं नेति प्रतीतिविषयीभूताभावस्य घटमात्रप्रतियोगिकतया निरुक्तप्रतियोगित्वाप्रसिद्ध्या प्रथमलक्षणे प्रतियोगिव्यधिकरण्यं न निवेशयितुमशक्यमिति वाच्यम् गुणत्वेन द्रव्यघटोभयाभावीयप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतोभयत्वावच्छि

स्थानाधिकरणत्वस्य गगने प्रसिद्धतया तदीयप्रतियोगिताया एव निरुक्तप्रतियोगितात्वात् गगनाद्यतिरिक्तानि कानिचिद्द्रव्याणि गुणांश्चावगाहमानं यज्ज्ञानं विषयतया तत्तदभावोभयं नेति प्रतीतिविषयभेदस्य तज्ज्ञानमात्रप्रतियोगिकत्वं द्रव्यमात्रप्रतियोगिकत्वं वा कल्पयितुं न शक्यते गगने गुणादौ तादृशप्रतीत्यनुपपत्तेः तज्ज्ञानवद्द्रव्यमात्रप्रतियोगितायामतथात्वस्य भट्टाचार्यसम्मतत्वात् अन्यथा घटभिन्नत्वेन धूमघटान्यतराभावीयप्रतियोगितावच्छेदकत्वस्य सामान्यरूपेण विशेषाभावानभ्युपगन्त्रा स्वीकारस्यासङ्गतत्वापत्तेः तथाच तदीयाभावप्रतियोगिताया अपि तादृशत्वाच्च।

अत्र केनचिदेवमुच्यते तथाहि सामान्यधर्मावच्छिन्नप्रतियोगितान विशेषधर्मावच्छिन्नस्य सम्बन्ध इत्यत्र किं नियामकम् न हि यद्धर्मावच्छिन्ना या प्रतियोगिता सा तद्धर्मावच्छिन्नस्यैव सम्बन्ध इति व्यधिकरणधर्मावच्छिन्नाभाववादिना वक्तुं शक्यते। न च सामान्यधर्मावच्छिन्नस्य विशेषाभावापत्तिरेव नियामिका इति वाच्यम् सामान्यधर्मावच्छिन्नप्रतियोगितया विशेषधर्मावच्छिन्नसंसर्गतात्वेपि विशेषधर्मव्यभिचारितायामापत्त्यभावात् तत्तद्धर्मे तत्प्रतियोगितारूपत्वमेव तत्प्रतियोगितायास्तद्धर्मावच्छिन्नसंसर्गतानियामकं वाच्यम् तथाच गगनं शब्दादित्यादौ गुणत्वेन द्रव्यघटोभयं नेति प्रतीतिसिद्धभेदीयप्रतियोगिता द्रव्यात्मिकैवेति न तूभयात्मिका तत्संसर्गावच्छिन्नप्रमीयप्रकारतावच्छेदकत्वं द्रव्यत्वस्यैव तदवच्छिन्नाधिकरणतया गगनस्य न तद्भेदमादाय निरुक्तप्रतियोगित्वाप्रसिद्धिर्न वा निरुक्तज्ञानवद्द्रव्योभयाभावमादायापि साध्यनिष्ठप्रतियोगित्वप्रसिद्धिः तत्प्रतियोगितायास्तादृशज्ञानवद्द्रव्यमात्र एव सत्त्वात् घटभिन्नत्वेन धूमघटान्यतराभावस्थले धूममात्रनिष्ठप्रतियोगिताकत्वस्यानुभवविरुद्धतया उभयत्र प्रतियोगितास्वीकारः उक्तभेदस्थले तादृशज्ञानवद्द्रव्यमात्रप्रतियोगिकत्वस्य कल्पने तादृशप्रतियोगितावच्छेदकीभूतोभयत्वधर्मितावच्छेदकीभूतप्रत्येकधर्मावच्छिन्नत्वं प्रतियोगितायामव्याहतमेवेति।

साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेकस्वसमानाधिकरणसाध्याभावत्वकत्वं व्याप्तिरिति दीधितिः। अत्र च मते विशिष्टाभावः परम्परावैशिष्ट्याभावः उभयाभावः परम्परया छि-

स्वाभावः इति विशिष्टाभावादिनं साध्यप्रतियोगिक इति वाच्यं ज्ञेयत्वादित्यादौ न व्यधिकरणधर्मावच्छिन्नाभावं विना लक्षणोपपत्तिः। संयोगी सत्त्वादित्यादौ गुणावृत्तित्वावच्छिन्नाभावे साध्यसामानाधिकरण्यविरहेणातिव्याप्त्यभावात्। अत्र च विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिः विशिष्टसत्त्वाभावस्य गुणावृत्तित्वावच्छिन्नाभावस्य च लक्षणाघटकत्वात् विशिष्टसत्तायां गुणवृत्तित्वसत्त्वात्। न च विशिष्टसत्तायां गुणावृत्तित्वमङ्गीकृत्यैतल्लक्षणमतो नातिव्याप्तिरिति वाच्यम् तथासति घटवृत्तित्वविशिष्टवाच्यत्वादेरपि तुल्ययुक्त्या घटावृत्तितया तदवच्छिन्नाभावमादाय विनैव व्यधिकरणधर्मावच्छिन्नभावं लक्षणसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतिः। न च प्रकृतसाध्यनिरूपितसाध्यतावच्छेदकसम्बन्धेन साध्याभावः प्रवेश्य इति तादृशसम्बन्धेन गुणावृत्तित्वमङ्गीकृत्य भवत्येव नातिव्याप्तिरिति वाच्यम् संयोगप्रतियोगिकत्वविशिष्टसमवायेन संयोगस्य साध्यतायां सत्ताहेतावतिव्याप्तेःतत्र तादृशसम्बन्धेन गुणावृत्तित्वावच्छिन्नाभावेऽपि साध्यसामानाधिकरण्यात्। न च विशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाव एव लक्षणघटक इति सर्वत्र व्यभिचारिणि व्यभिचारिस्थलावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तिवारणसम्भवादिति वाच्यम् महाकालभेदवान् घटगगनसंयोगादित्यादावतिव्याप्तेः। तत्र स्वरूपसम्बन्धेन साध्याभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव हेतुसमानाधिकरणत्वात्तस्य च साध्यसमानाधिकरणत्वात्। न च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावस्वरूपसम्बन्धावच्छिन्नसाध्याभावद्वयव्यापकसाध्यसमानाधिकरण्यविवक्षणान्नातिव्याप्तिरिति वाच्यम्। घटवृत्तित्वविशिष्टगगनाभावस्य साध्यत्वे व्यभिचारिण्यतिव्याप्तिरिति चेन्न साध्यवन्निरूपितविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्यैव लक्षणे निवेश्यतया कुत्राप्यदोषात् परन्तु विशेषणरूपेण संसर्गताभ्युपगमापत्तिरिति किन्तु तत्स्वीकारे न दोषः अपितु साध्यतावच्छेदकसम्बन्धेन साध्याभावनिवेशेऽपि न क्षतिः। विशिष्टसत्तावान् जातेरित्यादावपि द्रव्यत्वत्वेन प्रमेयाभावस्य प्रमेयमात्रप्रतियोगितामतेऽतिव्याप्तिवारणसम्भवः। एवमन्यत्रापि वाच्यम् ज्ञेयत्वादित्यादौ घटत्वेन प्रमेयसामान्याभा-

घस्यापि यत्किञ्चित्प्रतियोगिव्यधिकरणावृत्तिधर्मावच्छिन्नप्रतियोगिताकतया सिद्धान्तिभिस्तदनङ्गीकारेण प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थसङ्गतिः । एवं द्रव्यत्ववत्त्वेन द्रव्यत्वसत्त्वान्यतराभावोऽपि भट्टाचार्यसम्मत इति तमादायाव्यात्तिवारणम् । एवमन्यत्रापि ।

सार्वभौममतलक्षणे साध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्यवद्वृत्त्यभावभिन्नत्वम् अभावे निवेशितं भट्टाचार्येण । अत्रयमाशङ्का वह्न्यादिरूपसाध्यगगनोभयाभावस्य साध्यतावच्छेदकव्यापकसमानाधिकरणोभयत्वावच्छिन्नप्रतियोगिताकतया साध्यवद्वृत्तितया व्यधिकरणधर्मावच्छिन्नाभाव तद्भेदविरहाद्वह्निमान् धूमादित्यादावव्याप्तिः । न च प्रतियोगिवैयधिकरण्यघटितसाध्यतावच्छेदकव्यापकत्वस्य निरुक्तोभयत्वेपि विरहान्नाव्याप्तिरिति वाच्यम् प्रतियोगिवैयधिकरण्यघटितव्यापकत्वनिवेशे सत्तावान् जातेरित्यादौ सत्ताद्रव्यत्वोभयाभावादीनादायोक्तदोषतादवस्थ्यादिति । अत एव साध्यतावच्छेदकसमानग्रतत्वमप्यकिञ्चित्करम् । न च साध्यवद्वृत्तितावच्छेदकत्वं वृत्तितावच्छेदकधर्मे निवेश्यम् तेनैवोभयाभाववारणं सम्भवतीति वाच्यम् वृत्तितावच्छेदकत्वविशेषणेनैव गगनत्वावच्छिन्नप्रमेयसामान्याभाववारणसंभवेन समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणवैयर्थ्यापातात् ।

अत्र केचित् साध्यवद्वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मातिरिक्तत्वस्य साध्यतावच्छेदकव्यापकसमानाधिकरणधर्मे विशेषणान्न साध्यगगनोभयाभावमादायोक्तदोषप्रसक्तिः तादृशोभयत्वस्य साध्यवद्वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मत्वात । न च साध्यवद्वृत्तितानवच्छेदकातिरिक्तत्वमेव विशेषणं दीयताम् तादृशवृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मातिरिक्तत्वविशेषणं व्यर्थमिति वाच्यम् अखण्डाभावघटकतया सार्थक्यात् अतएव दीधितौ प्रतियोगितायां साध्यतावच्छेदकव्यापकतारक्षणाय भेदप्रतियोगिसाध्यवद्वृत्तित्वाभावप्रतियोगितावच्छेदकसमानाधिकरणधर्मे साध्यनिष्ठत्वमपहाय साध्यतावच्छेदकव्यापकत्वविशेषणमपि सङ्गच्छते । न च साध्यवद्वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मातिरिक्तसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्यवद्वृत्त्यभावप्रसिद्धिस्तु वह्निमान् धूमादित्यादौ तार्णातार्णोभयाभावमादायैव सम्भवति त-

गापि तत्तद्रूपवान् तत्तद्रसादित्यादौ तादृशाभावोऽप्रसिद्ध एवेति वाच्यम् समानाधिकरणसम्बन्धनिवेशपक्षे विषयितासम्बन्धावच्छिन्नसाध्याभावमादायैव प्रसिद्धेः। साध्यतावच्छेदकसम्बन्धनिवेशपक्षे तु यद्यपि पूर्वक्षणवृत्तित्वविशिष्टसाध्याभावः न साध्याधिकरणे निरवच्छिन्नवृत्तिकस्तथापि साध्यवद्वृत्तितानवच्छेदकत्वस्थले वृत्तितानवच्छेदकत्वं निवेश्य रूपघटोभयाभावमादायैव प्रसिद्धिः कार्येत्याहुः।

तन्मन्दम्। तादात्म्यसम्बन्धेन गगनसाध्यकस्थले गगनवृत्तितादृशोभयाभावाप्रसिद्ध्याऽव्याप्तेः। न च गगनघटोभयत्वस्य वृत्तितानवच्छेदकत्वेपि द्रव्यघटोभयत्वस्य वृत्तितावच्छेदकतया तदवच्छिन्नाभाव एव प्रसिद्ध इति वाच्यम् उभयत्वस्यैकमात्रावृत्तित्वानियमात् एकमात्रावृत्तिधर्मावच्छिन्नस्य क्वचिदपि तादात्म्यसम्बन्धेनासत्वात् उभयत्वस्य तादात्म्यसम्बन्धानवच्छेदकत्वात्। न चोभयत्वातिरिक्तगगनत्वव्यापकधर्मावच्छिन्नभेदस्य गगने सत्त्वादुभयत्वावच्छिन्नाभावस्य व्यधिकरणधर्मावच्छिन्नाभावाभिन्नत्वात् वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मातिरिक्तत्वविशेषणासत्वेपि कथञ्चिदपि तत्र लक्षणं सङ्गमयितुं शक्यम् तस्मात् तादात्म्यसम्बन्धेन व्याप्यत्वं न स्वीकार्यमिति वाच्यम् तादृशातिरिक्तत्वविशेषणासत्वे प्रसिद्धस्योभयाभावस्य भेदोऽवश्यं व्यधिकरणधर्मावच्छिन्नाभावे स्वीकार्यः उभयभेदस्य व्याप्यवृत्तित्वात् व्यधिकरणधर्मावच्छिन्नाभावस्य च व्याप्यवृत्तित्वात् ऐक्यानुपपत्तेः।

परेतु साध्यवद्वृत्तितावच्छेदकत्वसाध्यतावच्छेदकसमानाधिकरणधर्मावच्छिन्नप्रतियोगितानिरूपितत्वोभयाभाववत्वं साध्यतावच्छेदकसमनियतप्रतियोगितानिरूपितानुयोगितायां विवक्षणीयम् अतो न पूर्वोक्तदोषः। साध्यतावच्छेदकव्यापकत्वनिवेशे चाखण्डाभावघटकतया सार्थकयम् अन्यथा व्यापकत्वं परित्यज्य सामानाधिकरण्यनिवेशे प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वनिवेशवैयर्थ्यापत्तेः। न च द्रव्यत्वघटत्वोभयाभाववान् घटान्यद्रव्यत्वादित्यादौ द्रव्यत्वनिष्ठोभयाभावाभावत्वात्मकानुयोगितायां साध्यवद्वृत्तितावच्छेदकत्वाभावेन उभयाभावसत्वात् द्रव्यत्वात्मकाभावमादायाव्याप्तिरिति वाच्यम् साध्याभावत्वे

नाधिकरणताविवक्षया द्रव्यत्वघटत्वोभयाभावाभावत्वेनाधिकरणत्वस्य द्रव्यत्वाधिकरणेऽपि द्रव्यत्वघटत्वोभयाभाववति पटादावसत्वात् अव्याप्तिविरहादिति वदन्ति ।

उत्तानास्तु साध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वमित्यस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्त्यभावभिन्नत्वमेव तात्पर्यार्थः । अतो न व्यधिकरणधर्मावच्छिन्नाभावासङ्ग्रह इति । तच्चिन्त्यम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
व्यधिकरणगादाधरीक्रोडपत्रम् ॥



अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (षष्ठम्)

# सिद्धान्तलक्षणक्रोडपत्रम् ।

ॐ नमः शिवाय । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाः ये ये धर्माः प्रत्येकं तत्तद्धर्मावच्छिन्नभेदकूटसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति मिश्रमतम् । न चानवच्छेदकानुसरणमफलम् तादृशी या या प्रतियोगिता तत्तदवच्छिन्नभेदकूटनिवेशादेवोपपत्तेरिति वाच्यम् । उभयाभावादिकमादायातिप्रसङ्गात् । एवमपि सत्त्वाद्येकधर्मिकसाध्यकं विशिष्टाभावादिकमादायाव्याप्तिरतः तत्प्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य साध्यतावच्छेदकविशेषणत्वे गौरवमिति तदुपेक्ष्य तदविषयकप्रतीतिविषयत्वं तद्भिन्नत्वं वा साध्यतावच्छेदके विशेषणं दत्तमिति उपाध्यायमतमवलम्ब्य दीधितिकृता व्याख्यातम् । यत्तु मिश्रमते तद्घटकालीनवह्निमान्धूमादित्यादौ घटत्वरूपप्रतियोगितावच्छेदकावच्छिन्नाविषयकत्वं न घटकालीनवह्नित्वावच्छिन्नविषयकप्रतीतेरिति तत्राव्याप्तिरेव दोषः कथं गौरवाभिधानमिति । तत्तुच्छम् तद्धर्मावच्छिन्नविषयताभिन्नविषयतावच्छेदकत्वस्य साध्यतावच्छेदकविशेषणत्वेनाव्याप्त्यभावात् ॥ १ ॥

अत्र महानसीयवह्न्यभावप्रतियोगितामादायाव्याप्तिवारणाय पर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतानिष्ठावच्छेदकताकभेदो निवेश्यः एको न द्वावितिवत् वह्नित्वं महानसीयवन्ह्यभावप्रतियोगितावच्छेदकं नेति प्रतीतेः तादृशभेदसत्त्वात् । न च प्रतियोगितावच्छेदकभेदेन सम्बन्धभेदेन चावच्छेदकताभेदेन तत्तदवच्छेदकतायाः पर्याप्तिरपि वह्नित्वत्वावच्छेदेन वर्तत एवेति कथमव्याप्त्युद्धार इति वाच्यम् । तत्तत्प्रतियोगितावच्छेदकतात्वेन या पर्याप्तिः सैव निवेश्या तादृशधर्मावच्छिन्नावच्छेदकत्वावच्छिन्नभेदो वर्तत एव वह्नित्व इति दोषाभावात् । न च तादृशप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाव-

च्छेदकताकिञ्चिद्भेदनिवेशे धूमवान् वह्नेरित्यादौ घटाभावप्रतियोगितामादायातिव्याप्तिस्तादृशभेदकूटनिवेशे च दुर्ज्ञेयत्वम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकताकभेदनिवेशे च तादृशावच्छेदकसाधारणसमुदायत्वमेव तादृशधर्मपर्याप्त्यवच्छेदकमिति धूमत्वत्वावच्छेदेन तादृशभेदो वर्तत एवेति अतिव्याप्तितादवस्थ्यमिति वाच्यम् । तत्तत्प्रतियोगितावच्छेदकत्वत्वे यद्धर्मावच्छेदेन पर्याप्तिस्तत्तत्प्रतियोगितावच्छेदकतासाधारणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वेनापि तदवच्छेदेन पर्याप्तिः स्वीक्रियते इमौ घटपटौ इति वत् इमौ द्वौ इति सामान्यद्वित्वत्वावच्छिन्नपर्याप्तिः द्वित्वविशेषावच्छेदेन वर्तत इत्यनुपपत्तेरभावात् । तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकताकभेद एवानुगतो निवेशनीयः इति न दुर्ज्ञेयत्वम् । न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्नभेदो वह्नित्वत्वावच्छेदेन वर्तत इति कथमव्याप्त्युद्धार इति वाच्यम् वह्नित्वं समवायेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति प्रतीतेरभावात् समवायसम्बन्धावच्छिन्नतादृशावच्छेदकत्वावच्छिन्नभेदस्यापि वह्नित्वत्वावच्छेदेनाङ्गीकारात् साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य निवेशसम्भवाच्च ।

परेतु हेतुसमानाधिकरणाभावीयत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगितानिरूपितावच्छेदकतात्वावच्छेदकताकभेदकूटवत्त्वम् तादृशभेदत्वव्यापकम् तच्च तादृशभेदत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम् तच्चानुगतम्, अदुर्ज्ञेयञ्चेति । तादृशोभयावृत्तिधर्मश्च तत्तत्प्रतियोगितात्वमेव उभयावृत्तिपर्यन्तमुपलक्षणतयाऽनुगमकम् । न चोपलक्षणतयाऽभावप्रतियोगितावच्छेदककोटौ भानासम्भवेन कथं तादृशभेदकूटप्रसिद्धिरिति वाच्यम् प्रतियोगितासंसर्गकबुद्धेरेव तथा नियमात् प्रतियोगितावच्छेदकबुद्धौ तथा नियमाभावात् । अत्र चेदृशप्रतियोगिताकभेदत्वविशिष्टभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदप्रतियोगितायाश्च संसर्गविधया निवेशे क्षतिविरहात । तादृशधर्मसमूहस्य तादृशभेदप्रतियोगितावच्छेदकघटकतयोपलक्षणत्वोपपत्तेश्च ॥ २ ॥

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यावत् स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकमेतादृशं स्वं साध्यतावच्छेदकमित्यनवच्छेदकान्तपारिभाषिकबलाद्दण्डिमानित्यादौ तादृशं स्वं न किमपि दण्डस्वरूपं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकयावद्दण्डस्य प्रत्येकं कस्य दण्डस्यापि स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वविरह इति परम्परासम्बन्धानुधावनमिति भट्टाचार्येण लिखितम्। तच्च न सम्यक् यादृशं साध्यतावच्छेदकं तत्र तादृशमेव स्वपदेन धर्तव्यम् अन्यथा महानसीयत्वविशिष्टवह्नित्वस्य साध्यतावच्छेदकतास्थले व्यभिचारिण्यतिव्याप्तिः। तथापि दण्डत्वादिरूपेण दण्डस्योपादानसम्भवेन सर्वस्यैव दण्डस्य दण्डत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वसम्भवेनाव्याप्तेरयोग इति वस्तुतस्त्वित्यादिपाठः प्रामादिक इति वदन्ति ॥ ३ ॥

तद्वति धूमत्वादिकं वेति द्वितीयपक्षे धूमव्यापकवन्हिसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पक्ष इति ज्ञानं हेतुर्न तु स्वरूपतो धूमत्वाप्रकारकं धूमत्ववत्वान् पक्ष इत्याकारकम् तादृशज्ञानस्य धूमाभाववान् पक्ष इत्याकारकधूमत्वत्वाद्यप्रकारकासिद्धिज्ञानाप्रतिबध्यत्वात्। एतन्मते हेतुतावच्छेदकवृत्त्यसाधारणधर्मावच्छिन्नं साध्यसमानाधिकरणावृत्तित्वमेव विरोधो न तु हेतुतावच्छेदकावच्छिन्ने साध्यासामानाधिकरण्यम् प्रदर्शितज्ञानस्य हेतुतावच्छेदकं धर्मितावच्छेदकीकृत्य साध्यसामानाधिकरण्यानवगाहित्वात्तथाविधविरोधज्ञानाप्रतिबध्यत्वादिति भट्टाचार्येणोक्तम्। अत्रेयमनुपपत्तिः। नन्वत्र धूमव्यापकवह्निसमानाधिकरणधूमीयवद्धूमवान् पक्ष इत्येतादृशज्ञानस्य कारणत्वोक्तौ हेतुतावच्छेदकावच्छिन्ने साध्यसामानाधिकरण्यरूपाविरोधस्य सम्भवात् कथं हेतुतावच्छेदकवृत्त्यसाधारणधर्मावच्छिन्नं साध्यसमानाधिकरणवृत्तित्वं विरोधः कल्प्यते कथं वा तादृशज्ञानस्य प्रतिबध्यत्वरक्षार्थं जनकीभूतज्ञाने कारणतावच्छेदककोटौ गुरोर्धूमवत्त्वस्य प्रवेशः धूमत्वावच्छिन्नधर्मिकतादृशविरोधज्ञानस्य व्याप्तिज्ञाने प्रतिबध्यत्वसत्त्वात्। अत्र धूमवैशिष्ट्यमाधेयतासम्बन्धेन। न च व्याप्तित्वरूपेण व्याप्तिज्ञानं हेतुः तथा च तादृशव्याप्तिज्ञाने धूमत्वत्वस्याप्रवेशात् धूमत्वत्वरूपव्याप्तित्वरूपेण व्याप्ति-

ज्ञानं न सम्भवतीति वाच्यम् आधेयतासम्बन्धेन धूमीयत्वस्यापि व्याप्तिस्वरूपत्वात् ॥ ४ ॥

नन्वु महानसीयवह्न्यभिन्नवह्निमान् धूमादित्यादावतिव्याप्तिवारणाय प्रकृतानुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्याप्ता तादृशरूपावच्छिन्नानुयोगिताकतादृशाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदविवक्षणेऽपि रूपवान्पृथिवीत्वादित्यादावव्याप्तिः हेतुमन्निष्ठस्य विषयतया रूपत्वादिविशिष्टाभावस्य प्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य रूपत्वादावसत्त्वात्। न च साध्यतावच्छेदकताघटकसम्बधेन प्रतियोगितावच्छेदकत्वस्य विवक्षणान्न दोष इति वाच्यम् तथासति पर्याप्तिनिवेशेपि साध्यतावच्छेदकताघटकसम्बन्धाद्यवच्छिन्नाया हेतुमन्निष्ठमहानसीयवह्न्यभावप्रतियोगितावच्छेदकताया व्यासज्यवृत्तित्वविरहेण वह्नित्वादौ तदवच्छिन्नभेदासत्त्वात् वह्निमान्धूमादित्यादावव्याप्तिवारणसम्भवादिति चेन्न साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना या हेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकता तन्निरूपकप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य निवेशनीयत्वात । तथाच रूपवान् पृथिवीत्यादौ विषयित्वावच्छिन्नरूपत्वावच्छिन्नतादृशावच्छेदकताया लक्षणाघटकत्वान्नाव्याप्तिनं वा वह्निमान्धूमादित्यादौ तादृशसम्बन्धावच्छिन्नतादृशावच्छेदकतानिरूपकप्रतियोगितावच्छेदकत्वस्य व्यासज्यवृत्तित्वसत्त्वेन तदवच्छिन्नभेदस्य वह्नित्वादौ सत्त्वादव्याप्तिरिति ध्येयम् । न चैवमनुमितिविधेयतावच्छेदकतापर्याप्त्यवच्छेदकीभूतदण्डत्वावच्छेदेन दण्डादौ हेतुमन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदकतानिरूपकप्रतियोगितावच्छेदकतावच्छेदसत्त्वात् दण्डादिसाध्यकेऽव्याप्तिदानासङ्गतिरिति वाच्यम् हेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकताया व्याप्यवृत्तितया दण्डत्वावच्छेदेन तदवच्छिन्नभेदासत्त्वात् । न च यो यदनवच्छेदकः स तदभावावच्छेदक इति नियमात् हेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकताया व्याप्यवृत्तितया दण्डत्वावच्छेदेन तादृशावच्छेदकतावच्छेदसत्त्वान्नाव्याप्तिरिति वाच्यम् तादृशनियमस्याप्रामाणिकत्वात द्रव्यत्वावच्छेदेन दण्डादौ घटजनकत्वाभावप्रसङ्गात् इति । इदमत्रावधेयम् । तत्तदभावप्रतियोगितावच्छेदकतात्वरूपेण ता

दृशावच्छेदकताया व्यासज्यवृत्तित्वमुपगम्य अवच्छेदकतायाः पर्याप्तिनिवेशेपि न तादृशावच्छेदकत्वावच्छिन्नानुगताभावनिवेशनिर्वाहः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकनात्वरूपेण तथाविधत्वोपगमात्तत्र अनुगताभावनिवेशसम्भवेपि धूमवान्वह्नेरित्यादौ धूमत्वत्वावच्छेदेन तादृशावच्छेदकत्वावच्छिन्नभेदसत्त्वादतिप्रसङ्गात् । अत्र केचित् हेतुसमानाधिकरणाभावत्वसामानाधिकरण्योपलक्षितधर्मवन्निरूपितप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वं वाच्यमतो व्यभिचारिणि नातिप्रसङ्गः ।

वस्तुतो गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे पारिभाषिकानवच्छेदकत्वं निवेशनीयम् । तच्छरीरे यादृशं स्वं प्रविष्टं तादृशभेदनिवेशे विशिष्टवह्नित्वादिभेदासत्त्वेन तादृशधर्माविषयकप्रतीतिविषयत्वं निवेशनीयमतः प्रतियोगितावच्छेदकं यादृशयादृशरूपं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतत्कत्वरूपं तत्तदतिरिक्तवृत्तित्वमेवानवच्छेदकान्तेन विवक्षणीयम् । तथा च सर्वेषामेव दण्डादीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया कस्याश्चिद्दण्डव्यक्तेर्न यावत्प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वं स्वस्य स्वातिरिक्तत्वविरहादित्यखण्डधर्मस्य व्यापकतावच्छेदकत्वानुसरणमिति भट्टाचार्येणाशय उपदर्शितः ।

अत्रेयमाशङ्का । पारिभाषिकातिरिक्तत्वनिवेशे महानसीयवह्निभिन्नत्वत्वादिरूपप्रत्येकस्य स्वपदेन धर्तव्यतया तादृशस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकरूपातिरिक्तवृत्तित्वाद । नच स्वपदस्य साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकरूपवत्त्वमभ्युपेत्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्ने साध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मविशिष्टावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतत्कत्वमनतिरिक्तवृत्तित्वं निवेश्यम् । तथा च महानसीयवह्निभिन्नत्ववह्नित्वोभयावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वविरहान्न दोष इति वाच्यम् । सर्वस्यैव दण्डत्वावच्छिन्नतत्तद्दण्डादेर्दण्डत्वावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतया तादृशातिरिक्तवृत्तित्वात् दण्डिमान्दण्डिसंयोगादित्यादावव्याप्त्याशङ्कया अनुत्थितेर्ग्रन्थविरोधापत्तेश्च ।

अत्रेदं समाधानम् साध्यानुयोगिकत्वविशिष्टसाध्यतावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्यं तादृशसम्बन्धेन स्वविशिष्टसम्बन्धिताया महानसादेर्विरहात् । न च महानसीयवह्निभिन्नत्ववह्नित्वोभयरूपेण महानसीयवह्नेरनुमितौ भानात् तस्यापि साध्यतया तद्दोषतादवस्थ्यमिति वाच्यम् साध्यतावच्छेदकसम्बन्धेन पर्याप्त्यवच्छेदकधर्मविशिष्टानुयोगिनावच्छेदकधर्मावच्छिन्नानुयोगिकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवैशिष्ट्यनिवेशादित्याहुः ।

परे तु महानसीयवह्नित्वादेः प्रत्येकधर्मावच्छिन्नपर्याप्तिरस्त्यत्र । न चोभयपदेन धर्तुमशक्यतया प्रत्येकमुभयत्वातिरिक्तमेव उभयावच्छिन्नविधेयकानुमितिप्रयोजकमित्युभयधर्मावच्छिन्नविधेयताकानुमितिप्रसङ्गो दुर्वार एवेति वाच्यम् । दण्डत्वावच्छिन्नानुमितिवदुभयधर्मावच्छिन्नानुमितेरप्यनपायादित्याहुः ॥ ६ ॥

संयोगसम्बन्धावच्छिन्नाभावमादाय सिद्धसाधनवारणाय समवायसम्बन्धावच्छिन्नाभाव एव निवेशनीयः अन्यसम्बन्धावच्छिन्नविशेषाभावकूटस्य तत्सम्बन्धावच्छिन्नाभावव्यभिचारित्वे समवायसम्बन्धावच्छिन्नाभावकूटस्य तत्सम्बन्धावच्छिन्नाभावव्यभिचारित्वं तुल्यन्यायेन सम्भाव्यते इति यत्त्वतत्त्वेन प्रतियोगितावच्छेदकसम्बन्धानामपि व्याप्त्यन्तर्भावः । अत एव समवायसम्बन्धावच्छिन्नविशेषाभावहेतुना समवायसम्बन्धावच्छिन्नसंयोगसामान्याभावसिद्धिरित्यादिना भट्टाचार्येण समवायसम्बन्धविशेषाभावकूटस्य समवायसम्बन्धावच्छिन्नसामान्याभावस्य व्यभिचारित्वसम्भावनावारणाय यत्त्वतत्त्वेन सम्बन्धनिवेश इत्युक्तम् ।

अत्रेदमाशङ्क्यते । समवायसम्बन्धावच्छिन्नविशेषाभावकूटस्य समवायसम्बन्धावच्छिन्नसामान्याभावस्य व्यभिचारित्वसम्भवे सामान्याभावव्यभिचारशङ्कैव न जायत इति तद्वारणाय कथं यत्त्वतत्त्वेन सम्बन्धविशेषणमिति । यथा संयोगाभाववान् संयोगियावद्विशेषाभाववत्त्वादित्यादौ व्यभिचारशङ्का भवति तथात्रापि समवायत्वादिना सम्बन्धनिवेशे समवायसम्बन्धावच्छिन्नविशेषाभावे समवायसम्बन्धावच्छिन्नतादृशसामान्याभावव्यभिचारशङ्कोत्पत्तौ बाधकाभावात् विशेषधर्मनिवेशने यथा विशेषव्याप्तिपर्यवसानम् तथा सम्बन्धविशेषनिवेशेऽपि विशेषाभावघटिततया विशेषव्याप्तिपर्यव-

सानाद्व ॥ ८ ॥

अथ संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वस-
मानाधिकरणभेदप्रतियोगित्वस्य स्वरूपसम्बन्धावच्छिन्नाधेयत्वाव-
च्छिन्नावच्छेदकतासम्बन्धेनाभावस्य हेतुत्वेऽप्रसिद्धिः तादृशप्रति-
योगितावृत्तिप्रतियोगितात्वस्य यत्किञ्चित्सम्बन्धयोग्यत्वावच्छिन्ना-
भावत्वसमानाधिकरणभेदप्रतियोगित्वापेक्षया गुरुधर्मतयाऽभावप्र-
तियोगितानवच्छेदकत्वात्। नच यत्किञ्चित्संयोगाभावत्वसमानाधि-
करणभेदप्रतियोगितात्वस्य तन्निष्ठतादृशगुरुतराभावत्वसमानाधिक-
रणप्रतियोगितात्वावृत्तित्वेन स धारणतादृशप्रतियोगितात्वावच्छि-
न्नाभावीयप्रतियोगिताया न्यूनवृत्तितया तदवच्छेदकत्वाप्रसक्त्या
अनायत्या तादृशगुरुधर्मस्यैवावच्छेदकत्वमिति वाच्यम् एवमपि ता-
दृशाभावद्वयावृत्तिद्वित्वाश्रयनिष्ठभेदप्रतियोगितात्वस्य तादृशप्रति-
योगितासमनियततया तस्यैव लघुतया अवच्छेदकत्वप्रसक्त्या तादृ-
शगुरुप्रतियोगितात्वाभावस्याप्रसिद्धेर्दुर्वारत्वादिति चेन्न संयोग-
त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वस-
मानाधिकरणभेदप्रतियोगितात्वसम्बन्धेन संयोगत्वस्यैव तादृ-
शाभावप्रतियोगितावच्छेदकत्वकल्पनेनैवानुपपत्तेरभावात् अत्र गौ-
रवाभावादिति। वस्तुतस्तु संयोगत्वसमानाधिकरणोभयावृत्ति-
धर्मावच्छिन्नप्रतियोगिताकाभावस्वरूपसम्बन्धावच्छिन्नप्रतियोगि-
तापर्याप्त्यनधिकरणत्वमेव हेतुः। आधेयतासम्बन्धेन घटविशिष्ट-
विषयताभेदमादायैव तादृशप्रतियोगितावच्छेदकत्वसिद्धिरिति
यथाश्रुतमेव सम्यगिति ध्येयम् ॥ ९ ॥

सामान्यमुखीव्याप्तिस्थले उपाधिसाध्ययोः सामान्यव्याप्तिरादर-
णीया अन्यथा व्यभिचारोन्नायकतया दूषकत्वं न सम्भवति सामान्यमु-
खीव्याप्तिस्थले उपस्थितौ यावत्साधनसजातीयव्याप्तिग्रहस्यानुमि-
तिहेतुतया विशेषव्याप्त्यादरे उपाधिसजातीयानवच्छिन्नघटीययाव-
द्विशेषाभावाधिकरणत्वात्। प्रकृतसाध्यसजातीयस्य बहुशो व्यापक-
तागृहीतवत्ताया व्यभिचारितासम्बन्धेन साधनसजातीये कुत्रचित्
साध्यसजातीयव्याप्त्यादेरपि न क्षतिरिति ग्रन्थकृतोक्तमिति ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
सिद्धान्तलक्षणगादाधरीक्रोडपत्रम्।

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (सप्तमम्)

# व्याप्त्यनुगमगादाधरीक्रोडपत्रम्।

न च प्रतियोग्यसमानाधिकरणत्वेनाज्ञायमाना यावन्तो हेतुसमानाधिकरणा अभावास्तत्प्रतियोगितावच्छेदकत्वाभावग्रहो हेतुरिति शिरोमणिः। तत्राज्ञायमानत्वं तत्कालावच्छिन्नतज्ज्ञानविषयत्वाभाववत्त्वम् नतु तत्कालीनतज्ज्ञानस्याविषयत्वं प्रतियोगिसामानाधिकरण्यानुपस्थितिदशायां तत्कालीनतज्ज्ञानस्याप्रसिद्ध्याऽनुमित्यनुपपत्तिः। न च ज्ञानांशे तत्पुरुषीयत्वनिवेशस्यावश्यकतया यादृशशरीरावच्छिन्नस्य पुंसः कदापि क्वचिदप्यभावे प्रतियोगिसामानाधिकरण्यग्रहो न जातः तस्यानुमित्यनुपपत्तिः तदीयतज्ज्ञानाप्रसिद्धेरिति वाच्यम् शरीरविशेषमन्तर्भाव्य तदात्मसमवेतस्वरूपतत्पुरुषीयत्वस्य निवेश्यतयाऽप्रसिद्धेरनवकाशादिति भट्टाचार्याः॥ अथ तत्पुरुषीयप्रतियोगिसामानाधिकरण्यस्य घटादौ प्रसिद्ध्या तद्विषयत्वाभावस्याभावे सत्त्वात् कथं तत्पुरुषीयानुमित्यनुपपत्तिरित्युक्तमिति। मैवम् घटादिनिष्ठतादृशज्ञानविषयत्वस्याभावोऽभावे व्याप्यवृत्तिरिति तत्र तत्कालावच्छिन्नत्वाप्रसिद्धेरिति केचित्।

परे तु स्वप्रतियोगिसामानाधिकरण्येनाज्ञायमानत्वमित्यत्र स्वपदं न तादृशविषयत्वाभावानुयोगिपरम् किन्तु प्रतियोगिपरमेव तथा च स्वप्रतियोगिसमानाधिकरणत्वेन ज्ञायमानं यद्यत्स्वं तत्कालावच्छेदेन प्रतियोगिसमानाधिकरणत्वेन तत्पुरुषीयज्ञानविषयत्वापन्नतत्तदन्यत्वमर्थो वाच्यः अन्यथा स्वपदस्यानुयोगिपरत्वे वास्तवस्वप्रतियोगिसमानाधिकरणयादृशाभावस्य प्रतियोगिसामानाधिकरण्यग्रहः तत्पुरुषस्य कुत्रापि न जातः तत्पुरुषीयतादृशाभावप्रतियोगिसामानाधिकरण्यग्रहाप्रसिद्ध्या स्वपदेन तादृशाभावस्य धर्तुमशक्यत्वात्तादृशाभावस्य तादृशाज्ञायमानत्वविरहेण निरुक्तयावदन्तर्गततया साध्यतावच्छेदके प्रतियोगिव्यधिकरणहेतुमन्निष्ठतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे तदन्याभावप्रतियोगितानवच्छेदकत्वग्रहसम्भवादनुमित्यापत्तेः। एवञ्च यत्पुरुषस्य क्वचि-

दप्यभावे स्वप्रतियोगिसामानाधिकरण्यग्रहो न जातः तदीयानुमितेरनुपपत्तिः सुदृढैवेति ध्येयम् ॥ १ ॥

प्रतियोग्यव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन तेषां ताद्दशावच्छेदकत्वग्रहाविरोधित्वेन तद्बुद्धीनां वाऽनुगमादिति शिरोमणिः । यद्यप्युक्तव्यभिचारावगाहिसमूहालम्बनधीविरोधित्वमतिप्रसक्तम् तथापि ताद्दशग्रहसामान्यप्रतिबन्धकत्वस्य विवक्षितत्वान्न दोषः । तच्च ताद्दशालौकिकग्रहत्वव्यापकप्रतिबध्यताकत्वमिति भट्टाचार्येणोक्तम् ॥ अत्रालौकिकपदं परोक्षज्ञानपरमनुमितिपरं वेति अत एव ताद्दशावच्छेदकतात्वावच्छिन्नविषयतासामान्यावच्छिन्नप्रतिबध्यताप्रवेशे वक्ष्यमाणगौरवमपि सङ्गच्छते ताद्दशावच्छेदकतात्वावच्छिन्नविषयितायां इच्छाप्रयोज्यत्वसाक्षात्कारत्वानिरूपितत्वनिवेशस्यावश्यकत्वादन्यथा ताद्दशविषयितासामान्यावच्छिन्नप्रतिबध्यत्वाप्रसिद्धेः ताद्दशग्रहत्वव्यापकत्वनिवेशे, तु भवन्मतेऽप्यनाहार्यत्वदोषविशेषाजन्यत्वनिवेशस्यावश्यकत्वेन वक्ष्यमाणगौरवाभिधानासङ्गतेः। अत्र च ताद्दशविषयितायां साक्षात्कारत्वानिरूपितत्वाद्यनिवेशेऽनुमितीयताद्दशावच्छेदकत्वावच्छिन्नप्रतिबध्यतानिवेशेनैव उभयकल्पसाम्यम् तथापि तत्कल्पस्याशङ्कयाऽत्र युक्तत्वात् विषयितायामिच्छाप्रयोज्यत्वादिनिवेश एव गौरवमभिहितमिति तु विभावनीयमिति।

वस्तुतस्तु ताद्दशग्रहत्वव्यापकत्वमेव निवेश्यम् तेन परोक्षत्वस्य जातित्वविवादग्रस्तत्वेपि न क्षतिः न वा स्थलविशेषेऽनुमित्यप्रसिद्धावपि दोषः । व्यापकत्वञ्च तद्धर्मिनिष्ठभेदप्रतियोगितानवच्छेदकत्वम् अवच्छेदकता च स्वावच्छेदकविषयितावत्त्वसम्बन्धेन स्वनिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन वा तेन प्रतिबध्यताया ज्ञानभेदेन भिन्नत्वेपि न क्षतिः । एवं प्रतिबध्यता ।

अथात्र प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वपर्याप्तावच्छेदकताकप्रकारत्वावच्छिन्नप्रतिबध्यतानिवेशेनैव प्रतियोगिव्यधिकरणहेतुमन्निष्ठवह्न्यभावान्याभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवात् प्रतिबध्यतायां ताद्दशावच्छेदकत्वग्रहत्वव्यापकत्वनिवेशो व्यर्थ इति चेन्न ताद्दशप्रतियोगितावच्छेदकवह्नित्वधर्मिकघटादिप्रकारकज्ञानीयधर्मिता-

वच्छेदकताख्यतादृशावच्छेदकतात्वपर्याप्त्यवच्छेदकताकप्रकारत्वाव-
च्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनः तादृशावच्छेदक-
त्ववद्वह्नित्वं घटाभाववदित्याकारकज्ञानादनुमित्यापत्तेः । न च
प्रकारतात्वेन तादृशप्रकारतावच्छेद्यत्वं निवेशनीयमिति वा-
च्यम् घटत्वावच्छिन्नप्रकारतानिरूपिततादृशोभयधर्मावच्छिन्नविशे-
ष्यत्वावच्छिन्नवह्नित्वत्वावच्छिन्नविशेष्यतानिरूपिततादृशावच्छेदक-
तायां अपि उक्तप्रतिबध्यतावच्छेदकत्वेनोक्तप्रतिबध्यतायां प्रका-
रतात्वेन तादृशप्रकारत्वावच्छिन्नस्यापेक्षितत्वात् । न च ता-
दृशप्रकारतायां धर्मितावच्छेदकत्वानवच्छिन्नत्वं निवेशनीयमि-
ति वाच्यम् एकत्र द्वयमिति रीत्या जायमाने वह्नित्वे प्रतियोगि-
व्यधिकरणहेतुमन्निष्ठप्रतियोगितावच्छेदकत्वघटोभयावगाहिज्ञाने ता-
दृशोभयाभाववत्त्वज्ञानस्य प्रतिबन्धकत्वेन तादृशप्रतिबन्धकताशा-
लितादृशोभयाभाववद्वह्नित्वमिति ज्ञानादनुमित्यापत्तेः । यद्यपि ता-
दृशप्रकारत्वान्यप्रकारत्वानिरूपितविशेष्यत्वावच्छिन्नप्रतिबन्धकता-
निवेशेऽप्युक्तदोषवारणसम्भवः तथापि तादृशावच्छेदकत्ववद्व-
ह्नित्वमिति—ज्ञानीयतादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि-
नि तादृशावच्छेदकत्ववद्वह्नित्वमिति ज्ञानेऽतिप्रसङ्गो दुर्वा-
रः । न चोक्तज्ञाने तादृशप्रतिबन्धकतावच्छेदकीभूतवक्ष्यमाण-
साध्यतावच्छेदकविषयतानिरूपिताभावविषयतानिरूपितावच्छेदक-
त्वविषयिताशालित्वाभावादेव नातिप्रसङ्ग इति वाच्यम् वक्ष्यमाण-
रीत्या उक्तज्ञानवारणेऽपि तादृशावच्छेदकत्ववद्घटाभावप्रतियोगि-
तावच्छेदकत्वाभाववद्वह्नित्वमिति ज्ञानस्याशक्यवारणात् । यदि च
तादृशप्रकारत्वान्यप्रकारत्वानिरूपितमुख्यविशेष्यत्वावच्छिन्नत्वं प्र-
तिबध्यतायां निवेश्योक्तदोषो वार्यते तदा व्यापकत्वनिवेशापेक्षया
लाघवानवकाश इति । केचित्तु यत्र स्थलविशेषे प्रतियोगिव्यधिक-
रणहेतुमन्निष्ठाभावाद्यंशे यत्किञ्चिद्घटपटादिकमवगाह्यैव व्यभिचा-
रज्ञानं जायते न तु तदनवगाह्येति तत्र तादृशावच्छेदकतात्वपर्याप्ता-
वच्छेदकताकप्रकारत्वाप्रसिद्ध्याऽननुगमो दुर्घटः स्यात् अतस्तादृश-
ग्रहत्वव्यापकत्वानिवेश इत्याहुः ॥ २ ॥

अत्र तादृशावच्छेदकत्वाभाववद्व्याप्यवह्नित्वमिति ज्ञानवारणाय
तादृशावच्छेदकप्रकारकग्रहत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिब-

च्यतानवच्छेदकीभूतविषयित्वावच्छिन्ननिरुक्तप्रतिबन्धकताशालिज्ञानत्वेन हेतुत्वमुक्तम् भट्टाचार्येण । अत्र तादृशावच्छेदकत्वग्रहत्वावच्छिन्नमित्यत्रावच्छेदकत्वं स्वरूपसम्बन्धरूपम् । प्रतिबन्धकता च ज्ञानवैशिष्ट्यानवच्छिन्ना तेन तादृशावच्छेदकत्वाभाववद्व्याप्यवह्न्यभावान्याभावप्रतियोगितावच्छेदकत्वाभावाभाववान् तादृशावच्छेदकत्ववच्च वह्नित्वमिति ज्ञानीयज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय व्याप्यवत्ताज्ञाने नातिप्रसङ्गः । न च तथापि तादृशावच्छेदकत्वाभावव्याप्यप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावान्याभावप्रतियोगितावच्छेदकत्वाभाववद्वह्नित्वमिति ज्ञानस्य सङ्ग्रहो दुर्वारः तज्ज्ञाननिष्ठायां तादृशावच्छेदकत्वग्रहत्वव्यापकप्रतिबध्यताकप्रतिबन्धकतायां तादृशावच्छेदकत्वप्रकारताशालिहेतुमन्निष्ठप्रतियोगिव्यधिकरणवह्न्यभावान्याभावप्रतियोगितावच्छेदकं वह्नित्वमित्याकारकग्रहत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या तादृशवह्न्यभावान्याभावप्रतियोगितावच्छेदकत्वाभावविषयिता तदवच्छिन्नत्वस्य सत्त्वादिति वाच्यम् तादृशावच्छेदकत्वग्रहत्वावच्छिन्नप्रतिबन्धकतापदेन प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावाप्रकारकत्वे सति तत्प्रकारकत्वघटितनिश्चयत्वावच्छिन्नप्रतिबन्धकताया एव विवक्षितत्वात् । तादृशावच्छेदकत्वाभावव्याप्यवत्ताज्ञाननिरूपितप्रतिबन्धकत्वञ्च न तादृशनिश्चयत्वावच्छिन्नमिति ध्येयम् ॥

यत्तु तादृशावच्छेदकत्वग्रहत्वावच्छिन्नप्रतिबन्धकतापदेन तादृशावच्छेदकत्वनिश्चयत्वव्यापकप्रतिबन्धकताविवक्षणेनैवोक्तदोषवारणसम्भवेनैतत्कल्पे प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमनुपादेयमिति । तन्मन्दम् । प्रत्युत व्यापकतानिवेशे गौरवाद् वह्निमान् घटवद्वह्नित्वकालीनधूमादित्यादौ घटाभाववद्वह्नित्व मित्यादिज्ञानेऽतिप्रसङ्गाच्च ॥

अथात्र तादृशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकाभूतविषयित्वावच्छिन्नप्रतिबन्धकतानिवेशे तादृशपदं व्यर्थम् प्रतिबन्धकतायां निरुक्तविषयित्वावच्छिन्नत्वनिवेशेनैव प्रतियोगिव्यधिकरणहेतुमन्निष्ठवह्न्यभावान्याभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवादिति । न च प्रति-

न्धकतायां ताद्दशावच्छेदकत्वग्रहत्वव्यापकप्रतिबध्यतानिरूपितत्वानिवेशेऽभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानस्य वारणायोगः । अभावप्रतियोगितावच्छेदकत्वज्ञानप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वज्ञानसाधारणनिश्चयत्वस्य प्रकारतावच्छेदकतापर्याप्त्यधिकरणतत्तद्धर्मविशेषणनिवेशस्य दुर्वारतया तन्निवेश्य पृथक्प्रतिबन्धकत्वकल्पनस्यावश्यकतयोक्तज्ञानस्यापि निरुक्तविषयित्वावच्छिन्नप्रतिबन्धकतासत्त्वादिति वाच्यम् उक्तज्ञानवारकवक्ष्यमाणसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहत्वाव्यापकत्वनिवेशेऽपि तत्प्रतिबध्यतानिरूपितत्वनिवेशेऽपि ताद्दशप्रतिबध्यतायां ताद्दशावच्छेदकग्रहत्वव्यापकत्वनिवेशे वैयर्थ्यादिति । न च व्यापकत्वानिवेशे ताद्दशावच्छेदकत्वसंशयादप्यनुमित्यापत्तिः संशयस्यापि ताद्दशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतप्रतियोगित्वसम्बन्धावच्छिन्नताद्दशावच्छेदकत्वविषयित्वावच्छिन्ना या प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकताद्दशावच्छेदकत्वाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता तच्छालित्वादिति वाच्यम् पक्षविषयतानिरूपितहेतुविषयतानिरूपित इत्यादिक्रमेण निरूप्यनिरूपकभावापन्ना या निरुक्तप्रतिबन्धकतावच्छेदकीभूतसाध्यतावच्छेदकविषयता तच्छालिज्ञानत्वेन हेतुत्वस्य वक्ष्यमाणत्वात् ताद्दशावच्छेदकत्वसंशयीयसाध्यतावच्छेदकविषयताया तत्प्रतिबन्धकतानवच्छेदकत्वादिति ।

अत्र केचित् प्रतिबध्यतायां ताद्दशावच्छेदकत्वग्रहत्वव्यापकत्वानिवेशे प्रत्यक्षानिश्चयत्वावच्छिन्नं प्रति ग्राह्यसंशयस्य प्रतिबन्धकतामते निरुक्तविषयित्वावच्छिन्ना या प्रत्यक्षानिश्चयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता तच्छालित्वादिति ताद्दशसंशयादनुमित्यापत्तेर्दुर्वारत्वात् । ताद्दशावच्छेदकत्वग्रहत्वव्यापकतानिवेशे तु ग्राह्यसंशयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यता न ताद्दशावच्छेदकत्वग्रहत्वव्यापिकेति नोक्तदोषः । न च प्रतिबध्यतायां ताद्दशावच्छेदकत्वव्यापकत्वमनिवेश्य ज्ञानत्वावच्छिन्नत्वनिवेशनैवोक्तदोषवारणं युक्तमिति वाच्यम् प्रकारान्तरस्य प्रकारान्तरादूषकत्वादित्याहुः ।

यत्तु यत्र यत्साध्यतावच्छेदकधर्मिकप्रतियोगिव्यधिकरणय-

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकनिश्चयोत्तरं
कदाचिदपि तादृशावच्छेदकत्वानुमितिर्न जायते तत्र तादृशानुमितिं
प्रति तादृशावच्छेदकत्वनिश्चयत्वेनैव प्रतिबन्धकत्वं वाच्यम्
प्रयोजनविरहात् तादृशप्रतिबन्धकतायामिच्छायामप्युत्तेजकत्वं ना-
स्ति तथा च एतादृशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकता-
कप्रतिबध्यतावच्छेदकीभूता या तादृशावच्छेदकत्वविधेयत्वाख्यवि-
षयता तदवच्छिन्ना तादृशावच्छेदकत्वाभावप्रकारकबुद्धित्वाव-
च्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता तच्छालिनः प्रतियोगिव्य-
धिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यत् साध्यतावच्छेद-
कम् इत्याकारकज्ञानादप्यनुमित्यापत्तिरतस्तद्वारणाय तादृशावच्छे-
दकत्वग्रहत्वव्यापकत्वनिवेशः । तन्निवेशे तादृशावच्छेदकत्वविधे-
यताशाल्यनुमितित्वावच्छिन्नप्रतिबध्यतायास्तादृशग्रहत्वव्यापकत्व-
विरहात् तदवच्छेदकविषयत्वावच्छिन्नप्रतिबन्धकतामादायैव नाति-
प्रसङ्ग इति ।

तन्न समीचीनम् तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताकप्र-
तिबध्यतानिरूपितविषयितानिष्ठावच्छेदकतापर्याप्त्यधिकरणरूपाव-
च्छिन्नविषयितानिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशेनैवोक्तदोषवा-
रणसम्भवात् । सिद्धिनिरूपितानुमितिनिष्ठप्रतिबध्यतानिरूपित-
विषयितानिष्ठावच्छेदकतावच्छेदकीभूतविधेयितात्वघटितधर्मस्य प्र-
तिबन्धकतावच्छेदकतानवच्छेदकत्वात् प्रकारितात्वघटितधर्मस्यै-
व प्रतिबन्धकतावच्छेदकतावच्छेदकत्वात् ।

परेतु यत्र स्थलविशेषे व्यभिचारनिश्चयात्मकज्ञानमभावांशे
घटादिकमवगाह्यैव जायते तत्र प्रतियोगिव्यधिकरणहेतुमन्निष्ठघटा-
द्यभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्याकारकज्ञान-
सङ्ग्रहो दुर्वारस्तादृशप्रतिबन्धकतायां तादृशप्रतिबध्यतावच्छेदक-
विषयित्वावच्छिन्नत्वसत्त्वात् तादृशग्रहत्वव्यापकत्वनिवेशे च ताद-
शग्रहत्वव्यापकप्रतिबध्यतानिरूपितत्वमेव नास्तीति ।

वस्तुतस्तु प्रतिबध्यतायां तादृशावच्छेदकत्वग्रहत्वव्यापकत्वा-
निवेशे प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदक-
त्वतदभाववद्वह्नित्वावच्छिन्नसमानाधिकरणहेतुमान् पक्ष इत्याका-
रकज्ञानादनुमित्यापत्तिरशक्यवारणैव निरूपितत्वसम्बन्धावच्छि-

प्रतियोगिताकवह्नित्वावच्छिन्नाधिकरणाभाववत्ताबुद्धिं प्रति निरूपितत्वसम्बन्धेन तादृशाधिकरणवत्तानिश्चयस्य प्रतिबन्धकतयोक्तज्ञानेपि तादृशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या तादृशावच्छेदकत्वाभाववद्वह्नित्वविषयता तदवच्छिन्नतादृशाधिकरणाभाववत्ताज्ञाननिरूपितप्रतिबन्धकतावत्त्वात्। न च तत्प्रतिबन्धकतायां तादृशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या तादृशावच्छेदकत्वाभाववद्वह्नित्वविशेष्यता तदवच्छिन्नत्वाभावाच्च तामादायातिप्रसङ्गः तादृशाधिकरणवत्त्वज्ञानीयप्रतिबन्धकतावच्छेदककोटौ वह्नित्वप्रकारिताया एव निवेशितत्वादिति वाच्यम्। शुद्धतादृशाधिकरणवत्ताज्ञानतादृशावच्छेदकत्वतदभाववद्वह्नित्वावच्छिन्नाधिकरणवत्ताज्ञानसाधारणनिश्चयत्वस्य प्रकारतावच्छेदकतापर्य्यन्त्यधिकरणतत्तद्धर्मविशेषाननिवेश्य दुर्वचतया तद्विशेष्यशुद्धतादृशाधिकरणवत्तानिश्चयत्वेनैव तादृशावच्छेदकत्वाभाववद्वह्नित्वावच्छिन्नाधिकरणवत्तानिश्चयत्वेनापि प्रतिबन्धकत्वस्यावश्यकत्वेन तादृशप्रतिबन्धकतायामवच्छेद्यावच्छेदकभावापन्नतादृशावच्छेदकत्वाभाववद्वह्नित्वविशेष्यित्वावच्छिन्नत्वस्याक्षतत्वात्। प्रतिबध्यतायां तादृशावच्छेदकत्वग्रहत्वव्यापकत्वनिवेशे च तादृशावच्छेदकं वह्नित्वमित्याकारकज्ञाने तादृशाधिकरणवत्ताज्ञानीयप्रतिबध्यताविरहादेव तादृशप्रतिबध्यतायां न तादृशग्रहत्वव्यापकत्वमतो नोक्तातिप्रसङ्ग इति युक्तमुत्पश्यामः। न च तादृशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वे सति तादृशावच्छेदकत्वग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वेनानुगमेनापि व्याप्यवत्तादिज्ञानवारणसम्भवे प्रतिबन्धकतायां तादृशप्रतिबध्यतावच्छेदकीभूतविषयित्वावच्छिन्नत्वपर्यन्तानुधावनं व्यर्थमिति वाच्यम्। वह्नित्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभाववद्व्याप्यवत् तादृशावच्छेदकभेदवच्च न वेत्यादिज्ञानादनुमित्यापत्तिवारणाय प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववद्वह्नित्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं न वेत्याकारकज्ञानाच्चानुमित्यापत्तिवारणाय च तत्सार्थक्या-

त् उक्तज्ञानस्यापि निरुक्तप्रतिबध्यतावत्त्वे सति तादृशप्रतिबन्धकताशालित्वात् । तादृशप्रतिबध्यतावच्छेदकीभूतविषयित्वावच्छिन्नत्वनिवेशे च तादृशप्रतिबध्यतावच्छेदकीभूता या तादृशावच्छेदकभेदाविषयिता उक्तज्ञानीयप्रतिबन्धकतायां तदवच्छिन्नत्वाभावान्नातिप्रसङ्ग इति ध्येयम् । न च तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतस्वावच्छेदकतादृशसाध्यतावच्छेदकविषयितावत्त्वनिवेशे नोक्तदोषः प्रतिबन्धकतायामुक्तविशेषणावच्छिन्नत्वमफलम् इति वाच्यम् तादृशप्रतियोगितानवच्छेदकं वह्नित्वमित्याकारकलौकिकदोषविशेषजन्यग्रहस्य सङ्ग्रहप्रसङ्गात् । न च निरुक्तप्रतिबध्यतावच्छेदकीभूतविषयित्वावच्छिन्नत्वेन तादृशप्रतिबन्धकताया विशेषणीयत्वेऽपि वह्निमान् घटाभाववदवच्छेदकत्ववत्कालीनधूमादित्यादौ तादृशावच्छेदकत्वाभावव्याप्यघटवद्वह्नित्वमिति ज्ञानादनुमित्यापत्तिरुक्तज्ञाननिष्ठतादृशावच्छेदकत्वग्रहप्रतिबन्धकतायां घटभाववत् अवच्छेदकत्ववदित्याकारकनिश्चयविशिष्टतादृशावच्छेदकत्ववच्च वह्नित्वमित्याकारकनिश्चयत्वावच्छिन्ना या घटवद्वह्नित्वमितिज्ञानीयप्रतिबन्धकता तन्निरूपितप्रतिबध्यतावच्छेदकीभूता या घटत्वावच्छिन्ना विषयिता तदवच्छिन्नत्वस्य प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वनिश्चयत्वस्य च विरहादेव न तत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतघटत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताशाल्युक्तज्ञानादनुमित्यापत्तिः । ज्ञानवैशिष्ट्यानवच्छिन्नतादृशावच्छेदकत्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतविषयित्वावच्छिन्नत्वस्यैव तादृशविषयित्वावच्छिन्नपदेन विवक्षितत्वादिति वाच्यम् । सामान्यधर्मावच्छिन्नप्रकारकज्ञानसमान्यघटितविशेषधर्मावच्छिन्नप्रकारकज्ञानसाधारणनिश्चयत्वस्य प्रकारतावच्छेदकतापर्याप्त्यधिकरणतत्तद्धर्मविशेषाननिवेश्य दुर्वचतया तन्निवेशेनं पृथक्पृथक्प्रातिबन्धकत्वस्य ग्रन्थकृतैवोक्त्वेन घटवद्वह्नित्वमिति ज्ञानं प्रति घटाभाववदवच्छेदकत्ववह्नित्वमित्याकारकनिश्चयत्वेनैव प्रतियोगिव्यधिकरणघटाभाववदवच्छेदकत्ववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमित्याकारकनिश्चयत्वेनापि पृथक्प्रतिबन्धकत्वस्या

वश्यकतया तत्प्रतिबन्धकतावच्छेदककोटौ प्रयोजनविरहेण घटाभाववदवच्छेदकत्ववदित्याकारकनिश्चयवैशिष्ट्यानिवेशादिति । न च निरुक्तप्रतिबध्यतानवच्छेदकविषयित्वावच्छिन्नत्वपदेन तादृशप्रतिबध्यतानवच्छेदकविषयित्वानवच्छिन्नत्वस्य विवक्षितत्वात् नोक्तदोषः उक्तज्ञानीयप्रतिबन्धकतायां तादृशप्रतिबध्यतानवच्छेदकीभूतव्याप्यत्वविषयित्वावच्छिन्नत्वमिति वाच्यम् । घटकालीनहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभाववद्वह्नित्वमित्यस्यासङ्ग्रहापत्तेः । उक्तरीत्या निश्चयत्वनिवेशानुरोधेन कालीनत्वादिविषयित्वस्याप्युक्तज्ञाननिष्ठप्रतिबन्धकतावच्छेदकत्वात् तस्य तादृशप्रतिबध्यतानवच्छेदकत्वात् ।

अत्र केचित् साधनभेदेन कार्यकारणभावभेदात् उक्तस्थले तादृशावच्छेदकत्वाभावव्याप्यघटवद्वह्नित्वमित्यादिज्ञाननिष्ठतत्तत्प्रतिबन्धकताभिन्नत्वेनापि तादृशप्रतिबन्धकताया विशेषणीयत्वान्नोक्तातिप्रसङ्गः ।

एतेन भेदवद्वृत्त्यधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानसङ्ग्रहापत्तिरित्यपि निरस्तमित्याहुस्तच्चिन्त्यम् ।

वस्तुतस्तु वह्नित्वधर्मिकघटवत्ताबुद्धिम्प्रति घटाभाववदवच्छेदकत्ववत्कालीनधूमवन्निष्ठप्रतियोग्यव्यधिकरणाभावप्रतियोगितावच्छेदकप्रकारकवह्नित्वधर्मिकनिश्चयत्वेनैवावश्यं प्रतिबन्धकत्वं कल्प्यम् । घटाभाववदवच्छेदकत्ववत्कालीनधूमवन्निष्ठतादृशाभावप्रतियोगितावच्छेदकं वह्नित्वमिति निश्चयधर्मिकघटाभाववति अवच्छेदकत्ववति घटाभावप्रकारकमित्याकारकाप्रामाण्यग्रहकाले स्वतन्त्रघटाभाववदवच्छेदकवदिति निश्चयसत्त्वेऽपि तादृशज्ञानस्य प्रतिबन्धकत्वानुरोधात् । तथा चानुगतज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य तादृशावच्छेदकत्वग्रहत्वावच्छिन्नप्रतिबन्धकतानिवेशान्न दोषः ॥ ३ ॥

तदभावव्याप्यवत्तादिनिश्चयप्रतिबन्धकतावच्छेदकगर्भे, व्याप्तेर्धर्मितावच्छेदकीभूतविषयतानिवेशविरहसम्भवे तु तादृशसाध्यतावच्छेदकनिष्ठविषयितानिरूपिताभावविषयितानिरूपितत्वावच्छेदकीभूतावच्छेदकत्वविषयतावत्त्वघटितोभयसम्बन्धेन तादृशप्रतिबन्धकतायाः कारणतावच्छेदकत्वं स्वीकरणीयं प्रतिबध्यताऽपि न निवेशनीया । ज्ञानद्वयसाधारणप्रतिबन्धकत्वं च ज्ञानवैशि-

घ्यानवच्छिन्नत्वनिवेशेन वारणीयमिति भट्टाचार्याः । न च प्रतिब-न्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वानिवेशेऽवच्छेदकत्वाभावव-त्कालीनधूमादिहेतुकवह्न्यादिसाध्यकस्थले तादृशधूमवन्निष्ठाभाव-प्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानासंग्रहः तन्निष्ठप्रतिब-न्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वादिति वाच्यम् । तत्प्रतिबन्धक-त्वावृत्तिज्ञानवैशिष्ट्यावच्छिन्नत्वाभावस्य विवक्षितत्वादिति । अ-थात्र वह्निमान् घटाभावप्रतियोगितावच्छेदकत्ववत्वह्नित्वकाली-नधूमादित्यादौ घटाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञा-नस्य संग्रहापत्तिः उक्तज्ञानस्यापि तादृशावच्छेदकत्वग्रहत्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूततादृशसाध्यतावच्छे-दकनिष्ठविषयतानिरूपिताभावविषयतानिरूपितावच्छेदकत्वविषयता-शालित्वादिति चेन्न हेतुतावच्छेदकविशिष्टग्रहत्वाव्यापकत्वेन तादृशावच्छेदकत्वग्रहत्वव्यापकप्रतिबध्यताया विशेषणीयत्वात् उक्तज्ञानीयप्रतिबध्यता च न हेतुतावच्छेदकविशिष्टग्रहत्वाव्यापि-केति नोक्तदोष इति ध्येयम् ॥ ४ ॥

यदि च साध्यतावच्छेदकस्याभावप्रतियोगितानवच्छेदकत्वादि-ग्रहात्रानुमितिस्तदा तादृशावच्छेदकत्वादिग्रहाविरोधित्वमपि नि-वेशनीयमिति दीधितिः । तदविरोधित्वं च तादृशग्रहनिष्ठप्रतिबध्य-तानिरूपितप्रतिबन्धकतानवच्छेदकत्वम् । निवेशनीयमिति । अस्य निरुक्तव्यभिचारज्ञानीयप्रतिबन्धकतावच्छेदकविषयतायामित्यादिः । अभावप्रतियोगितावच्छेदकं वह्नित्वमित्यादिज्ञाननिष्ठप्रतिबध्यता च लौकिकसंनिकर्षाजन्यवह्नित्वत्वाद्यवच्छिन्नविशेष्यकसमानाधिकर-णाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रकारकग्रहत्वाव्यापकप्र-तिबध्यतात्वेन निवेशनीया न तु तादृशग्रहत्वावच्छिन्नप्रतिबध्यता-त्वेन भेदकूटनिवेशापत्त्या गौरवात् । प्रतियोग्यसमानाधिकरणहेतुम-न्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहत्वावच्छिन्नप्रतिबध्यतानामपि वृत्तिमदभावप्रतियोगितावच्छेदकत्वग्रहवृत्तितयाऽप्रसिद्धिरतस्तादृश-ग्रहनिष्ठत्वमपहाय तादृशग्रहत्वव्यापकत्वनिवेश इति भट्टाचार्याः । न च समानाधिकरणाभावप्रतियोगितावच्छेदकतात्वपर्याप्तावच्छे-दकताकप्रकारताशालिग्रहवृत्तित्वनिवेशेनैवोपपत्तौ व्यापकतानिवे-शो व्यर्थ इति वाच्यम् व्यभिचारग्रहनिष्ठप्रतिबध्यताया वह्नित्व

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं समानाधिकरणाभावप्रतियोगितावच्छेदकं चेत्याकारकसमूहालम्बनसमानाधिकभावप्रतियोगितावच्छेदकतात्वपर्याप्तावच्छेदकताकप्रकारताशालिग्रहवृत्तितयाऽप्रसिद्धितादवस्थ्यात्। न चाधिकरणत्वविषयताभिन्नविषयतानिरूपिताधिकरणविषयत्वानिरूपकसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहवृत्तित्वनिवेशे उक्तसमूहालम्बनज्ञानमादाय नाप्रसिद्धिरिति वाच्यम् यादृशस्थलविशेषेऽधिकरणांशेऽन्यावगाहिसमूहालम्बनमेव तादृशज्ञानं जायते तत्र यादृशविषयत्वानिरूपकज्ञानाप्रसिद्धेः। एतेन समूहालम्बनाद्यनात्मकसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमात्रावगाहियत्किञ्चिज्ज्ञानवृत्तित्वनिवेशेनापि सामञ्जस्ये व्यापकतानिवेशो व्यर्थ इत्यपि परास्तम्। अथैवमपि अवच्छेदकत्वसामान्याभावात्मकप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिग्रहासंग्रह इति चेन्न तादृशग्रहत्वव्यापकप्रतिबध्यताभिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्य व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकविषयतायां विवक्षितत्वादिति ध्येयम॥ ५॥

वस्तुतस्तु तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वस्य व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकविषयितायां निवेशापेक्षया लाघवात्तादृशग्रहत्वाव्यापकत्वमेव तादृशप्रतिबध्यताय निवेशनीयम् तावतैवाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवात्तदीयप्रतिबध्यतायास्तथाविधग्रहत्वव्यापकत्वादिति भट्टाचार्याः। अथ वह्निमानवच्छेदकत्वाभाववत्कालीनधूमादित्यादिव्यापकताज्ञानीयतादृशग्रहत्वाव्यापकप्रतिबध्यत्वाप्रसिद्ध्या तयाऽनुगमो दुर्घटः। अवच्छेदकत्वप्रकारकवह्नित्वविशेष्यकबुद्धित्वावच्छिन्नं प्रति अभावावच्छेदेनावच्छेदकत्वाभावप्रकारकनिश्चयविशिष्टाभावप्रकारकवह्नित्वविशेष्यकानिश्चयत्वेन प्रतिबन्धकत्वस्यावश्यकतया तत एवोपपत्तौ वह्नित्वविशेष्यकावच्छेदकत्वाभाववदभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नं प्रति व्यापकतावच्छेदकत्वज्ञानस्य पृथक्प्रतिबन्धकत्वस्याकल्पनादिति।

अत्र केचित्। समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहत्वाव्यापकप्रतिबध्यत्वपदेन तादृशग्रहत्वव्यापकत्वज्ञानवैशिष्ट्यावच्छि-

न्नप्रतिबन्धकत्वानिरूपितत्वोभयाभाववत्प्रतिबध्यताया विवक्षितत्वान्न दोषः । उक्तस्थले व्यापकताज्ञानीयप्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वेऽपि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वानिरूपितत्वविरहादेव निरुक्तोभयाभावसत्त्वात् अभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानीयप्रतिबध्यतायाञ्च निरुक्तोभयाभावसत्त्वान्न तादृशज्ञानादनुमित्यापत्तिः । एतेन हेतुविषयतानिष्ठावच्छेदकतानिरूपिताधिकरणविषयतानिष्ठावच्छेदकतानिरूपितेत्यादिक्रमेण निरूप्यनिरूपकभावापन्नतादृशावच्छेदकत्वे प्रकारतानिष्ठावच्छेदकतानिरूपितप्रतिबध्यतानिवेशेनैव सामञ्जस्ये प्रतिबध्यतायां तादृशव्यापकत्वनिवेशो गौरवग्रस्त इत्यपि समाहितम् । उक्तस्थले तादृशप्रतिबध्यत्वाप्रसिद्ध्या निरुक्तोभयाभाववत्प्रतिबध्यतानिवेशस्यावश्यकत्वात् । तादृशग्रहत्वव्यापकत्वाभावस्य तत्तद्व्यक्तित्वेन प्रविष्टतया गौरवानवकाशाच्च । न च तथापि तादृशावच्छेदकत्वव्यापकाभाववत्त्वादिज्ञानवारणाय तादृशप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिनिवेशिततयोक्तस्थले व्यभिचारज्ञानीयज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाप्रसिद्ध्याऽनुगमो दुर्घट एवेति वाच्यम् ज्ञानवैशिष्ट्यानवच्छिन्नत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहत्वव्यापकप्रतिबध्यत्वानिरूपितत्वोभयाभाववत्प्रतिबन्धकत्वस्य विवक्षितत्वात् । उक्तस्थले व्यापकताज्ञाननिष्ठव्यभिचारज्ञानीयप्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वसत्त्वेऽपि समानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहत्वव्यापकप्रतिबध्यत्वानिरूपितत्वविरहादेव तादृशोभयाभावसत्त्वात् । न चैवमभावप्रतियोगितावच्छेदकत्वव्यापकाभाववत्त्वादिज्ञानादनुमित्यापत्तिर्दुर्वारा तज्ज्ञानीयप्रतिबध्यतायां तज्ज्ञानवृत्तिप्रतिबन्धकतायां च प्रागुक्तोभयाभावसत्त्वादिति वाच्यम् । अगत्याऽभावप्रतियोगितावच्छेदकत्वव्यापकाभाववत्त्वादिज्ञाननिष्ठतत्तत्प्रतिबन्धकताभिन्नत्वेनापि तादृशप्रतिबन्धकताया विशेषणत्वादित्याहुः ।

तन्न एवमुक्तस्थलेऽवच्छेदकत्वाभाववदभाववत्कालीनाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानादनुमित्यापत्तेः । एतज्ज्ञानीयप्रतिबध्यतायां प्रागुक्तोभयाभावस्य तादृशावच्छेदकत्वग्रहत्वव्यापकत्वस्य च सत्त्वात् । न चैतज्ज्ञानवृत्तिप्रतिबन्धकताभिन्नत्वेनापि

तादृशप्रतिबन्धकत्वं निवेशनीयमिति वाच्यम् । तथा सत्येतज्ज्ञानवृत्तिप्रतिबन्धकत्वस्य व्यापकताज्ञानसाधारणतया ऐक्येन प्रकृतव्यापकताग्रहस्यासंग्रहापत्तेः । कारणीभूतज्ञानस्य तत्तज्ज्ञानान्यत्वेन विशेषणीयत्वे चानन्तभेदानिवेशे गौरवापत्तिरित्यलं पल्लवितेन ॥

ननु अवच्छेदकत्वसामान्याभावहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावोभयवद्वह्नित्वमिति ज्ञानस्यावच्छेदकत्वसामान्याभावानवगाहिज्ञानसाधारणं प्रतिबन्धकत्वं दुर्वचम् । तत्तत्प्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्माननिवेश्य निश्चयत्वस्य दुर्वचत्वेनाननुगतत्वात् । एवं धर्मितावच्छेदकावच्छेद्यत्वावगाहितादृशोभयवत्ताज्ञानस्यापि अवच्छेदकत्वसामान्याभावानवगाहिज्ञानसाधारणावच्छेद्यत्वस्य दुर्वचतया पृथक्प्रतिबन्धकध्रौव्ये अवच्छेदकत्ववत्ताबुद्धित्वमेव तत्प्रतिबध्यतावच्छेदकं वाच्यम् तथा च तादृशप्रतिबध्यत्वे निरुक्तसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहत्वाव्यापकत्वविरहेण तादृशोभयवत्ताज्ञानयोरसङ्ग्रह इति चेन्न तादृशोभयवत्ताज्ञानेऽवच्छेदकत्वाभावांशेऽप्रामाण्यग्रहकालेऽवच्छेदकत्वबुद्ध्युदयेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वबुद्ध्यनुदयेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वबुद्धित्वरूपेणैवावश्यं तादृशोभयवत्ताज्ञाननिरूपितप्रतिबध्यत्वात् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
व्याप्त्यनुगमगादाधरीक्रोडपत्रम् ।

अथ कालीशङ्करसिद्धान्तवागीशविरचितं

# पक्षतागादाधरीक्रोडपत्रम् ।

शुद्धपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितशुद्धसंयोगसंसर्गावच्छिन्नशुद्धवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंसर्गावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशाली संशयः पक्षता । अत्र तादृशनिश्चयत्वे स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वनिवेशे महानसीयवह्नित्वावच्छिन्नसाध्यकस्थले महानसीयवह्निमान् वह्निसामान्याभाववान् वेत्यादिसंशयासङ्ग्रहः । एवं वह्नित्वावच्छिन्नसाध्यकस्थले महानसीयवह्निमान्नवेति संशयस्य पक्षतात्वापत्तिश्च । अतस्तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वमपहाय व्यापकत्वरूपावच्छेदकत्वनिवेशनं भट्टाचार्येण कृतम् ।

अथ महानसीयवह्निसाध्यकानुमितौ महानसीयवह्नित्वावच्छिन्नप्रकारित्वनिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशनैवोपपत्तिः महानसीयवह्नित्वावच्छिन्नप्रकारितायाः अपि वह्नित्वावच्छिन्नप्रकारितात्वेन वह्न्यभाववत्तावुद्धिप्रतिबन्धकतावच्छेदकत्वादिति तत्र तादृशसंशयस्य नासङ्ग्रहः । एवं शुद्धवह्नित्वावच्छिन्नविधेयताकानुमितौ तु वह्नित्वपर्याप्तावच्छेदकताकप्रकारतानिष्ठावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं न महानसीयवह्निमान्नवेति संशयस्येति न तत्र तस्य सङ्ग्रह इति साध्यतावच्छेदकताप्रकारतावच्छेदकतापर्याप्तिनिवेशनैव सर्वत्र सामञ्जस्यात् इति । एवञ्चाप्रामाण्यज्ञानानास्कन्दितत्वादिनिवेशोऽपि विफल इति चेत् ।

अत्र केचित् वह्निव्याप्यसाध्यकानुमितौ वह्निव्याप्यधूमवान्नवेति संशयस्य पक्षतात्वापत्तिः भिन्नविषयकानुमितिसामग्र्याः प्रत्यक्षप्रतिबन्धकतया वह्निव्याप्यधूमाभावप्रत्यक्षं प्रति वह्न्यनुमितिसामग्र्याः प्रतिबन्धकत्वे तत्प्रतिबन्धकतावच्छेदककोटौ

वह्निव्याप्यत्वावच्छिन्नप्रकारिताया अपि निवेशेन स्वरूपसम्बन्धरूपावच्छेदकत्वात् । व्यापकत्वप्रवेशे च बाधादिप्रतिबन्धकसमानकालीनवह्निव्याप्यनिश्चयेऽपि तादृशानश्चयत्वसत्त्वेन तत्र सामग्रीत्वावच्छिन्नप्रतिबन्धकत्वासत्त्वान्न तादृशनिश्चयेऽपि प्रसङ्गः । न च सामग्रीप्रतिबध्यता भिन्नविषयकप्रत्यक्षादिनैवावच्छिन्ना तथा च प्रकृतज्ञानत्वावच्छिन्नप्रतिबध्यतानिवेशादेव नातिप्रसङ्गः इति वाच्यम् लाघवेनानुमित्यन्यज्ञानत्वेनैव तत्प्रतिबध्यतायामवच्छेदात् । यदि च प्रत्यक्षेच्छाकाले ज्ञानान्तरवारणायेच्छाविशेषस्योत्तेजकत्वमङ्गीकृत्य विशिष्टप्रत्यक्षादिनैव प्रतिबध्यता तदा ज्ञानत्वावच्छिन्ननिवेशेऽप्युपपत्तिरिति ॥

परे तु वह्निमान् महानसीयवह्निमानित्यादिज्ञानकालीनवह्निमत्पर्वतविषयकनिश्चयत्वेन प्रतिबन्धकतया वह्नित्वपर्याप्तावच्छेदकताकप्रकारतानिष्ठप्रतिबन्धकावच्छेदकस्य पर्वतो महानसीयवह्निमान्नवेति संशयस्य वह्निसाध्यकस्थले पक्षतात्वापत्तिरतो व्यापकत्वं निवेशितम् । यदि च ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायां निवेशादेव नैषः दोषः सम्भवतीति तावन्नाप्यप्रामाण्यज्ञानानास्कन्दितत्वानाहार्यत्वनिश्चयत्वानामनिवेशो लाघवानपायादिति विभाव्यते तदा वह्निसाध्यकस्थले वह्निघटोभयप्रकारकसंशयस्य पक्षतात्वापत्तिः उभयाभावज्ञानप्रतिबन्धकतावच्छेदकतायामुभयत्वानवच्छिन्नायामपि एकत्र द्वयमिति रीत्या वह्निघटवान् इति ज्ञानीयवह्निप्रकारतायास्सत्त्वेन वह्नित्वपर्याप्तावच्छेदकताकप्रकारतानिष्ठप्रतिबन्धकतावच्छेदकताकत्वात् । यदि च तादृशसंशयस्य प्रतिबन्धकतायां साध्यतावच्छेदकावच्छिन्नप्रकारत्वातिरिक्तप्रकारतायाः प्रकारतात्वेनानवच्छिन्नत्वमपि निवेशनीयमतो न दोष इति विभाव्यते तदा नैतत्कल्पेऽपि पर्याप्तिघटितत्वेन बहुलाघवमावहतीति सुधीभिर्भाव्यम् ॥ १ ॥

संशयत्वनिरुक्तौ बाधनिश्चयप्रतिबध्यतावच्छेदकीभूतस्वनिष्ठविषयत्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायां साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वं निवेशितम् भट्टाचार्येण ॥

अत्र तादृशप्रतिबध्यतायां साध्यवत्तानिश्चयप्रतिबन्ध-

कतानिरूपितत्वनिवेशो वह्निः पर्वतवृत्तिर्नवेति संशयासङ्ग्रहः । पर्वत-
वृत्तित्वाभावविषयित्वावच्छिन्नप्रतिबध्यतायाः बाधनिश्चयत्वावच्छि-
न्नप्रतिबध्यतावच्छेदकीभूतपर्वतवृत्तित्वावगाहित्वावच्छिन्नप्रतिब-
न्धकतानिरूपितायाः साध्यवत्तानिश्चयप्रतिबन्धकतानिरूपितत्वा-
भाववत्तादृशसंशये साध्यवत्तानिश्चयप्रतिबध्यत्वनिवेशे च पर्वतत्वा-
वच्छेदेन वह्नेः साध्यतास्थले पर्वतत्वसामानाधिकरण्येन वह्न्यभावं
महानसीयवह्निञ्च तदवच्छेदेन महानसीयवह्न्यभावकोटिमवगाह-
मानस्य वह्न्यभाववान्पर्वतः पर्वतो महानसीयवह्निमान्नवेति सं-
शयस्य पक्षतात्वापत्तिः । वह्निव्याप्यसाध्यकस्थले वह्निव्याप्यभा-
वाभाववान्न वा पर्वतः पर्वतो वह्निमान्नवेति समूहालम्बनसंशयस्य
पक्षतात्वापत्तिः । अतः संशयत्वघटकप्रतिबध्यतायां साध्यवत्ता-
निश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वनिवेशः । अथ वह्निव्याप्य-
साध्यकस्थले वह्निव्याप्याभाववान् वह्निसामान्याभाववान् वेत्या-
दिसंशयस्य पक्षतात्वापत्तिः तदीयवह्नित्वावच्छिन्नविषयताया
अपि वह्निव्याप्याभावाभावत्वावच्छिन्नप्रकारतात्वेन बाधनिश्चयप्र-
तिबध्यतावच्छेदकत्वात् । साध्यवत्तानिश्चयप्रतिबध्यतावच्छे-
दकावच्छिन्ना या तादृशसंशयत्वघटकवह्निसामान्याभाववत्ताबुद्धि-
त्वावच्छिन्नप्रतिबध्यता वह्नित्वावच्छिन्नप्रकारतात्वेन तन्निरूपि-
तप्रतिबन्धकतावच्छेदकत्वाच्च । न च स्वनिष्ठविषयतायां
बाधनिश्चयप्रतिबध्यतावच्छेदकता यद्रूपावच्छिन्ना तद्रूपाव-
च्छिन्नप्रतिबन्धकतावच्छेदकत्वं विवक्षणीयम् । उक्तस्थले
च वह्निव्याप्याभावाभावत्वावच्छिन्नप्रकारितात्वेन बाधनिश्चयप्रति-
बध्यतावच्छेदकत्वं तेन रूपेण वह्निसामान्याभावज्ञानं प्रतिबन्ध-
कतावच्छेदकमतो नोक्तदोष इति वाच्यम् अभावव्याप्यवानित्या-
दौ अभावव्याप्याभावाभाववान् अभावसामान्याभाववान् वेत्या-
दिसंशयावारणात् तत्राभावत्वावच्छिन्नप्रकारितात्वेन बाधनिश्च-
यप्रतिबन्धकतावच्छेदकत्वाभावाभावज्ञानप्रतिबन्धकतावच्छेदत्वो-
भयसत्त्वात् । न च स्वनिष्ठविषयितानिष्ठा या बाधनिश्चयप्रतिबध्यता-
वच्छेदकता तदवच्छेदकतापर्याप्त्यधिकरणं यद्रूपावच्छिन्नावच्छे-
दकताकत्वेन कल्पनीयम् । उक्तस्थले चाभावत्वावच्छिन्नप्रकारता-
त्वावच्छिन्ना स्वनिष्ठविषयित्वनिष्ठप्रतिबन्धकता तस्यां बाधनिश्च-

यप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणं यदभावव्याप्याभाववत्तावच्छिन्नप्रकारितात्वं तदवच्छिन्नत्वाभावान्नातिव्याप्तिरिति वाच्यम् तथासति महानसीयवह्निसाध्यकस्थले महानसीयवह्निमान् वह्निसामान्याभाववान् वेत्यादिसंशयस्यासङ्ग्रहापत्तेः । तत्र बाधनिश्चयप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणमहानसीयवह्नित्वावच्छिन्नप्रकारतात्वेन वह्निसामान्याभावग्रहप्रतिबन्धकतावच्छेदकत्वाभावादिति चेत् ।

अत्र केचित् वह्निव्याप्याभावाभावात्मकवह्निमान्—वह्निसामान्याभाववान् वेत्यादिसंशयस्य वह्निव्याप्याभावकोटिकत्वसम्भवात् तदवच्छिन्नत्वाभावकोटिकसंशयस्य तदभावत्वावच्छिन्नकोटिकत्वानङ्गीकारात् । एवञ्च तादृशसंशयस्य पक्षतात्वमिष्टमेव । न चैवं वह्निव्याप्यात्मकवह्निमान् वह्निसामान्याभाववान्वेति संशयस्य पक्षतात्वापत्तिरिति वाच्यम् व्याप्यवत्ताग्राहकसामग्रीकाले वह्न्यभावसंशयानङ्गीकारात् व्याप्याभावाप्रकारकव्याप्यवत्ताग्रहसामग्र्याः प्रतिबन्धकत्वात् वह्निव्याप्याभाववान्न वा पर्वतः पर्वतो वह्निमान्नवेति संशयसम्भवेऽपि न तत्रातिप्रसङ्गप्रसक्तिरिति वदन्ति ।

केचित्तु बाधप्रतिबध्यतावच्छेदकतानवच्छेदकं यदवच्छेद्यत्वं तदनवच्छिन्नस्वनिष्ठविषयतानिष्ठावच्छेदकताकप्रतिबन्धकता विशेषणीया वह्निव्याप्याभावाभावात्मकवह्निविषयतानिष्ठप्रतिबन्धकतावच्छेदकविषयतायां वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकतानवच्छेदकवह्नित्वत्वावच्छेद्यत्वावच्छिन्नत्वान्न दोषः । एवञ्च वह्निसाध्यकस्थले महानसीयवह्निसंशयवारणाय साध्यवत्तानिश्चयनिवर्त्यत्वदलसार्थक्याभावेऽपि पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यतास्थले पर्वतत्वावच्छेदेन वह्निपर्वतत्वसामानाधिकरण्येन वह्न्यभावमवगाहमानस्य पक्षतात्ववारणाय तद्दलसार्थक्यं बोध्यम् । अभावव्याप्यसाध्यकस्थले तु अभावव्याप्याभावाभाववान् अभावसामान्याभाववान्न वेति संशयस्य पक्षतात्वापत्तिरपि नास्ति शुद्धाभाववानिति ज्ञानीयाभावनिष्ठप्रकारतानिष्ठं यदवच्छेद्यत्वं तस्य बाधनिश्चयप्रतिबध्यतावच्छेदकतानवच्छेदकतया तदनवच्छिन्नत्वस्य प्रतिबन्धकतावच्छेदकतायां स-

त्वादिति वदन्ति ।

तन्न सत् साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्ननिवेशपर्यन्तस्य वैफल्यापत्तेः । साध्यवत्तानिश्चयप्रतिबध्यत्वनिवेशेनैव पूर्वस्थले दोषविरहात् । महानसीयवह्निसाध्यकस्थले महानसीयवह्निमान् वह्निसामान्याभाववान्न वेत्याकारकसंशयस्य सङ्ग्रहापत्तेश्च वह्निमानितिज्ञानीयप्रकारतानिष्ठं यदवच्छेद्यत्वं तस्य बाधप्रतिबध्यतावच्छेदकतानवच्छेदकतायां तदवच्छिन्नत्वविरहात् ॥ २ ॥

अथ महानसीयवह्निमत्पर्वतकालीनः पर्वतो वह्निमान् इत्यादौ पर्वतत्वावच्छेदेन महानसीयवह्निसंशयस्य पक्षतात्वापत्तिः तस्यापि साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकत्वात् । न चोद्देश्यतावच्छेदकातिरिक्तप्रकारतावच्छिन्नत्वं प्रतिबन्धकतायां विशेषणं देयमिति वाच्यम् महानसीयवह्निमान्पर्वत इत्यादिज्ञानस्यापि प्रतिबन्धकतया तादृशप्रतिबन्धकत्वस्यापि सत्त्वादिति चेन्न साध्यतावच्छेदकमात्रावच्छिन्नप्रकारतानिष्ठावच्छेदकताकत्वेन प्रतिबन्धकताविशेषणात् । न चैवं तथानिवेशे स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशकल्प एव ज्यायान् कृतं व्यापकत्वनिवेशेन गौरवादिति वाच्यम् वह्निव्याप्यसाध्यकस्थले वह्निव्याप्यधूमवान् नवेति संशयस्य पक्षतात्वापत्तिरिति ॥ ३ ॥

अथ पर्वतो महानसीयवह्न्यभाववानित्यादौ पर्वतो महानसीयवह्निमान् वह्निसामान्याभाववान् वेति संशयस्य पक्षतात्वानुपपत्तिरिति । महानसीयवह्निरूपबाधनिश्चयप्रतिबध्यतावच्छेदकीभूतवह्निसामान्याभावत्वावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः महानसीयवह्न्यभावत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिपक्षविशेष्यकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नत्वाभावात् । न च तादृशप्रतिबध्यतावच्छेदकताश्रयपर्याप्त्यवच्छेदकत्वमवच्छिन्नत्वान्तेन विवक्षणीयमिति वाच्यम् तथा सति पर्वतीयवह्निमान् वह्निसामान्याभाववान् वेति संशयस्यापि अत्र पक्षतात्वापत्तेः । स्वनिष्ठवह्न्यभावत्वावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताया महानसीयवह्न्यभावरूपसाध्यवत्तानिश्चयीय-

प्रतिबध्यतावच्छेदकत्वघटकवह्नित्वावच्छिन्नप्रकारताशालिज्ञानत्वा-वच्छिन्नत्वात् । न च तादृशप्रतिबध्यतावच्छेदकीभूतस्वनि-ष्ठप्रकारकत्वावच्छिन्नत्वरूपमेव तादृशप्रतिबध्यतावच्छेदकावच्छि-न्नत्वं वक्तव्यम् उक्तसंशयनिष्ठवह्निसामान्याभावीयनिश्चयप्रतिबध्य-तायां वह्नित्वावच्छिन्नप्रकारतात्वेन महानसीयवह्न्यभावरूपसाध्य-वत्तानिश्चयप्रतिबध्यतावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नप्रका-रताव्यवच्छिन्नत्वान्नोक्तसंशयासङ्ग्रहः, स्वनिष्ठत्वविशेषणादेव प-र्वतीयवह्निमान् वह्निसामान्याभाववान् वेति न सङ्ग्रह इति वाच्यम् तथा सत्यपि महानसीयवह्निमत्पर्वतकालीनपर्वतो बह्निमान् इत्यादौ पर्वतत्वावच्छेदेन कोटिद्वयावगाहिनः पर्वतो महानसीयवह्निमान्-वेति संशयस्य पक्षतात्वापत्तेः । न च पक्षतावच्छेदकविशिष्टविषय-कनिश्चयत्वाव्यापकनिरुक्तसाध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकता-विवक्षणान्नोक्तदोष इति वाच्यम् वह्निमत्पर्वतकालीनपर्वतो वह्नि-मानित्यादौ पर्वतो वह्निमान्न वेत्यादिसंशयस्य पक्षतात्वानुपपत्तेः। उक्तसंशयनिष्ठवह्निमत्तानिश्चयीयप्रतिबध्यतायाः पक्षतावच्छेदक-विशिष्टविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानि-रूपितप्रतिबध्यतावच्छेदकावच्छिन्नत्वाभावात् । न च तादृशसं-शयः पक्षतैव न साध्यतदभावान्यतरस्मिन् पक्षतावच्छेदकतापर्या-प्त्यधिकरणधर्मावच्छिन्नसम्बन्धावगाहिसंशयस्यैव प्राच्यैः पक्षता-त्वोपगमादिति वाच्यम् तथा सति नीलपर्वतो वह्निमान् इत्यनु-मितौ अवच्छेदकावच्छेदेन कोटिद्वयावगाहिनः पर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वाभावप्रसङ्गोक्त्या तस्य च निरुक्तकारणताव-च्छेदकाक्रान्तत्वेन ततोऽनुमित्यापत्तेर्वज्रलेपत्वात् । न च निरु-क्तसाध्यनिश्चयत्वव्यापकप्रतिबन्धकतायां साध्यतावच्छेदकपर्या-प्त्यवच्छेदकताकप्रकारत्वावच्छिन्नत्वं निवेश्य निरुक्तमहानसीयव-ह्निमत्पर्वतघटितपक्षकस्थले निरुक्तसंशयस्य पक्षतात्वं वारणीय-मिति वाच्यम् एवमपि वह्निघटवत्पर्वतकालीनपर्वतो वह्निमानि-त्यादौ पर्वतत्वावच्छेदेन कोटिद्वयावगाहिनः सामानाधिकरण्यसम्ब-न्धेन घटविशिष्टवह्निमान्नवेति संशयस्य पक्षतात्वापत्तेः । सामा-नाधिकरण्यसम्बन्धेन घटविशिष्टवह्न्यभाववत्ताबुद्धिं प्रति एकवि-षयमिति रीत्या वह्निघटोभयवत्तानिश्चयस्य प्रतिबन्धकतया वि-

रुक्तपक्षविशेष्यकसाध्यनिश्चयत्वव्यापकप्रतिबन्धकतायां साध्यतावच्छेदकतापर्याप्त्यवच्छेदकताकप्रकारत्वावच्छिन्नत्वसत्त्वात् निरुक्तसंशयनिष्ठाया निरुक्तप्रतिबध्यतायाः साध्यनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नत्वात् ।

अत्रेदं समाधीयते । पक्षतावच्छेदकविशिष्टविषयकनिश्चयत्वव्यापिका साध्यतावच्छेदकविशिष्टविषयकप्रकृतपक्षविषयकनिश्चयत्वव्यापिका च या प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावच्छेदकीभूतप्रकारत्वावच्छिन्नत्वमेव संशयत्वघटकप्रतिबध्यतायां निवेशनीयम् महानसीयवह्न्यभावसाध्यकस्थले महानसीयत्वाद्यवच्छिन्नवह्निसामान्याभावकोटिकसंशयस्य साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकीभूतमहानसीयवह्नित्वाद्यवच्छिन्नप्रकारतायामपि वह्नित्वावच्छिन्नप्रकारतात्वेन वह्निसामान्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वसत्त्वान्नासङ्ग्रहः महानसीयवह्निमत्पर्वतकालीनः पर्वतो वह्निमानित्यादौ, महानसीयवह्निमान्नवेति संशयस्य पक्षतावच्छेदकविशिष्टविषयकनिश्चयत्वाव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतप्रकारत्वावच्छिन्नत्वस्य स्वनिष्ठविषयत्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायामसत्त्वेन सङ्ग्रहप्रसङ्गः । न च वह्निमत्पर्वतकालीनः पर्वतो वह्निमानित्यादौ पर्वतो वह्निमान्नवेति संशयस्यासङ्ग्रह इति वाच्यम् साध्यसाधनभेदेन पक्षतायाः कारणभावादेतादृशप्रतिबन्धकतायां तादृशस्थले पक्षतावच्छेदकविशिष्टपक्षविषयकनिश्चयत्वाव्यापकत्वनिवेशनं निष्प्रयोजनम् प्रकृतसंशयासङ्ग्रहस्तु तादृशस्थले तादृशविशेषणाभावादेव समञ्जसः । न चानुगमस्यानुपादेयतया ग्रन्थकृतैव प्रतिपादितत्वात् । न च वह्निघटवत्पर्वतकालीनः पर्वतो वह्निमानित्यादौ तादृशविशेषणदाने घटादिविशिष्टवह्निमान्नवेति संशयसङ्ग्रहप्रसङ्गः तादृशविशेषणादाने च पर्वतो वह्निमान्नवेति संशयसङ्ग्रहप्रसङ्गः वन्हिसामान्याभावज्ञानीयप्रतिबन्धकताया अपि पक्षतावच्छेदकविशिष्टविषयकनिश्चयत्वव्यापकत्वादिति वाच्यम् अगत्या तत्र साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतायां साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्ननिष्ठप्रकारतात्वावच्छेदकताकान्यत्वं निवेश्य तद्दोषस्य वारणीयत्वात् घटविशिष्टवह्निमान्नवेति संशयप्रतिबन्धकताया वह्नित्वावच्छि-

न्नप्रकारताभिन्ननिष्ठघटत्वावच्छिन्नप्रकारत्वावच्छिन्नावच्छेदकताकत्वात् तादृशसंशयसङ्ग्रहाप्रसङ्गादिति सङ्क्षेपः ॥ ३ ॥

अथ बाधनिश्चयप्रतिबध्यतावच्छेदकत्वनिवेशेऽपि वह्निव्याप्याभाववान् पर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिर्दुर्वारा तादृशसंशयस्य बाधनिश्चयप्रतिबध्यतावच्छेदकीभूतपर्वतत्वावच्छिन्नविशेष्यत्वं तस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वेन तादृशविशेष्यत्वावच्छिन्नप्रतिबन्धकताकप्रतिबध्यतावत्त्वात् । बाधनिश्चयप्रतिबध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नावच्छेदकताकं यत्स्वनिष्ठविषयित्वावच्छिन्नप्रतिबन्धकत्वं तन्निरूपितप्रतिबध्यत्वनिवेशेन तदुद्धारणेऽपि महानसीयवह्निसाध्यकस्थले पर्वतो महानसीयवह्निमान् वह्निसामान्याभाववान् वा इत्याकारकसंशयस्य पक्षतात्वानुपपत्तिः । बाधनिश्चयप्रतिबध्यतावच्छेदकतापर्याप्त्यवच्छेदकं यन्महानसीयवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतात्वं तदवच्छिन्नावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य तादृशसंशयेऽसत्त्वादिति चेन्न बाधनिश्चयप्रतिबध्यतावच्छेदकस्वनिष्ठप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्योक्तत्वात् । तथा च बाधनिश्चयप्रतिबध्यतावच्छेदकं यत्स्वनिष्ठवह्निव्याप्याभावाभावत्वावच्छिन्नप्रकारत्वं तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य तादृशसंशयेऽभावात् । अथ तथापि वह्निव्याप्याभावाभावत्वेन वह्नित्वेन च वह्न्यवगाहि–वह्निव्याप्याभावाभाववह्निमान् वह्निसामान्याभाववान् वा पक्ष इत्याकारकसंशयेऽतिव्याप्तिः बाधनिश्चयप्रतिबध्यतावच्छेदकीभूतं यत् स्वनिष्ठवह्निव्याप्याभावाभावत्वावच्छिन्नप्रकारत्वं तदवच्छिन्नप्रतिबन्धकताकप्रतिबध्यतावत्त्वात् । न च बाधनिश्चयप्रतिबध्यतावच्छेदकं धर्मितावच्छेदकताभिन्नं यत्स्वनिष्ठावच्छेदकत्वं तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं विवक्षणीयम् तादृशसंशये बाधनिश्चयप्रतिबध्यतावच्छेदकं यत्स्वनिष्ठवह्निव्याप्याभावाभावत्वनिष्ठावच्छेदकत्वं तदवच्छिन्नप्रतिबन्धकताकप्रतिबध्यत्वाभावान्नातिव्याप्तिरिति वाच्यम् तन्नातिव्याप्तिवारणेऽपि तावतापि अभावव्याप्यसाध्यकस्थले अभाववान् अभावव्याप्याभावाभाववान् वा पक्ष इत्याकारकसंशयेऽति-

व्याप्तिर्दुर्वारैव तादृशसंशयस्य बाधनिश्चयप्रतिबध्यतावच्छेदकी-
भूतं यत्स्वनिष्ठाभावत्वनिष्ठावच्छेदकत्वं तदवच्छिन्नप्रतिबन्धक-
तानिरूपितप्रतिबध्यतावत्त्वादिति तु विभावनीयम्॥

अन्ये तु वह्निव्याप्याभावाभाववह्निमान् वह्निसामान्याभाववा-
न् वा पक्ष इत्याकारकसंशयवारणाय विषयतानिष्ठबाधनिश्चय-
प्रतिबध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नावच्छेदकतानि-
रूपकप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वं विवक्षणीयम्।
न च महानसीयवह्निसाध्यकस्थले महानसीयवह्निमान् वह्निसामा-
न्याभाववान् वा पक्ष इत्याकारकसंशयासङ्ग्रहापत्तिः बाधनिश्चय-
प्रतिबध्यतावच्छेदकतापर्याप्त्यवच्छेदकं यन्महानसीयवह्नित्वाव-
च्छिन्नप्रकारतानिरूपितत्वविशिष्टपर्वतत्वावच्छिन्नविशेष्यतात्वं तद-
वच्छिन्नावच्छेदकतानिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य
तादृशसंशयेऽभावादिति वाच्यम्। महानसीयत्वनिष्ठावच्छेद-
कताभिन्नं सद्वह्नित्वनिष्ठावच्छेदकताभिन्नं यदवच्छेदावच्छेदक-
त्वं तदनिरूपकं यद्विषयत्वं तन्निरूपिताभावत्वावच्छिन्नविषयताशा-
लिबुद्धित्वावच्छिन्नं प्रति महानसीयत्ववह्नित्वपर्याप्तावच्छेदकताक-
प्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वस्य लाघवानुरोधेन व-
क्तव्यतया तादृशसंशये तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यत्व-
स्याक्षतत्वात्। नचैवं प्रतिबध्यप्रतिबन्धकभावोक्तौ क्व लाघव-
मिति वाच्यम् वह्न्यभावप्रकारताशालिनिश्चयत्वेन प्रतिबन्धक-
तोक्तौ इदं ज्ञानं महानसीयवन्ह्यभाववति महानसीयवह्निप्रकारकं
चत्वरीयवह्न्यभाववति चत्वरीयवह्निप्रकारकमित्याद्यननुगतानन्त-
व्यक्तीनामुत्तेजकत्वापेक्षया तादृशप्रतिबन्धकतायां महानसीयव-
ह्न्यभाववति महानसीयवह्निप्रकारकमित्यनुगताप्रामाण्यज्ञानत्वमा-
त्रावच्छिन्नस्योत्तेजकत्वे महालाघवादित्याहुः।

तन्न मनोरमम्। तादृशप्रतिबध्यप्रतिबन्धकभावोक्तमहानसी-
यवह्निसाध्यकस्थले महानसीयवह्निमान् वह्निसामान्याभाववान् वा
पक्ष इत्याकारकसंशयसङ्ग्रहसत्त्वात् तादृशनिश्चयत्वव्यापकप्रति-
बन्धकत्वनिवेशस्य सन्दर्भविरोधापत्तेरिति दिक्।

केचित्तु बाधनिश्चयप्रतिबध्यतावच्छेदकीभूतानवच्छेदकत्वाव-
च्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वनिवेशे तादृशसंशयवार-

णसम्भवः तादृशसंशयस्य बाधनिश्चयप्रतिबध्यतानवच्छेदकं प-द्वह्नित्वनिष्ठावच्छेदकत्वं तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिब-ध्यतायाः सत्त्वादित्याहुः ।

तदसत् साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रति-बध्यतावच्छेदकविषयित्वावच्छिन्नत्वस्य तादृशप्रतिबध्यतायां नि-वेशस्यैव वैयर्थ्यापत्तेः वह्निसाध्यकस्थले महानसीयवह्निमान्नवेति संशयस्य बाधनिश्चयप्रतिबध्यतानवच्छेदकं यन्महानसीयत्वनि-ष्ठावच्छेदकत्वं तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वेन तद्वारणसम्भवात् महानसीयवह्निसाध्यकस्थले महानसीयवह्निमान् वह्निसामान्याभाववान् वा पक्ष इत्याकारकसंशयापत्तेश्चेति।

यत्तु बाधनिश्चयनिष्ठप्रतिबन्धकतायां स्वनिष्ठविषयिताघटित-धर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकस्वनिष्ठविष-यत्वघटितधर्मावच्छिन्नत्वोक्तौ वह्निव्याप्याभाववह्निमान् वह्निसामा-न्याभाववान् वा पक्ष इत्याकारकसंशयवारणसम्भवः वह्निव्याप्या-भावनिश्चयनिष्ठप्रतिबन्धकतायाः 'स्वनिष्ठविषयित्वावच्छिन्नप्रतिब-न्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतं यद्वह्न्यभावत्वावच्छिन्न-विषयत्वन्तदवच्छिन्नत्वाभावादिति ।

तत्तुच्छम् महानसीयवह्निमान् वह्निसामान्याभाववान् वा पक्ष इत्याकारकसंशयासङ्ग्रहापत्तेः । महानसीयवन्ह्यभावनि-श्चयनिष्ठप्रतिबन्धकतायाः स्वनिष्ठविषयित्वावच्छिन्नप्रतिबन्धकता-निरूपितप्रतिबध्यतावच्छेदकीभूतं यत् स्वनिष्ठवन्ह्यभावत्वाव-च्छिन्नविषयित्वं तदवच्छिन्नत्वाभावात् । न च महानसीयवह्निप्रका-रकज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य वन्ह्यभावविषय-त्वावच्छिन्नत्वसम्भव इति वाच्यम् साध्यतावच्छेदकावच्छिन्न-प्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य वह्न्यभावप्रकारकनिश्चयेऽसत्त्वात् तादृशज्ञानत्वावच्छिन्नप्रतिबध्य-तानिरूपितप्रतिबन्धकत्वाप्रवेशे महानसीयवह्निसाध्यकस्थले वह्नि-मान्नवेति संशयस्यासङ्ग्रहापत्तेरिति दिक् ।

केचित्तु स्वनिष्ठविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रति-बध्यतायां साध्यवत्ताज्ञानप्रतिबध्यतावच्छेदकविषयत्वावच्छिन्नत्वं निवेशनीयम् अतो न तादृशसंशयेऽतिव्याप्तिः । न च बाधनिश्चय-

प्रतिबध्यतावच्छेदकत्वं स्वनिष्ठविषयितायामनर्थकमिति वाच्यम् वह्निव्याप्यसाध्यकस्थले वह्निमान् वह्निव्याप्याभावात्मकवह्न्यभाववान् वा पक्ष इत्यादिसंशयवारणाय तन्निवेशस्यावश्यकत्वात् । न च तथापि तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नत्वनिवेशनमनर्थकमिति वाच्यम् वह्निव्याप्यसाध्यकस्थले वह्निव्याप्याभावाभावात्मकवह्निव्याप्याभाववान् वह्निव्याप्याभावव्याप्यवान् वा पक्ष इत्यादिसंशयवारणाय तन्निवेशादित्याहुः ।

तत्तुच्छम् वह्निव्याप्यसाध्यकस्थले वह्निव्याप्याभावाभाववह्निमान् वह्निव्याप्याभावव्याप्यात्मकवह्न्यभाववान् वा पक्ष इत्याकारकस्य च संशयस्य तथापि वारणासम्भवादिति ध्येयम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
पक्षतागादाधरीक्रोडपत्रम् ॥

---

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (नवमम्)

# परामर्शगादाधरीक्रोडपत्रम्।

इदानीमपि विशिष्टपरामर्शस्यानुमितिकारणतावच्छेदकत्वे मीमांसकविप्रतिपत्त्यवतारणेनाप्रामाणिकत्वशङ्कया तदुपपादकप्रमाणाकाङ्क्षासम्भवेन तदुपपादकत्वस्य पक्षतानिरूपितसङ्गतित्वमिति भट्टाचार्येण व्याख्यातम्। तस्यायमाशयः तथा च विशिष्टपरामर्शस्य कारणतावच्छेदकत्वोपपादकत्वरूपलक्षणोपपादकत्वम् उपोद्घातादिपञ्चकभिन्नत्वसङ्गतित्वरूपप्रसङ्गत्वं सूचितम्। पक्षतानिरूपितत्वञ्च तन्निरूपितविषयताकज्ञानानुकूलव्यापारानन्तरार्थकेन तदभिधानान्तरेण घटितस्य सङ्गतिसामान्यलक्षणस्य घटकविषयितायां निरूपितत्वलक्षणेन विशिष्टसङ्गतावपि तज्ज्ञेयम्।

केचित्तु पक्षताशरीरप्रविष्टतल्लिङ्गकत्वस्य तत्परामर्शत्वावच्छिन्नकारणताघटितार्थकतया पक्षतोपपादकत्वमित्याहुस्तच्चिन्त्यम्। पक्षताशरीरे कारणताप्रवेशस्याप्रामाणिकत्वादव्यवहितोत्तरत्वसम्बन्धेन परामर्शविशिष्टस्यैव निवेशादित्याद्युक्तम्॥ १॥

अत्र तादृशप्रमाऽसाधारणकारणत्वं यदि स्मरणावृत्तितादृशप्रमावृत्तिकार्यतानिरूपकत्वं तदा स्मृतिजनकसंस्कारवारकप्रमानिवेशवैयर्थ्यम् इति गादाधरी।

नच तादृशस्मरणावृत्तिकार्यतानिरूपकत्वस्य 'तात्पर्यग्राहकतया प्रमापदसार्थक्यमिति वाच्यम् तथात्वेपि प्रमाणव्यवहारविषयताप्रयोजकशरीरे प्रमाया निवेशासम्भवात् तथाचानुभवघटितधर्मस्यैव तादृशविषयताप्रयोजकतायाः सम्प्रदायसिद्धतया तदनुरोधेन मूलकृताऽनुभवार्थकप्रमापदमुपात्तमिति भावः। न चैतदनुरोधेन प्रमापदमुपात्तमिति वाच्यम् संस्कारस्यैव वारकतयाऽनतिप्रयोजनकत्वात् वक्ष्यमाणरीत्या निर्वाहेण संस्कारवारकत्वसम्प्रदायसिद्धत्वोभयोरेव निष्प्रत्यूहत्वमिति भावः॥ २॥

सदसाधारणमित्यस्य स्वानिरूपितमनस्त्वघटितधर्मावच्छिन्नानिरूपिता या जन्यता तदवच्छेदकतापर्याप्त्यनधिकरणीभूता या अनुभवनिष्ठभेदप्रतियोगितावच्छेदकजातिस्तद्घटितधर्मावच्छिन्ना या वह्निविषयकानुभवनिष्ठकार्यता तन्निरूपकत्वमापादकदलसमुदायोऽर्थो भट्टाचार्येण कृतः।

तदुपरि शङ्कते। अथ विशिष्टपरामर्शे व्यभिचारः तस्यापि तादृशानुमितित्वरूपजातिघटितधर्मावच्छिन्नकार्यतानिरूपकत्वात्। न च परामर्शस्य कार्यतावच्छेदकं नानुमितित्वं किन्त्वव्यवहितोत्तरत्वसामानाधिकरण्योभयसम्बन्धेन परामर्शविशिष्टत्वमेव तस्य तादृशजातित्वाभावान्न व्यभिचार इति वाच्यम् परामर्शस्यापि अव्यभिचारज्ञानात्मकतयाऽनुमितित्वावच्छिन्नम्प्रति व्याप्तिज्ञानत्वेन हेतुत्वमिति कारणस्य कारणतामादाय व्यभिचारतादवस्थ्यात्। न च मनस्त्वेन कारणत्वमिति निष्कृष्टमतानुसारेणैव तदिति वाच्यम् तथा सत्यापाद्यस्य प्रमाणस्य व्यापारवदसाधारणफलोपहितकारणत्वपर्यवसितस्य शरीरे फलोपधायकत्वनिवेशव्यावृत्तेः व्याप्तिज्ञानस्यानुमित्यात्मकप्रमास्वरूपयोग्यतामादायेष्टापत्तेश्च वारणायानुमित्यनात्मकव्याप्तिस्मरणस्य पक्षत्वानुसरणस्य वैयर्थ्याद् इति चेन्न स्वानिरूपितत्यस्य स्वावृत्तिविषयत्वाभावमात्रनिरूपितान्यत्वार्थकत्वान्न परामर्शे व्यभिचारः तथाहि स्वावृत्तिविषयता तु केवलव्याप्तिज्ञानत्वावच्छिन्नविषयतैव तदभाववान् विशिष्टपरामर्शः तन्मात्रनिरूपितत्वाभाववती व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिकानुमितित्वावच्छिन्नकार्यता तदवच्छेदकतापर्याप्त्यधिकरणमेवानुमितित्वमतो न तादृशजातिमादाय व्यभिचारः। न च शुद्धव्याप्तिज्ञानत्वावच्छिन्नविषयतापि परामर्शवृत्तिरिति तद्दोषतादवस्थ्यमिति वाच्यम् निरूपकभेदेन विषयताभेदात्।

केचित्तु तादृशवह्निविषयकप्रमामात्रवृत्तिकार्यतायां प्रत्यक्षवृत्तित्वनिवेशान्न व्यभिचार इत्याहुः। तन्न अनुमानादिप्रामाण्यस्यासङ्ग्रहापत्तेरिति मनस्त्वघटितधर्मावच्छिन्नानिरूपितत्वदलवैयर्थ्यादिति चेन्न स्वावृत्तिविषयतावदनिरूपितं यत् कार्यत्वं तदन्यकार्यतायाः स्वानिरूपितकार्यतापदेन विवक्षितत्वात्॥ ३॥

"न ह्यनुमितिं प्रति व्याप्यज्ञानमेवानुमितिहेतुर्लाघवादावश्यकत्वाच्चेति" मूलस्य लाघवादवच्छेदकलाघवात् आवश्यकत्वात् व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानस्य हेतुत्वे व्याप्तिज्ञानहेतुताया आवश्यकत्वात् । क्वचिदुपजीव्यत्वादित्यपि पाठः । उपजीव्यत्वञ्चात्र व्याप्तिज्ञानं विना यद्धर्मावच्छेदेन व्याप्तिज्ञानं तत्प्रकारकपक्षधर्मताज्ञानस्यासम्भवात् । एवञ्च सिद्धे व्याप्तिज्ञाने हेतावतिप्रसङ्गभङ्गाय पक्षधर्मताविषयकत्वमवच्छेदकं कल्प्यते लाघवात् न तु कारणान्तरं गौरवादिति भावः" इति दीधितिकृता निष्कृष्टोऽर्थः कृतः । तत्र "ननु व्याप्तिप्रकारकज्ञानत्वेन हेतुत्वे सिद्धेऽपि व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वरूपपरामर्शत्वस्य हेतुतावच्छेदकत्वाप्रसिद्ध्या नैयायिकानां नाभिमतसिद्धिरित्याशयं पूरयति एवञ्चेति । व्याप्तिज्ञाने व्याप्तिज्ञानत्वावच्छिन्नेऽतिप्रसङ्गभङ्गाय पक्षधर्मताज्ञानशून्यकालेऽनुमितिवारणाय क्लृप्तकारणतायामेव पक्षधर्मताविषयकत्वमवच्छेदकमन्यथानुपपत्त्या कल्प्यते । यद्यपि व्याप्तिज्ञानत्वावच्छिन्नहेतुतायां पक्षधर्मताविषयकत्वस्यावच्छेदकत्वोपगमे प्रस्थितमवच्छेदकलाघवादिति तथाप्यतिप्रसङ्गानवतारदशायां व्याप्तिज्ञानत्वस्य लाघवात् प्रथमतोऽवच्छेदकत्वसिद्धिरुत्तरकालमवच्छेदकाभिवृद्धिश्च निष्प्रत्यूहैवेति" भट्टाचार्येण व्याख्यातः ।

अथानुमितौ व्याप्तिज्ञानत्वं वा पक्षधर्मताविषयकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणत्वञ्च, तादृशावच्छेदकतापर्याप्त्यनवच्छेदकत्वञ्च पक्षधर्मताविषयकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नत्वादिकम् । इत्थञ्च व्याप्तिज्ञानत्वपक्षधर्मताविषयकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणत्वयोर्भिन्नतया व्याप्तिज्ञानकारणतायां पक्षधर्मताविषयकत्वासम्भवात् क्लृप्तव्याप्तिज्ञानत्वावच्छिन्नकारणताया अवच्छेदकाभिवृद्धिकल्पनं दीधितिकृतमसङ्गतमेव । न च कारणताया अनतिरिक्तत्वमतेनेदमिति वाच्यम् । कल्पनालाघवस्यानतिरिक्तत्वमतेऽसम्भवात्तदभिप्रायवर्णनाशक्यत्वात् ।

अत्रेदं समाधानम् । तादृशाभावप्रतियोगितावच्छेदकतायाः पर्याप्तिसम्बन्धेन व्याप्यवृत्तितया तादृशकारणतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाभावप्रतियोगितावच्छेदकत्वाभाववद्व्याप्तिज्ञानत्व-

वत्त्वमेव कारणत्वम् एवञ्च पक्षधर्मताविषयकव्याप्तिज्ञानत्वाव-च्छिन्नानुयोगिताकत्वस्याक्षततया तादृशकारणताभिप्रायेणावच्छे-दकाभिवृद्धिकल्पनादिति ॥ ४ ॥

यदसाधारणमित्यादिव्याप्तौ आपाद्यं प्रमाणत्वं प्रमाया असाधा-रणकारणत्वम् तच्च व्यापारवदसाधारणफलोपहितकारणत्वं व्यापार-निवेशात् प्रतीकान्तरवत्युपनायकज्ञाने आपाद्यविरहनिर्वाहः असाधा-रण्यनिवेशादापादके शरीरादिवारकासाधारण्यविशेषणसार्थक्य-मिति फलोपधाननिवेशात् व्याप्तिज्ञानस्यानुमित्यात्मकप्रमास्वरूप-योग्यतामादाय नेष्टापत्तिः अनुमित्युपधायकस्य तस्य पक्षत्वादिति गादाधरी। तत्र फलोपहितव्यापारवदसाधारणकारणत्वमेवापाद्यद-लनिष्कर्षार्थः। अथ फलोपहितस्वरूपयोग्यत्वरूपकारणत्वघटितव्या-पारवत्त्वेनेष्टापत्तेर्दुर्वारत्वात्। न च व्यापारशरीरे फलोपहितत्वनि-वेशान्नेष्टापत्तिरिति वाच्यम्। तावता अनुमित्यनुपधायकव्याप्तिज्ञाने इष्टापत्तिवारणसम्भवात् पृथक्फलोपहितत्वस्य कारणतांशे निवे-शवैयर्थ्यादिति ध्येयम्। सामानाधिकरण्यनिवेशाद्घटाकाशवृत्ति-द्वित्वादौ न तादृशकार्यकारणभावस्य व्यभिचारः। न च तथापि घटात्मवृत्तिद्वित्वे व्यभिचार इति वाच्यम्। सामानाधिकरण्यघट-कतदधिकरणत्वस्य उपलक्षणतया वृत्तित्वस्य विशेषणतया नि-वेशादुपलक्षणतया निवेशाद्विनश्यदवस्थपरामर्शमादाय न दो-ष इति ॥ ५ ॥

यदसाधारणं सहकार्यासाद्य मनो वहिर्गोचरां प्रमां जनयति त-देव हि प्रमाणान्तरमित्यत्र प्रमाणान्तरत्वं तदर्थविशेष्यकतदर्थप्र-कारकमानसामान्यप्रमाफलोपहितकारणत्वम्। अनुमितिकारण-त्वमादायेष्टापत्तिवारणाय विशेष्येऽर्थविशेषः कृतः निरुक्तपरामर्श-कारणत्वमादायेष्टापत्तिवारणाय व्यापारत्वगर्भकारणत्वनिवेशः। न च मानसामान्येति विशेषणं व्यर्थम् मानसपरामर्शरूपप्रमामादा-येष्टापत्तेर्व्यापारनिवेशेनैव वारणादिति वाच्यम्, यत्र व्याप्तिस्मरण-द्वितीयक्षणे तन्निर्विकल्पकं तदा तदनुव्यवसायात्मकः परामर्शः प-श्चात् वन्ह्यनुमितिस्तत्र व्याप्तिस्मरणे इष्टापत्तिवारणाय तत्सार्थक्यात् तत्र व्याप्तिस्मरणस्य परामर्शं प्रति निर्विकल्पकद्वारा कारणत्वात् फलोपधायकत्वाच्च। न च तस्य पक्षबहिर्भाव इति वाच्यम्। तत्रा-

पि गत्यन्तराभावेन व्याप्तिस्मरणं मानसं जनयित्वाऽनुमितिः सम्पादनीयेत्यस्य नैयायिकानुमततया तत्पक्षबहिर्भावासम्भवात्। नव तथापि फलोपधाने विशेष्येऽर्थ इति वाच्यम्। यत्र व्याप्तिविशिष्टे हेतुमत्त्वापक्षतापर्याप्तिकतत्पदस्मरणात्मकव्याप्तिस्मरणं ततो मानसपरामर्शक्रमेणानुमितिस्तत्र व्याप्तिस्मरणस्य तत्पदार्थोपस्थितिद्वारा शब्दात्मकपरामर्शरूपयोग्यतामादायेष्टापत्तिवारणायेत्यादिकं वाच्यम्।

व्याप्यतावच्छेदकप्रकारकव्याप्तिनिश्चयत्वं व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयत्वाख्यम् अनुमितित्वावच्छिन्नं प्रति हेतुरुच्यते मीमांसकेन। अत्र व्याप्यतावच्छेदकप्रकारकव्याप्तिनिश्चयत्वं च व्याप्यतावच्छेदकावच्छेदेन ग्राह्यम्। तेन वह्निव्याप्यं द्रव्यं द्रव्यत्ववान् ह्रद इत्यादिज्ञानोत्तरं ह्रदो वह्निमान् इत्याद्यनुमित्यापत्तेः भट्टाचार्यस्य व्याख्यायामियमनुपपत्तिः वह्निव्याप्यं द्रव्यं द्रव्यत्ववानित्यादिज्ञानात् ह्रदो वह्निमानित्यनुमितेरसम्भवे विषयबाधाभावत्वेन विशिष्टबुद्धिसामान्यं प्रत्यपि हेतुत्वात् कथं तन्निराकरणायावच्छेदकत्वावच्छेदेन तन्निश्चयत्वमूहनीयमिति कविकाव्ये॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं परामर्शगदाधरीक्रोडपत्रम्।

# अवयवगादाधरीक्रोडपत्रम् ।

ॐकालिकायै नमः । तादृशयत्किञ्चिच्छाब्दबोधनिरूपिता शाब्दज्ञाननिष्ठा या या जनकता तदवच्छेदककोटिप्रविष्टयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वव्यापकसमुदायत्वं न्यायत्वमिति भट्टाचार्याः । यत्किञ्चिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठा या यत्किञ्चिज्जनकता तदवच्छेदककोटिप्रविष्टप्रतिज्ञाद्येकैकमात्रविषयकज्ञानीयविषयताश्रयवस्तुत्वव्यापकत्वं प्रतिज्ञाद्येकैकमात्रवृत्तिसमुदायत्वेप्यक्षतमिति प्रतिज्ञाद्येकैकावयवेऽतिव्याप्तिः न्यायवृत्तिसमुदायत्वे च तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वासत्त्वान्न्यायमात्रेऽसम्भवो वा स्यादतो या या जनकतानिवेशः । तथाच प्रत्येकवृत्तिसमुदायत्वस्य तावज्जनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वाव्यापकत्वान्न दोषः । ननु कस्या अपि विषयतायास्तावज्जनकतावच्छेदकत्वाभावादुक्तलक्षणासंभव इति, चेन्न यत्किञ्चिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठजनकतात्वव्यापकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वव्यापकसमुदायत्वे तात्पर्यात् । व्यापकत्वञ्च स्वनिरूपितविषयत्वावच्छेद्यत्वसम्बन्धेनेति ध्येयम् ।

समानार्थकविभिन्नानुपूर्वीकप्रतिज्ञादिविषयकज्ञाननिष्ठजनकतामादाय व्यापकत्वानुपपत्तिरतः शाब्दबोधसमानानुपूर्वीकनानावाक्यविषयतानामनुगतैकरूपेणैव कारणतावच्छेदकत्वात्तादृशयत्किञ्चिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठजनकतात्वव्यापकज्ञानीयविषयताश्रयवस्तुत्वव्यापकत्वं न न्यायवृत्तिसमुदायत्वस्येत्यसम्भवादतः शाब्दज्ञाने यत्किञ्चित्त्वं निवेशितम् भट्टाचार्येण । न चैवं यत्किञ्चित्त्वनिवेशादननुगम इति वाच्यम् तादृशशाब्दबोधविशिष्टज्ञानविशिष्टसमुदायत्वस्य विवक्षितत्वात् । प्रथमवैशिष्ट्यं व्यापकत्वसम्बन्धेन । व्याप्यताघटकसम्बन्धः स्वनिष्ठजन्य-

तानिरूपितशब्दज्ञाननिष्ठजनकतात्वम् । व्याप्यतावच्छेदकसम्बन्धश्च स्वनिरूपितविषयतावच्छेदकत्वम् । द्वितीयवैशिष्ट्यमपि व्यापकत्वसम्बन्धेनैव । तत्र व्याप्यत्वं स्वनिरूपितवस्तुनिष्ठविषयतासम्बन्धेन, व्यापकता च स्वरूपसम्बन्धेनेति ध्येयम् ॥ १ ॥

अत्र शब्दज्ञाननिष्ठेत्यनुक्तौ व्याप्यताज्ञानादिकारणतामादाय व्यापकताभङ्गेनासम्भवः । न च न्यायविषयकसमूहालम्बनयोग्यताज्ञानमादाय लक्षणं सङ्गमनीयमिति वाच्यम् यन्न्यायविषयकसमूहालम्बनं न जातं तत्राव्याप्तेरपरिहार्यत्वात् । नचैवमपि समूहालम्बनस्थले योग्यतादिविषयकशब्दविषयकसमूहालम्बनज्ञाननिष्ठकारणतामादाय तद्दोषतादवस्थ्यमिति वाच्यम् शब्दज्ञाननिष्ठ इत्यनेन शब्दत्वव्याप्यजात्यवच्छिन्नविषयताशालिज्ञानत्वावच्छिन्नकारणताया विवक्षितत्वात् । नचैवमपि यत्र वस्तुत्वस्य साध्यत्वं तत्र न्यायेऽव्याप्तिर्दुर्वारैवेति वाच्यम् । शब्दज्ञाननिष्ठ इत्यत्र निश्चयत्वावच्छिन्नकारणताया उक्तत्वात् । योग्यताज्ञानस्य संशयसाधारणज्ञानत्वेनैव हेतुतया योग्यताज्ञानकरणताया अन्यथात्वात् । नच तथापि सामानाधिकरण्यसम्बन्धेन वस्तुविशिष्टवस्तुसाध्यक-
८ स्थले विशेषणतावच्छेदकप्रकारकनिश्चयत्वावच्छिन्नजनकतामादायाव्याप्तितादवस्थ्यमिति वाच्यम् शब्दत्वावच्छिन्नजन्यतानिरूपितत्वस्यापि जनकतायां निवेशनीयत्वात् ॥ २ ॥

अत्रावच्छेदकतावच्छेदकसाधारणावच्छेदकतालाभाय कोटिप्रविष्टेत्युक्तम् । अन्यथा शब्दज्ञाननिष्ठा तादृशी या या जनकता तत्त्वर्गतानुपूर्वीप्रकारकज्ञानत्वावच्छिन्नजनकतायाः साक्षादवच्छेदकीभूतविषयत्वाप्रसिद्ध्या न्यायमात्रेऽसम्भवापत्तेः । यदि चावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वं न मन्यते तदा शब्दज्ञाननिष्ठजनकत्वं विषयत्वावच्छिन्नत्वेन विशेषणीयम् इति ज्ञानत्वावच्छिन्नजनकतामादाय न दोषः । अथ तादृशी या या जनकता प्रत्येकं तत्तदवच्छेदकविषयतासमानाधिकरणवस्तुसमुदायत्वनिवेशेनैव एकदेशवृत्तिसमुदायत्वमादायातिप्रसङ्गवारणसम्भवे व्यर्थं व्यापकत्वनिवेशनमिति आनुपूर्वीप्रकारकज्ञानस्यानुपूर्वीघटकतावद्वस्तुविषयतानां निरूप्यनिरूपकभावापन्नानां विशेष्यविशेषणभावं विनिगमकाभावेन प्रत्येकविषयतात्वेनैव कारणतावच्छेदकतया एक-

देशवृत्तिसमुदायत्वस्य तादृशसकलकारणतावच्छेदकविषयतासामानाधिकरण्याभावादिति चेन्न अनन्तसामानाधिकरण्यनिवेशापेक्षया व्यापकतानिवेशस्यैव लघुत्वात् । अवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वास्वीकारे निरुक्तसकलजनकतान्तर्गताया आनुपूर्वीप्रकारकज्ञानत्वावच्छिन्नजनकतायाः पत्रादिनिष्ठनिरूप्यनिरूपकभावापन्नावच्छेदकत्वावच्छिन्नजनकतायाश्चावच्छेदकीभूतविषयत्वसामानाधिकरण्यस्य न्यायत्वे सत्त्वादसम्भवापत्तेश्च । एतेन तादृशयत्किञ्चिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठजनकताव्यापकसमुदायत्वमेव न्यायत्वमस्तु व्यापकता च स्वसमानाधिकरणविषयत्वावच्छेद्यत्वसम्बन्धेनेत्युक्तौ अनन्तसामानाधिकरण्यनिवेशकृतगौरवाभावात् द्विधा व्यापकतानिवेशो व्यर्थ इत्यपि परास्तम् । न च वस्तुविषयत्वावच्छिन्ना या या जनकता इत्युक्त्यैव ज्ञानत्वावच्छिन्नजनकतायाः पत्रादिनिष्ठावच्छेदकतावच्छिन्नजनकतायाश्च वारणसम्भव इति वाच्यम् एवमपि निरुक्तसकलजनकतान्तर्गताया आनन्तर्यघटकध्वंसत्वादिना वस्त्ववगाहिप्रमीयवस्तुनिष्ठविषयत्वावच्छिन्नजनकताया अवच्छेदकीभूतविषयतासामानाधिकरण्यस्य न्यायत्वेऽसत्त्वादव्याप्तेर्दुर्वारत्वात् । अत एव जात्यवच्छिन्नविषयत्वावच्छिन्ना या या जनकता इत्युक्तौ आनन्तर्यघटकध्वंसत्वादिना वस्त्ववगाहित्वावच्छिन्नजनकतावारणसम्भव इत्यपि समाहितम् तादृशध्वंसत्वादिना जातिमवगाह्य तादृशजात्युपरागेण वस्तुविषयकज्ञानीयजात्यवच्छिन्नवस्तुनिष्ठविषयत्वावच्छिन्नजनकतामादायाव्याप्तितादवस्थ्यात् । न चोक्तप्रमीयवस्तुविषयत्वावच्छिन्नजनकताया निरुक्तजनकतान्तर्गतत्वेपि तदवच्छेदकीभूता या आनन्तर्यघटकध्वंसत्वादिना न्यायघटकवस्त्ववगाहिप्रमीयविषयता तत्सामानाधिकरण्यस्य न्यायत्वे सत्त्वान्नोक्तदोष इति वाच्यम् यत्र ध्वंसत्वादिना न्यायघटकवस्तुप्रमाऽप्रसिद्धस्तत्राव्याप्तितादवस्थ्यात् । स्वमते यत्किञ्चिज्ज्ञाने प्रमान्यत्वविशेषणस्यैव भवतापि निरुक्ता या या जनकता तदवच्छेदकीभूतविषयतायां प्रमानिरूपितत्वस्यावश्यं वाच्यतया प्रमज्ञानीयविषयतासामानाधिकरण्यमुपादाय लक्षणगमनसम्भवाच्च । अन्यथा पूर्वपूर्ववस्तुविशिष्टचरमवस्तुत्वपुरस्कारेण न्यायघटकचरमवस्तु-

नवतां हि भ्रमीयविषयतामादाय न्यायघटकचरमवस्त्वघटिततद्घटकवस्तुसमुदायन्यायैकदेशेऽतिव्याप्तिस्तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य न्यायत्वेऽसत्त्वात् अव्याप्तेर्दुर्वारत्वापत्तेः। भ्रमानिरूपितवस्तुनिष्ठविषयत्वावच्छिन्ना या या जनकता प्रत्येकं तत्तदवच्छेदकीभूतभ्रमानिरूपितविषयतासामानाधिकरण्योक्तौ च लाघवानवकाश इति ध्येयम्। तथाऽवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वस्वीकारे न्यायघटकयद्भागस्य प्रत्येकमर्थबोधकत्वम्। तत्तद्भागघटकैकवस्तुघटितसमुदायत्वस्यापि निरुक्तावज्जनकतावच्छेदकविषयतासामानाधिकरण्यात्तादृशसमुदायत्ववत्यतिव्याप्तिः तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य न्यायत्वे सत्त्वादसम्भवो वा स्यादतो नोक्तप्रकारः साधीयान्। न च निरुक्ता या या जनकता तन्निरूपितत्वसम्बन्धानवच्छिन्नावच्छेदकताश्रयविषयतासामानाधिकरण्योक्तौ नोक्तदोषः, अवच्छेदकतावच्छेदकविषयितायां निरूपितत्वसम्बन्धानवच्छिन्नावच्छेदकत्वाभावादिति वाच्यम्, तथासति निरुक्तजनकतान्तर्गता या पत्वादिनिष्ठावच्छेदकतावच्छिन्नजनकता तन्निरूपितनिरूपितत्वसम्बन्धानवच्छिन्नावच्छेदकताश्रयविषयतासामानाधिकरण्यस्य न्यायत्वेऽसत्त्वादसम्भवापत्तेः। अवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वस्वीकारे वस्तुनिष्ठविषयत्वावच्छिन्नत्वस्य जनकताविशेषणत्वेपि अप्रतीकारादिति ध्येयम्॥ ३॥

अथ यत्किञ्चिच्छाब्दबोधनिरूपितजनकतावच्छेदिका यत्किञ्चिज्ज्ञानीया वस्तुनिष्ठा या या विषयता प्रत्येकं तत्तत्समानाधिकरणसमुदायत्वविवक्षणेनैव सामञ्जस्ये व्यापकतानिवेशो व्यर्थ इति। न चानन्तसामानाधिकरण्यनिवेशे गौरवमिति वक्तव्यम्, यत्किञ्चिच्छाब्दबोधनिरूपितजनकतावच्छेदकीभूतयत्किञ्चिज्ज्ञानीयवस्तुनिष्ठविषयतात्वव्यापकसमुदायत्वस्य विवक्षितत्वात्। व्यापकता च सामानाधिकरण्यसम्बन्धेनेति। न च यत्किञ्चित्पदेन प्रतिज्ञामात्रविषयकज्ञानमादाय प्रतिज्ञायामतिव्याप्तिरिति वाच्यम्, तादृशशाब्दबोधविशिष्टसमुदायत्वस्यैव विवक्षितत्वात्। वैशिष्ट्यञ्च व्यापकत्वसम्बन्धेन। अत्र व्याप्यत्वं स्वनिरूपितजनकतावच्छेदकत्वस्वाव्यवहितपूर्ववर्तिज्ञानीयवस्तुनिष्ठविषयतात्वोभयसम्बन्धेन।

व्यापकता च स्वाश्रयवस्तुवृत्तित्वसम्बन्धेनेति चेत् । अत्राहुः—

यत्र स्थलविशेषे यन्न्यायविषयकज्ञानोत्तरं तादृशबोधो न जात-स्तत्राव्याप्तिः तज्ज्ञानीयविषयतायां स्वनिरूपितजनकतावच्छेद-कत्वसत्त्वेऽपि स्वाव्यवहितपूर्वज्ञानीयत्वाभावेन तादृशसमुदाय-स्य शाब्दबोधविशिष्टत्वाभावादित्युक्तप्रकारो न सम्यक् । नच त-त्रापि तत्रागतिरिति वाच्यम् स्वमते न्यायान्तरजन्यबोधमादायैव तत्र लक्षणगमनादिति ध्येयम् । नच तादृशी या या जनकता त-त्तदाश्रयीभूतयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकत्वनिवेशेनै-वोपपत्तौ किमवच्छेदककोटिप्रविष्टत्वनिवेशेनेति वाच्यम् यादृश-न्यायविषयकज्ञानं नियताप्रामाण्यज्ञानास्कन्दितमेव जायते तादृश-न्यायाव्याप्तिप्रसङ्गात्तादृशसमुदायत्वस्य तादृशशाब्दबोधनिरूपित-जनकतावज्ज्ञानीयविषयताश्रयवर्णत्वाव्यापकत्वात् । स्वमते चा-प्रामाण्यज्ञानास्कन्दितज्ञाने जनकत्वस्यासत्त्वेऽपि जनकतावच्छेद-काविषयतासत्त्वान्नाव्याप्तिरिति ध्येयम् ॥ ४ ॥

वाक्यान्तरसाधारणसमुदायमादाय वाक्यान्तरसमुदायेऽति-व्याप्तिवारणाय तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वं निवे-शितं भट्टाचार्येण । अथात्र निरुक्ता या या जनकता तत्तदवच्छेद-कीभूतयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वसमनियतसमुदायत्वनि-वेशेनैव उपपत्तौ व्यर्थं तादृशन्यूनवृत्तित्वानिरूपकत्व-निवेशनमिति चेन्न समनियतत्वनिवेशे यत्किञ्चित्पदेन न्यायद्वयवि-षयकज्ञानमेकन्यायघटकप्रतिज्ञाऽपरन्यायघटकसमुदायविषयकज्ञा-नञ्चादाय न्यायद्वये एकन्यायघटकप्रतिज्ञाघटितापरन्यायात्मकस-मुदाये चातिव्याप्त्यापत्तेरिति । यत्र च न्यायद्वयविषयकज्ञानमेव नियमतो जायते तत्र तादृशन्यायद्वये न्यायत्वमिष्टमेव । एतेन स्वा-श्रयीभूतयत्किञ्चित्प्रतिज्ञाव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्स्वं तदन्यत्वनिवेशस्यावश्यकतया तेनैवोक्तन्यायद्वयादावतिव्याप्तिवा-रणसम्भवे व्यर्थं न्यूनवृत्तित्वानिरूपकत्वविशेषणम् । यत्किञ्चित्त्व-निवेशात्प्रतिज्ञाचरमवस्तुहेतूदाहरणोपनयनिगमनप्रतिज्ञावृत्तिसमु-दायत्ववति नातिव्याप्तिः तादृशसमुदायत्वस्य च स्वाश्रयीभूत-चरमप्रतिज्ञाव्यवहितोत्तरत्वशून्यहेतुवृत्तित्वादिति परास्तम् । यत्र नियमतो न्यायविषयकं ज्ञानं जायते तत्र न्यायद्वयाव्याप्तिभि-

या स्वाश्रयीभूतयत्किञ्चित्प्रतिज्ञाव्यवहितोत्तरत्वशून्यहेत्वादिवृत्तियद्यत्त्वं तदन्यत्वनिवेशायोगात् । प्रतिज्ञाचरमवस्तुघटितोक्तसमुदायवारणन्तु स्वव्याप्यप्रतिज्ञात्वाश्रयाव्यवहितोत्तरत्वशून्यत्वनिवेशादेव सम्भवतीति ध्येयम् ॥ ५ ॥

एकैकन्यायघटकं यत्प्रतिज्ञाद्येकैकवाक्यं तत्समुदायातिव्याप्तिवारणाय स्वाश्रयीभूतयत्किञ्चित्प्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तदन्यत्वेन निरुक्तसमुदायत्वं विशेषितं भट्टाचार्येण । तस्य च स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यत्वानतिरिक्तवृत्ति यद्धेतुत्वं तत्समानाधिकरणं यद्यत्समुदायत्वं तदन्यत्वमिति तु निष्कृष्टार्थः । तेन न्यायत्वरूपसमुदायत्वस्य स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेतुत्वाश्रयहेतुघटकद्वितीयादिवस्तुवृत्तित्वेऽपि नासम्भवः । नन्वेकैकन्यायघटकप्रतिज्ञाद्येकैकवाक्यघटितसमुदायत्वस्य स्वव्यभिचारित्व-स्वसामानाधिकरण्योभयसम्बन्धेन तादृशसमुदायत्वविशिष्टान्यत्वरूपसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविरहादेवातिव्याप्तिवारणसम्भवे व्यर्थं स्वाश्रयप्रतिज्ञाद्यव्यवहितोत्तरेत्यादिविशेषणमिति चेत्, अत्राहुः—

स्वसामानाधिकरण्यमपहाय स्वव्यापकत्व-स्वव्यभिचारित्वोभयसम्बन्धेन तादृशसमुदायत्वविशिष्टान्यत्वरूपमेव न्यूनवृत्तित्वानिरूपकत्वं वाच्यम् अन्यथा न्यायत्वरूपसमुदायत्वस्यापि पञ्चन्यायघटकप्रतिज्ञादिपञ्चगततादृशसमुदायत्वसामानाधिकरण्यघटितन्यूनवृत्तित्वानिरूपकत्वासत्त्वादसम्भवापत्तेः । तथा च पञ्चन्यायघटकप्रतिज्ञादिपञ्चगतसमुदायत्वस्यापि व्यापकताघटितन्यूनवृत्तित्वानिरूपकत्वस्याक्षततया तादृशसमुदायातिव्याप्तिरतः स्वाश्रयप्रतिज्ञेत्यादिविशेषणम् । न चासम्भववारणायानिरूपकत्वप्रतियोगिकुक्षिनिक्षिप्तसमुदायत्वमेव तादृशभेदकूटवत्त्वेनैव निवेश्यतां तावतैव नानान्यायघटकप्रतिज्ञादिपञ्चगतसमुदायत्वस्य तादृशभेदकूटवत्त्वविरहेण तन्निष्ठन्यूनवृत्तित्वनिरूपकत्वेपि न्यायत्वस्य न क्षतिः, न वा नानान्यायघटकप्रतिज्ञादिपञ्चकेऽतिव्याप्तिः तादृशपञ्चगतसमुदायत्वस्य तादृशभेदकूटवन्निष्ठन्यूनवृत्तितानिरूपकत्वादिति किं व्यापकताघटितन्यूनवृत्तित्वानिरूपकत्वनिवेशानिबन्धनातिव्याप्तिवारणार्थमनुयोगिनि भेदकूटनिवेशेनेति वाच्यम् प्रति-

योगिनि भेदकूटनिवेशेऽप्यसम्भवभिया न्यूनवृत्तित्वस्य सामानाधिकरण्यघटितत्वध्रौव्ये न्यायत्वासमानाधिकरणसमुदायत्ववति व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽतिव्याप्तिवारणायाऽनुयोगिन्यपि तादृशभेदकूटानिवेशस्यावश्यकत्वे लाघवानवकाशात् स्वमते तु व्युत्क्रमप्रयुक्तप्रतिज्ञादिपञ्चकेऽतिव्याप्तिवारणाय व्युत्क्रमप्रतिज्ञादिवृत्तिसमुदायत्वभिन्नत्वं स्वतन्त्रमनुपादेयमेवेति ध्येयम्।

अत्र नञ्द्वयानन्तर्भावेन स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वविशिष्टसमुदायत्वस्यानुयोगिनि स्वस्वानन्तर्भावेनाननुगमान्न लक्षणघटकता नञ्द्वयान्तर्भावे तु प्रतियोगिनि स्वस्वान्तर्भावान्नानुगम इति ॥ ६ ॥

उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वमिति शिरोमणिः। मैवम् स्वाश्रयप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत् तद्न्यत्वस्य समुदायविशेषणत्वे तात्पर्यात्। व्युत्क्रमप्रयुक्तप्रतिज्ञादिपञ्चनिष्ठस्य नानान्यायान्तर्गतप्रतिज्ञादिपञ्चनिष्ठस्य च समुदायत्वस्य तत्तदन्यत्वविरहान्नातिप्रसङ्गः। एवञ्च घटमानयेत्यादिवाक्यवृत्तिसमुदायत्ववारणाय प्रतिज्ञादिवृत्तित्वरूपं समुदायत्वविशेषणमपि सार्थकमित्यवधेयमिति भट्टाचार्येणोक्तम्। अत्र सन्दर्भविरोधः। तथाहि—एवञ्चेत्यादिग्रन्थेन पूर्वकल्पेऽतिव्याप्तिदोषः विशेष्यदलासार्थक्यञ्चेति दोषद्वयमायातीति भावार्थो न सङ्गच्छते तादृशभेदप्रतियोगितावच्छेदकत्वरूपोचितानुपूर्वीकत्वनिवेशेऽपि न्यायघटककतिपयवस्तुसमुदायत्ववारणाय प्रतिज्ञादिपर्याप्त्यवच्छेदकधर्मपञ्चकव्यापकत्वरूपस्य विशेष्यदलस्य सार्थक्यसम्भवात् असम्भवभयेन तादृशानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकवस्तुत्वव्यापकतानिवेशायोगात्। समानानुपूर्वीतावन्न्यायघटकवस्तूनामेव तादृशभेदप्रतियोगितावच्छेदकत्वात्।

अत्र केचित्। अवच्छेदकावच्छेदकसाधारणावच्छेदकत्वस्याप्रामाणिकत्वे तादृशभेदप्रतियोगितावच्छेदकत्वमपहाय तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयतानिरूपकत्वमेवोचितानुपूर्वीकत्वं वाच्यम् तथा च तादृशकारणतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयतानिरूपकवस्तुत्वव्यापकसमुदायत्वानिवेशेनैव एकदेशवृत्तिसमुदायत्ववारणसम्भवे प्रति-

ज्ञादिपञ्चवृत्तित्वरूपविशेष्यदलवैयर्थ्यसम्भावना भवतीति न एव-ञ्चेत्यादिग्रन्थविरोध इत्याहुः।

यत्तु एवञ्च घटमानयेत्यादिवाक्यवृत्तिसमुदायत्ववारणाय घटमानयेत्यादिवाक्यसाधारणप्रतिज्ञादिपञ्चवृत्तिसमुदायत्ववारणाय च प्रतिज्ञादिवृत्तित्वविशेषणं तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविशेषणं च सार्थकमित्यर्थे एवंचेत्यादिग्रन्थस्य तात्पर्यमिति। तच्चिन्त्यम् ॥ ७ ॥

अथ प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकधर्मपञ्चकव्यापकत्वमित्यत्र प्रतिज्ञात्वादिपञ्चधर्मव्यापकत्वानिवेशेनापि सामंजस्ये किं पर्याप्त्यवच्छेदकानिवेशेनेति चेन्न प्रतिज्ञात्वादेः स्वनिष्ठानुमित्यन्यूनानतिरिक्तविषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वव्यापकसमुदायत्ववत्त्वसम्बन्धेन सकलप्रतिज्ञादिसाधारणप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिज्ञानवत्त्वरूपत्वेन कस्यचिदपि न्यायत्वस्य तादृशप्रतिज्ञात्वादिव्यापकत्वाभावेनासम्भवभिया प्रतिज्ञात्वादिधर्मपञ्चकव्यापकतानिवेशायोगात्। नच सर्वसाधारणप्रतिज्ञात्वस्यैक्येन यत्किञ्चित्प्रतिज्ञादिवृत्तिसमुदायत्वस्य तादृशप्रतिज्ञात्वपर्याप्त्यनवच्छेदकतया तद्दोषतादवस्थ्यमिति वाच्यम् यत्किञ्चित्प्रतिज्ञादावपि प्रतिज्ञात्वादिव्यवहारबलात्तत्समुदायत्वस्यापि तादृशप्रतिज्ञात्वपर्याप्त्यवच्छेदकत्वादिति ध्येयम्।

न चैवमपि प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकधर्मसामान्यव्यापकत्वस्य न्यायत्वेऽसत्त्वात्तादृशधर्मसामान्यव्यापकतानिवेशायोगः, प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकतानिवेशे च तादृशधर्मस्य विषयतात्मकतया विषयतायाश्च वस्तुभेदेन भेदात् प्रतिज्ञादिघटकीभूतवस्तुवृत्तिपञ्चविषयतामादाय वस्तुपञ्चकेऽतिव्याप्तितादवस्थ्यमिति वाच्यम् प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकताविशिष्टसमुदायत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च व्यापकतासम्बन्धेन,व्याप्यताघटकसम्बन्धश्च स्वानिरूपितपर्याप्तिसम्बन्धेनेति ध्येयम्।

वस्तुतस्तु प्रतिज्ञात्वादेर्वाक्यभेदेन नानात्वाद्यत्किञ्चित्प्रतिज्ञात्वादिव्यापकत्वमेव निवेशनीयम् यत्किञ्चित्प्रतिज्ञात्वादिव्यापकतालाभायैव च पर्याप्त्यवच्छेदक इत्युपादानमपीति न काप्यनुपपत्तिरिति ध्येयम् ॥ ८ ॥

वस्तुतस्तु कल्पे तादृशानुपूर्वीप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयताकत्वरूपं न्यायान्तर्गतत्वं भट्टाचार्येण विवक्षितम्। अथ प्रतिज्ञादिलक्षणेऽपि निरुक्तन्यायान्तर्गतत्वस्य निवेशनीयतया न्यायान्तर्गतत्वगर्भप्रतिज्ञादेर्न्यायघटकत्वे कथमन्योन्याश्रय इति चेत्, स्वाविषयकप्रतीत्यविषयन्यायकत्वं न्यायत्वाश्रयत्वं वा न्यायान्तर्गतत्वमिति यथाश्रुताभिप्रायेण तत्सङ्गतेः। वस्तुतस्त्वित्यादिकल्पाभिप्रायेण तत्सङ्गतिस्तु जगदीशपत्रिकोक्तदिशाऽवसेया।

अथावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वास्वीकारे तादृशानुपूर्वीप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयिताकत्वरूपन्यायान्तर्गतत्वनिवेशोऽपि विनिगमनाविरहेण हेत्वादिविषयतायां तादृशकारणतावच्छेदकत्वं दुर्घटम्। तथाहि हेतुप्रकारत्वांशे विशेषणीभूतप्रतिज्ञाप्रकारतानिरूपितत्व-उदाहरणविशेष्यतानिरूपितत्वोभयस्य कारणतावच्छेदकत्वस्वीकारे व्यासज्यवृत्तिकारणतावच्छेदकत्वापत्तिरतः सामानाधिकरण्यसम्बन्धेन प्रतिज्ञाप्रकारतानिरूपितत्वविशिष्टोदाहरणविषयतानिरूपितत्वविशिष्टहेतुप्रकारताशालिनिश्चयत्वादिना कारणता वाच्या तथा च कारणतावच्छेदककोटौ सामानाधिकरण्यांशस्याधिकस्य निवेशनमेव विनिगमकमिति चेन्न प्रतिज्ञाप्रकारतानिरूपितहेतुप्रकारतानिरूपित-उदाहणप्रकारतेत्यादिक्रमेण कार्यकारणभावे हेतुप्रकारतांशे विशेषणभूतप्रतिज्ञाप्रकारतानिरूपितत्वहेतुप्रकारतात्वोभयस्योक्तयुक्त्या कारणतानवच्छेदकत्वेन सामानाधिकरण्यसम्बन्धेन प्रतिज्ञाप्रकारतानिरूपितत्वादिवैशिष्ट्यनिवेशस्यावश्यकत्वे उभयत्रैव सामानाधिकरण्यानिवेशे विनिगमकाभावादिति।

अथ तादृशानुपूर्वीप्रकारकज्ञानत्वसमनियतकारणतानिवेशेनैव सामञ्जस्ये निश्चयत्वोपादानमनर्थकमिति। न चान्तरा सधर्मितावच्छेदककविशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनैव कारणतया तादृशज्ञानत्वसमनियतकारणताप्रसिद्धिरिति वाच्यम् प्रतिज्ञादिविशिष्टनिगमनत्वरूपानुपूर्वीमत्त्वानित्याकारान्तरा निर्धर्मितावच्छेदककविशिष्टवैशिष्ट्यबोधकारणताया एव तादृशज्ञानत्वसमनियततयाऽप्रसिद्ध्यनवकाशादिति। मैवम्, विशिष्टनिगमनत्वांशे निश्चयत्वानिवेशेऽपि तादृशनिगमनत्वरूपानुपूर्वी-

विशेषणीभूतप्रतिज्ञाद्यंशे निश्चयत्वनिवेशार्थमेव निश्चयपदोपादाना-दन्यथा विशेषणांशे संशयाकारज्ञानसाधारणतादृशानुपूर्वीप्रकारकज्ञानत्वसमनियतकारणताया एवाप्रसिद्ध्यापत्तेः । नच तादृशानुपूर्वीविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयताकत्वनिवेशापेक्षया समनैयत्यनिवेशनं गौरवग्रस्तमिति वाच्यम् तादृशानुपूर्वीभिन्नवाक्यत्वविशिष्टवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकतामादायोदासीनाऽतिव्याप्तिभिया गौरवस्याकिञ्चित्करत्वात् । न चावच्छेदकतावच्छेदकत्वास्वीकारे तादृशबुद्धित्वपर्याप्तावच्छेदकताकजन्यतानिरूपितजनकतानिवेशासम्भवेऽपि मुख्यविशेष्यतानिरूपिततादृशानुपूर्व्यवच्छिन्नप्रतियोगिकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितप्रकारताशालिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशान्नोक्तातिव्याप्तिरिति वाच्यम् प्रकाराद्यंशे उदासीनवाक्यकालीनप्रकारादिघटितानुपूर्वीविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतामादायोदासीनेऽतिव्याप्तितादवस्थ्यात् इति तादृशानुपूर्वीघटकतत्तद्धर्मभिन्नधर्मावच्छिन्नविषयित्वानवच्छिन्नत्वस्य जन्यतायां निवेशापेक्षया तादृशनिश्चयत्वसमनैयत्यनिवेशस्यैव लघुत्वादिति ध्येयम् ॥ ८ ॥

( न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वमिति शिरोमणिः । प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्यत्तत्तद्रूपानुयोगिताकभेदप्रतियोगितावच्छेदकत्वे सति प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत्तत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकधर्मवत्त्वमित्युक्तं भट्टाचार्येण । अत्र प्रतिज्ञाद्येकदेशवारणाय सत्यन्तम् । प्रतिज्ञाहेतुवारणाय विशेष्यदलम् । अथ प्रतिज्ञाद्येकदेशवारणाय सत्यन्तदले प्रतिज्ञादिपञ्चभेदानुयोगितानवच्छेदकत्वविवक्षणेऽपि सामञ्जस्ये कृतं तादृशगुरुतरनिवेशेनेति चेन्न प्रतिज्ञात्वादेर्धीविशेषविषयात्मकतया विषयतायाश्च वस्तुभेदेन भेदात् पत्वादेरिव प्रतिज्ञात्वादेरपि प्रतिज्ञादिपञ्चभेदानुयोगितावच्छेदकत्वाभावेनासम्भवापत्तेः तत्तद्विषयत्वावच्छेदेन प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वात्, स्वमते तु तादृशभेदपञ्चकानुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकभेदप्र-

तियोगितायाः प्रतिज्ञात्वत्वरूपेण प्रतिज्ञात्वादिनावच्छेदान्नासम्भव इति ध्येयम् ।

ननु तथापि विशेष्यदले प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितानवच्छेदकत्वविवक्षयापि प्रतिज्ञाहेतुवारणसम्भवे गुरुतरविशेष्यदलनिवेशोऽनुचित इति । न च प्रतिज्ञाहेत्वादिघटकवस्तुवृत्त्यन्यतमत्वस्य प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वेन तादृशान्यतमत्वमादायातिव्याप्तिवारणार्थमेव गुरुतरनिवेश इति वाच्यम् प्रतिज्ञादिपञ्चभेदानुयोगितावच्छेदकपत्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वाभावेन सत्यन्तविरहादेव तादृशान्यतमत्ववारणसम्भवादिति चेत् ।

अत्राहुः—प्रतिज्ञात्वस्य पर्वतो वह्निमानित्यानुपूर्वीविषयकज्ञानीयपत्वादिविषयताभिन्नतत्तद्वस्तुविषयतात्मकत्वेन तज्ज्ञानीयपत्वादिसाधारणविषयतात्मकसमुदायत्वस्य प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकतया तद्भिन्नत्वस्य प्रतिज्ञात्वादावसत्त्वेनासम्भवापत्तेः । स्वमते तु प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकतावच्छेदकीभूतं यत् तादृशज्ञानीयपत्वासाधारणविषयतात्वात्मकसमुदायत्वं तदवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदानुयोगितावच्छेदकत्वस्य प्रतिज्ञात्वादौ सत्त्वान्नोक्तदोष इति ध्येयम ।

केचित्तु प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिकभेदप्रतियोगितावच्छेदकत्वस्योभयभेदमादाय केवलान्वयितया प्रतिज्ञात्वादिकेऽपि तादृशावच्छेदकत्वसत्त्वेनासम्भवापत्तिः प्रकृते तु तादृशभेदप्रतियोगितानिरूपिता या या अवच्छेदकता तत्तन्निरूपकप्रतियोगिताकभेदानुयोगितावच्छेदकत्वनिवेशान्न दोषः । एतेन प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वनिवेशो न लघीयानित्यपि प्रत्युक्तम् । कस्या अपि पर्याप्तेस्तादृशभेदप्रतियोगितावच्छेदकतात्वावच्छिन्ननिरूपकताकत्वस्यासत्त्वेनासिद्धेः । न च तादृशभेदप्रतियोगितानिरूपितप्रतिज्ञात्वाद्यवृत्त्यवच्छेदकताशून्यत्वनिवेशान्न दोष इति वाच्यम तथा सति प्रतिज्ञात्वाद्यवृत्तिधर्मशून्यत्वमात्रस्यैव सम्यक्त्वे तावत्प्रयासस्य वैफल्यापत्तेः, तस्य लक्षणान्तरत्वेनादूषकत्वाच्च । न च तादृशभेद-

प्रतियोगितावच्छेदकताव्यक्तीनां तत्तद्व्यक्तित्वेन निवेशापेक्षया तत्तद्व्यक्तित्वेन तादृशभेदव्यक्तीनां निवेश एव लघुरिति वाच्यम् तत्तद्व्यक्तित्वेन तादृशभेदव्यक्तीनां निवेश एव लघुरिति वाच्यम् ; अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वे घटाभावादावपि स्वभेदसत्त्वेन घटाभावादेरपि स्वभेदस्वरूपतया तत्तदभावव्यक्तीनां निवेशेनैव विपरीतगौरवात् । प्रकृते तु भेदत्वनिरूपितत्वेन प्रतियोगितानिवेशनेनोक्तगौरवानवकाशादित्याहुः ।

अथ सत्यन्तदलघटकस्य प्रतिज्ञादिपञ्चकानुयोगितावच्छेदकं यद्यत्तदवच्छिन्नानुयोगिताकभेदस्य प्रतिज्ञात्वादिप्रत्येकपञ्चधर्मावच्छिन्नानुयोगिताकभेदभिन्नत्वविशेषणेनैव प्रतिज्ञाहेतुसमुदायवारणसम्भवेन स्वतन्त्रविशेष्यदलनिवेशो व्यर्थ इति चेत् ।

अत्र केचित् प्रतिज्ञाद्यन्यतमशब्दस्य प्रतिज्ञादिभिन्नभिन्नत्ववाचकत्वेन प्रतिज्ञादिभिन्नो भिन्नो यस्मात् स प्रतिज्ञादिभिन्नभिन्नस्तत्त्वं,प्रतिज्ञादिभिन्नो यस्मात् स प्रतिज्ञादिभिन्नस्तद्भिन्नत्वमिति व्युत्पत्तिद्वयेन एकान्यतमशब्दस्य तात्पर्यार्थद्वयकत्वमभिप्रेत्य गुरुतरलक्षणमुक्तम्। न तु स्वातन्त्र्येण विशेषणान्तरमपि । अत एव प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताका यावन्तो भेदास्तदनुयोगितावच्छेदकत्वं विशेष्यदलार्थः। प्रतिज्ञादिपञ्चभेदत्वसमानाधिकरणानुयोगितानिरूपितप्रतियोगितावच्छेदकपरत्वम्, प्रतिज्ञादिभेदपञ्चकान्यतमप्रतियोगितावच्छेदकरूपवत्त्वमेव वा प्रतिज्ञाद्यन्यतमत्वत्वमिति कथं नोक्तमित्यपि समाहितम् । यथाश्रुतशब्दार्थानुरोधेन गुरुतरलक्षणस्योक्तत्वात् । अन्यलक्षणान्तरत्वेनोक्तलक्षणस्यादूषकत्वाच्चेत्याहुः ॥ ९ ॥

प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वमिति शिरोमणिद्वितीयलक्षणे प्रतिज्ञादिपञ्चभेदानुयोगितावच्छेदकत्वमेव प्रतिज्ञादिघटकतानवच्छेदकत्वमिति वस्तुतस्त्वित्यादिना भट्टाचार्येणोक्तम् । न च प्रतिज्ञादिपञ्चभेदत्वसमानाधिकरणानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वमेव प्रतिज्ञादिघटकतानवच्छेदकत्वमिति कथं नोक्तमिति वाच्यम् तथासत्युभयघटकभागद्वयाघटितत्वेत्यस्य वैयर्थ्यापत्तेः । उभयघटकभागद्वयाघटितत्वमित्यस्य स्वाश्रयवृत्तित्व–स्वानाश्रयवृत्तित्वोभयसम्बन्धेन प्रतिज्ञात्वादिमदन्यत्वमिति निष्कर्षः । तेन न्यायद्वयीयप्रतिज्ञाद्वयवृत्तिसमुदायत्वस्य प्रतिज्ञात्वाश्रयप्रतिज्ञात्वानाश्रयोभयवृत्तित्वेपि तादृश

प्रतिज्ञाद्वये नातिव्याप्तिरिति ध्येयम् ॥ १० ॥

प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यं तत्त्वमिति शिरोमणिः । अत्र प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकस्यान्यतमत्वेन निवेशे प्रतिज्ञाहेतुसमुदायादावतिव्याप्तिस्तादृशसमुदायजन्यबोधस्यापि तादृशान्यतमबोधान्तर्गतत्वादतः प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकशाब्दत्वपर्याप्तावच्छेदकताकजन्यतापञ्चकस्यान्यतमत्वेन निवेशः कृतः भट्टाचार्येण । न च केवलप्रतिज्ञादिप्रतिपाद्यविशिष्टार्थविषयकज्ञानव्यक्तीस्तत्तद्व्यक्तित्वेनोपादाय तादृशज्ञानपञ्चकस्यान्यतमत्वेन निवेश एव सामञ्जस्ये जन्यतानामन्यतमत्वेन निवेशो व्यर्थ इति वाच्यम्, तथासति प्रतिज्ञाद्यर्थमात्रविषयकज्ञानजनके प्रतिज्ञाद्येकदेशेऽतिव्याप्तेः विभिन्नानुपूर्वीकप्रतिज्ञादिजन्यज्ञानानामेकोपादानेऽन्यानुपूर्वीकप्रतिज्ञादावव्याप्तेश्च प्रत्येकमेकैकस्योपादाने चान्यतमत्वशरीरे गौरवात् । स्वमते च प्रतिज्ञाद्यर्थविषयकशाब्दत्वावच्छिन्नजन्यतात्वेनानुगतरूपेण लिखितजन्यतानामेवान्यतमत्वप्रतियोगिकुक्षिनिविष्टत्वेन उक्तगौरवानवकाशादिति ध्येयम् ॥

अथैवं तादृशशाब्दत्वपर्याप्तावच्छेदकताकजन्यतानिवेशोऽसम्भवः । अन्यानुपूर्वीकप्रतिज्ञादिजन्यज्ञाने व्यभिचारवारणाय तत्तदानुपूर्वीप्रकारकज्ञानाव्यवहितोत्तरत्वादेरपि जन्यतावच्छेदकघटकत्वात् । न च यत्किञ्चिज्ज्ञानोत्तरत्वसहिततत्तदर्थविषयकशाब्दत्वपर्याप्तावच्छेदकत्वनिवेशे नोक्तदोष इति वाच्यम् तावतापि तत्तद्वस्तुविषयतायाः अपि जन्यतावच्छेदकघटकतया तदनन्तर्भावेन पर्याप्तिनिवेशासम्भवादिति चेत्,

अत्र केचित्—यादृशयादृशानुपूर्व्यवच्छिन्नविषयकज्ञानाव्यवहितोत्तरत्वं प्रतिज्ञादिजन्यतावच्छेदकघटकं तादृशयत्किञ्चिदानुपूर्व्यवच्छिन्नविषयकज्ञानाव्यवहितोत्तरत्वसहिततत्तदर्थविषयकशाब्दत्वपर्याप्तावच्छेदकताकत्वनिवेशान्नोक्तदोष इत्याहुः ।

तच्चिन्त्यम् । तादृशानुपूर्व्यवच्छिन्नभेदेनान्यतमत्वशरीरे गौरवस्यावश्यकत्वे एकदेशातिव्याप्तिभिया प्रतिज्ञार्थमात्रविषयज्ञानव्यक्तीनामन्यतमत्वेन निवेशासम्भवेऽपि जनकतायामन्यतमत्वनिवेशस्यैवोचितत्वादिति ।

अत्र ब्रूमः—तत्तदर्थविषयकशाब्दत्वातिरिक्तानिष्ठाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य जन्यतायां निवेशान्नानुपपत्तिरिति ध्येयम् ॥ ११ ॥

पर्वतो वह्निमान्धूमादित्यादौ प्रतिज्ञाहेतुविषयकसमूहालम्बनज्ञानमादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिवारणार्थं यत्किञ्चिज्ज्ञाने तथाविधजनकताद्वयशून्यत्वं निवेशितम् । तत्र च हेत्वर्थप्रतिपादकमागघटितप्रतिज्ञाविशेषेऽव्याप्तिमाशङ्क्य व्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वं निवेशितं भट्टाचार्येण ।

अत्रेयमाशङ्का । निरूप्यनिरूपकभावापन्नविषयताभेदेन जनकताया नानात्वात् पर्वतो वह्निमानित्यादिप्रतिज्ञाविषयकज्ञानेपि तथाविधजनकताद्वयसत्त्वादसम्भव एव स्यात् कथं प्रतिज्ञाविशेषेऽव्याप्तिरुक्तेति चेन्न स्वाभाववद्वृत्तित्व–स्वसामानाधिकरण्योभयसम्बन्धेन तथाविधजनकताविशिष्टजनकताशून्यत्वस्य विवक्षितत्वात । सामानाधिकरण्यञ्च विशेषणविधया निवेश्यम् नोपलक्षणतया तेन प्रतिज्ञाहेत्वादिविषयकसमूहालम्बनान्तर्भावेन प्रतिज्ञाज्ञानीयजनकत्वहेतुज्ञानीयजनकत्वयोः सामानाधिकरण्येऽपि नोक्तदोषतादवस्थ्यम् ।

अथवा तथाविधजनकताद्वयशून्यत्वेत्यस्य तथाविधजन्यताद्वयशून्यत्वमित्यर्थकरणान्नासम्भवः । शून्यत्वप्रतियोगित्वञ्च स्वनिरूपितजनकतावच्छेदकविषयतावत्त्व–स्वनिरूपितजनकतानवच्छेदकविषयितावत्त्वोभयसम्बन्धावच्छिन्नम् । एतच्चावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वमभ्युपेत्य, तदनभ्युपगमे तु उक्तसम्बन्धघटकस्वनिरूपितजनकता इत्यत्र स्वावच्छेदकधर्मावच्छिन्नजन्यतानिरूपितजनकता निवेशनीयेति ध्येयम् ॥ १२ ॥

अथ किमिदं व्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वम् ? न तावत् व्याप्यत्वव्यापकत्वान्यतरसम्बन्धेन तादृशजनकताविशिष्टान्यजनकताशून्यत्वं जनकताया विषयतासमसंख्याकत्वे जनकताविशिष्टान्यजनकत्वस्यैवाप्रसिद्धेः । न च स्वसमानाधिकरणाभावप्रतियोगित्वे सति स्वव्याप्यत्व–स्वाभाववद्वृत्तित्वे सति स्वव्यापकत्वान्यतरसम्बन्धेन जनकतावैशिष्ट्यनिवेशान्नाप्रसिद्धिरिति वाच्यम् पर्वतो धूमादालोककालीनवह्निमान् धूमादित्यादौ ता-

वता जनकताविशिष्टान्यतथाविधजनकत्वाप्रसिद्धेरिति चेदत्राहुः-

व्याप्यव्यापकभावानापन्नत्वं परस्परव्यभिचारित्वन्तथा च स्वाभाववद्वृत्तित्व-स्वसमानाधिकरणाभावप्रतियोगित्व-स्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन तथाविधजनकताविशिष्टतथाविधजनकताशून्यत्वं, स्वव्याप्यत्वस्वव्यापकत्वान्यतरसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्व—स्वसामानाधिकरण्योभयसम्बन्धेन जनकताविशिष्टतथाविधजनकताशून्यत्वं वा समुदितार्थः । सामानाधिकरण्यञ्च विशेषणविधया निवेश्यं नातः समूहालम्बनान्तर्भावेन सामानाधिकरण्यमादाय दोषः ।

अथवा स्वाश्रयत्व—स्वविशिष्टजनकताश्रयत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकतथाविधजनकताशून्यत्वमेवार्थः । सम्बन्धघटकस्ववैशिष्ट्यञ्च प्रागुक्तस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन इति न काप्यनुपपत्तिः ।

अत्रकल्पे धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यादिप्रतिज्ञाहेतुसमुदायातिव्याप्तिस्तदुभयविषयकज्ञाने तादृशजनकताद्वयशून्यत्वादतो वस्तुतस्त्वित्यादिना स्वानवच्छेदकविषयताविशिष्टतादृशजनकतानाश्रयत्वं ज्ञाने विशेषणं देयमिति कल्पान्तरमुक्तं भट्टाचार्येण । अत्र चान्यतमजन्यतानिरूपितयादृशजनकतावच्छेदकीभूतविषयताश्रयवस्तुसमुदायत्वमादाय लक्षणं सङ्गमनीयम् । स्वपदं तादृशजनकतापरमन्यथा प्रतिज्ञाविषयकज्ञानेऽपि हेत्वर्थविषयकबुद्धित्वाद्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रतिज्ञात्वावच्छिन्नविषयताश्रयतादृशजनकताश्रयत्वसत्त्वेनासम्भवापत्तेः । तथा च यत्रावयवे लक्षणं सङ्गमनीयम् तदवयवविषयकज्ञानत्वावच्छिन्नजनकतैव स्वपदेन धर्तव्या इति नानुपपत्तिः । अत एव स्वपदेन प्रतिज्ञासहकारेण हेतुजन्यबोधीयजनकतामादाय प्रतिज्ञाहेतुसमुदायातिव्याप्तिवारणाय तत्तदर्थविषयकशाब्दत्वपर्याप्तावच्छेदकताकत्वनिवेशनमपि सफलम् । न चैवमपि प्रतिज्ञादिविषयकज्ञानीयपत्वादिप्रकारतानिरूपितनिरवच्छिन्नविषयताव्यक्तीनां जनकतानवच्छेदकतयाऽसम्भवापत्तिरिति वाच्यम् स्वानवच्छेदकविषयतायाः किञ्चिदवच्छिन्नत्वेन विशेषणीयत्वात् ।

वस्तुतो यदीत्यादिना ग्रन्थकृतैव स्वानवच्छेदकविषयताया-

स्तादृशजनकतावच्छेदकत्वेन विशेषणीयतया निरवच्छिन्नविषयतामादाय नासम्भवावकाशः।

अथ स्वानवच्छेदकविषयताशून्यत्वनिवेशेनैव सामञ्जस्ये स्वानवच्छेदकविषयताविशिष्टजनकतानाश्रयत्वपर्यन्तनिवेशो व्यर्थ इति चेदत्र केचित्–स्वानवच्छेदकविषयताशून्यत्वमात्रनिवेशो प्रतिज्ञादिस्थानीयनिरवच्छिन्नविषयितामादायासम्भवः। उदासीनविषयतामादायोदासीनविषयतानियतविषयिताकावयवव्यक्तावव्याप्तिर्वा स्यादतः तादृशविषयताविशिष्टतथाविधजनकताशून्यत्वपर्यन्तानुधावनम्, तन्निवेशे च स्वावच्छिन्नत्व—स्वसामानाधिकरण्योभयसम्बन्धेन तादृशविषयतावैशिष्ट्यनिवेशान्नोक्तदोषः। न चैवं यदिचेत्याद्युत्तरग्रन्थविरोधः एतद्ग्रन्थस्याप्यत्रैव तात्पर्यात् इत्याहुः।

वस्तुतः स्वानवच्छेदकविषयताशून्यत्वनिवेशे स्वत्वघटितत्वादननुगमः, अन्यतमजन्यतानिरूपितयज्जनकतानवच्छेदकविषयताशून्यत्वनिवेशेऽपि यत्किञ्चित्त्वघटितत्वात् तथैवेत्यतः स्वानवच्छेदकविषयतावत्त्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन तथाविधजनकतावत्त्वमेव ज्ञानविशेषणं वाच्यम्। एतादृशानुगमलाभायैव तथाविधजनकतानाश्रयत्वपर्यन्तानुधावनमिति ध्येयम्।

यत्तु स्वत्वस्याननुगततया प्रतिज्ञादौ नानुगतलक्षणनिर्वाह इति स्वानवच्छेदकविषयताविशिष्टं यद्यत्स्वं तत्तदभावकूटवत्त्वमेव निवेश्यम्। तत्र हेतुज्ञानत्वावच्छिन्नजनकता न निवेश्या किन्तु तदन्यचतुष्टयजनकतैवातो धूमादालोकवान् पर्वतो वन्हिमान्धूमादित्यादौ प्रतिज्ञायां नाव्याप्तिः। एवञ्च जनकतानाश्रयत्वपर्यन्तखण्डनशङ्कैव नोदेतीति।

तत्तुच्छम्। ईदृशरीत्यैव प्रतिज्ञाहेतुसमुदायवारणसम्भवे तत्तदर्थविषयकशाब्दत्वपर्याप्तावच्छेदकताकत्वनिवेशवैयर्थ्यापत्तेः। स्वमते च प्रतिज्ञाहेतुज्ञानत्वावच्छिन्नजनकत्वं स्वपदेनोपादाय प्रतिज्ञाहेतुसमुदायातिव्याप्तिवारणाय पर्याप्तिनिवेशस्यावश्यकत्वात्। समूहालम्बनज्ञानान्तर्भावेन सर्वासामेव जनकतानां स्वानवच्छेदकविषयताविशिष्टतया तत्तज्जनकत्वाभावकूटस्य प्रतिज्ञादिविषयकज्ञानेऽप्यसत्त्वादसम्भवापत्तेश्च।

नव्यास्तु स्वत्त्वस्याननुगतत्वात्सामान्यतो विषयिताविशिष्टताहशजनकताशून्यत्वमेव यत्किञ्चिज्ज्ञाने निवेशनीयम्। विषयितावैशिष्ट्यञ्च स्वसामानाधिरण्य-स्वानवच्छिन्नत्व-स्वावच्छिन्नताहशजनकत्वाव्यापकत्वैतत्त्रितयसम्बन्धेन। असंभववारणाय प्रथमसम्बन्धानिवेशः। धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यादौ स्वपदेन प्रतिज्ञाघटकधूमादिविषयतामादाय प्रतिज्ञादावव्याप्तिवारणाय द्वितीयसम्बन्धनिवेशः। अत्रैव स्वपदेन प्रतिज्ञाघटकपर्वतविषयितामादायाव्याप्तिवारणाय तृतीयसम्बन्धनिवेशः। अत्रैव वह्निमद्विषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितैकदेशीयजनकतामादायाव्याप्तिवारणाय तृतीयसम्बन्धघटकजनकतायां ताहशत्वनिवेशः। एवमुक्तस्थल एव प्रतिज्ञाविषयकज्ञानस्य यथोक्ततृतीयसम्बन्धेन स्वघटकीभूतधूमादिभागविषयताविशिष्टवह्निमद्विषयकबुद्धित्वावच्छिन्ननिरूपितजनकतावत्त्वेनाव्याप्तिरतस्तद्वारणाय शून्यत्वप्रतियोगिजनकतायां ताहशत्वनिवेशः। एवमुक्तस्थले प्रतिज्ञाहेतुसमुदायज्ञानस्योक्तत्रितयसम्बन्धेन प्रतिज्ञाविषयतानन्तःपाति-धूमादिति-भागविषयिताविशिष्टप्रतिज्ञाजनकतावत्त्वेन प्रतिज्ञाहेतुसमुदाये नातिव्याप्तिः। यदि चेत्यादिग्रन्थस्याप्यत्रैव तात्पर्यमिति।

एतेन ताहशान्यतमजन्यतानिरूपितयत्किञ्चिज्जनकतावच्छेदकविषयितया ताहशविषयिताविशिष्टतथाविधजनकतया वा शून्ययत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुसमुदायत्वमात्रस्योक्तावपि सामञ्जस्ये यत्किञ्चिज्ज्ञानीयविषयितायां पुनस्ताहशान्यतमजन्यतानिरूपितजनकतावच्छेदकपर्यन्तानिवेशो व्यर्थः, प्रतिज्ञादिघटकवस्तुद्वयादिविषयकज्ञाने ताहशजनकताशून्यत्वसत्त्वेऽपि यत्किञ्चिज्ज्ञानीयविषयितायां सामान्यतो जनकतावच्छेदकत्वनिवेशेनापि वस्तुद्वयविषयकज्ञानमादाय वस्तुद्वयादावतिव्याप्तिवारणसम्भवादित्यपि प्रत्युक्तम्।

प्रतिज्ञाद्येकमात्रविषयकज्ञाने उक्तत्रितयसम्बन्धेन विषयिताविशिष्टताहशजनकताशून्यत्वसत्त्वेनैकदेशातिव्याप्तेः, उदासीनवाक्यविषयतानियतविषयताकावयवव्यक्तावव्याप्तेः, ताहशोदासीनवाक्यघटितताहशावयवात्मकसमुदायातिव्याप्तेश्चावारणीयत्वात् उदासीनविषयतानियतविषयताकज्ञानीयविषयताश्रयवस्तुसमु-

दायत्वस्योदासीनसाधारणत्वात् । स्वानवच्छेदकविषयितायाः स्व-तन्त्रतथाविधजनकतावच्छेदकत्वनिवेशपक्षेऽप्युक्तदोषवारणार्थमेव तद्दलसार्थक्यात् । तद्दलनिवेशे चैकदेशमात्रविषयकज्ञानीयतयोदासीनवाक्यविषयतायाश्च तथाविधजनकतावच्छेदकत्वाभावान्नोक्तदोष इत्याहुः ॥

यद्यप्येवं तादृशान्यतमजन्यतानिरूपितयत्किञ्चिज्जनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुसमुदायत्वमित्येव सम्यक् तथाविधयत्किञ्चिज्जनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुसमुदायत्वस्य प्रतिज्ञादिप्रत्येकावयवमात्र एव पर्याप्तत्वादिति स्वानवच्छेदक इत्यादि विशेषणं कथम् ? तथाप्यवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वास्वीकर्तृनये एकदेशमात्र एव तादृशयत्किञ्चिज्जनकतावच्छेदकविषयतायाः सत्त्वेनासम्भवापत्तेरित्युक्तप्रकारोपेक्षा । न चावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वास्वीकारे स्वानवच्छेदकीभूतपुच्छलग्नविषयताविशिष्टतथाविधजनकतानाश्रयत्वस्य कुत्राप्यवयवविषयकज्ञानेऽसत्त्वात् भवन्मतेप्यसम्भवतादवस्थ्यमिति वाच्यम् स्वानवच्छेदकविषयतापदेन स्वसमनियतजनकतानवच्छेदकविषयितायाः विवक्षितत्वात् । न चान्यतमजन्यतानिरूपितयत्किञ्चिज्जनकतासमनियतजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयिताश्रयवस्तुसमुदायत्वविवक्षणे मन्मतेऽप्यदोष इति वाच्यम् तस्य लक्षणान्तरत्वेनादूषकत्वादिति ध्येयम् ।

वस्तुतस्तादृशान्यतमजन्यतानिरूपितयत्किञ्चिज्जनकतानिवेशे वाक्यत्रयात्मकस्यैकजनकत्वाभावेनोदाहरणाव्याप्तिः तादृशयत्किञ्चिज्जनकतावच्छेदकविषयितायास्तद्घटकप्रत्येकवाक्य एव सत्त्वात् । न च स्वानवच्छेदकेत्यादिविशेषणदानेऽप्यप्रतीकार इति वाच्यम् तत्प्रतीकारस्याग्रे वक्ष्यमाणत्वात इति ध्येयम् ।

अत्रेदमालोचनीयम् । तादृशान्यतमजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुसमुदायत्वं न तादृशविषयताश्रयवस्तुवृत्तिसमुदायत्वं प्रतिज्ञाद्येकदेशेऽतिव्याप्तेः। नापि तादृशवस्तुत्वव्यापकसमुदायत्वं प्रतिज्ञामात्रविषयकज्ञानमादाय प्रतिज्ञाहेतुसमुदायातिव्याप्तिः प्रतिज्ञामात्रविषयकयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वव्यापकत्वस्य प्रतिज्ञाहेतुसमुदायेऽपि सत्त्वादतस्ता-

र्थविषयताश्रयवस्तुत्वसमनियतसमुदायत्वमेव वाच्यमत्र तादृशा-न्यतमजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्र-यवस्तुत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वनिवेशेनापि प्रतिज्ञाहेतुसमुदायवारणसम्भवे समनैयत्यघटकव्याप्यत्वनिवेशः स्वानवच्छेदकेत्यादिविशेषणप्रवेशश्च व्यर्थ इति । एवञ्च स-मानाकारकप्रतिज्ञाद्वयादेरलक्ष्यत्वे तद्वारणमपि सम्भवतीति । न-चैतल्लक्षणे तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वनिवेशे धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यादिस्थलीयप्रतिज्ञायाम-व्याप्तिस्तत्र हेत्वर्थविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनक-कतावच्छेदकीभूतयत्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुसमुदायत्वनि-ष्ठन्यूनवृत्तित्वानिरूपकत्वादिति वाच्यम् यज्जनकतावच्छेदकविषय-ताश्रयवस्तुत्वव्यापकमक्षतसमुदायत्वं तज्जनकतावच्छेदकीभूतय-त्किञ्चिज्ज्ञानीयविषयताश्रयवस्तुत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्ति-त्वानिरूपकत्वस्य विवक्षणेन प्रतिज्ञाजनकतामादायैव तत्र लक्षण-समन्वयात् । न चैवमननुगमः स्वानवच्छेदकयत्किञ्चिज्ज्ञानीयविष-यताश्रयवस्तुत्वव्यापकत्व—स्वावच्छेदकयत्किञ्चिज्ज्ञानीयविषयताश्र-यवस्तुत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वोभयसम्ब-न्धेन तथाविधजनकताविशिष्टसमुदायत्वस्य विवक्षितत्वादिति चेत्।

अत्राहुः—समनैयत्यानिवेशापेक्षयोक्तरीतौ लाघवानवकाशः । एवं समानाकारकप्रतिज्ञाद्वयस्यैव लक्ष्यत्वालक्ष्यत्वयोरुभयमतसाधार-ण्यानुपपत्तिः भवन्मते तत्राव्याप्तेरपरीहारात् । स्वमते तु तस्या-लक्ष्यत्वे तत्तत्समुदायभेदनिवेशेनैव वारणसम्भवः ल-क्ष्यत्वे तु सहजत एव सङ्ग्रहः । तस्य लक्ष्यत्वं प्रतिज्ञालक्षणे-पि ग्रन्थकृतैवोक्तम् । एवमेकावयवव्यक्तिविषयकज्ञानेऽवयवान्त-रविषयकत्वनियमे तादृशावयवद्वयेऽतिव्याप्तिश्च । स्वमते स्वा-नवच्छेदकेत्यादिविशेषणेनैव तद्वारणसंभवः । तादृशावयवव्यकाव-तिव्याप्तिश्चोभयत्रैवाशक्यपरीहारेति ध्येयम् ॥ १३ ॥

एतल्लक्षणे उदाहरणस्य वाक्यद्वयात्मकस्य सङ्ग्रहाय तत्पदप्रतिपाद्यसाध्यविशिष्टधर्मिविषयकशाब्दत्वावच्छिन्नजन्यता-तथाविधहेतुविशिष्टधर्मिविषयकशाब्दत्वावच्छिन्नजन्यता वा-न्यतमजन्यतागर्भे निवेशनीया तथाच तद्घटकप्रत्येकवाक्ये-

ऽतिव्याप्तिरित्युक्ता न चेत्यादिना उदाहरणज्ञानीयजनकताद्व-यस्यान्यतमशरीरे द्वित्वेन निवेशमाशङ्क्य व्यासज्यवृत्तिधर्मावच्छि-न्नानुयोगिताकभेदानभ्युपगमे उदाहरणातिव्याप्तिं दत्त्वाऽभ्युपेत्याति-व्याप्तिवारणेऽप्युदाहरणघटकभागद्वयेऽतिव्याप्तिर्दुर्वारा प्रतिज्ञाद्यघट-कत्वं निवेश्य तत्रातिव्याप्तिवारणे गौरवमित्यस्वरसबीजमुक्तं भट्टाचार्येण ॥

अथोदाहरणज्ञानीयजन्यताद्वयस्यान्यतमजन्यतानिवेशेऽप्युदाह-रणाव्याप्तितादवस्थ्यम्, उदाहरणविषयकज्ञानस्य स्वानवच्छेद-कविषयताविशिष्टतथाविधजनकतानाश्रयत्वाभावात् इति चेत्,

अत्रोच्यते स्वानवच्छेदकविषयताविशिष्टतथाविधजनकताना-श्रयत्वपदेन स्वाश्रयनिरूपितजनकतानवच्छेदकविषयिताविशि-ष्टतथाविधजनकतानाश्रयत्वं वक्तव्यम् । स्वपदञ्च निरुक्तान्यत-मत्वरूपभेदप्रतियोगितावच्छेदकधर्मपरम् । उदाहरणविषयकज्ञा-नीयजन्यताद्वयस्य चान्यतमत्वशरीरे न तत्तच्छाब्दत्वावच्छिन्नज-न्यतात्वेन निवेशः किन्तु द्वित्वेन तादृशजन्यताद्वयवृत्त्यन्यतमत्वे-न वा, तथाच निरुक्तभेदप्रतियोगितावच्छेदकं यदुदाहरणज्ञानी-यजन्यतावृत्तिद्वित्वादिकं तदाश्रयनिरूपितजनकतानवच्छेदकत्वं नोदाहरणविषयकज्ञानीयविषयतायामिति नाव्याप्तिः ।

केचित्तु स्वानवच्छेदकविषयिताविशिष्टतथाविधजनकताया-मुदाहरणज्ञानीयजनकताद्वयभिन्नत्वनिवेशान्नोदाहरणाव्याप्तिः । स्व-पदञ्चान्यतमजन्यतानिरूपितयत्किञ्चिज्जनकतापरमेव अत एव स्वा-नवच्छेदकविषयिताशून्यत्वनिवेशेनैव सामञ्जस्ये तथाविधजनकता-शून्यत्वपर्यन्तविवक्षा व्यर्थेत्यपि समाहितम् हेतूदाहरणसमुदायाति-व्याप्तिभिया स्वानवच्छेदकविषयितायामुदाहरणज्ञानीयविषयि-ताभिन्नत्वं निवेश्य उदाहरणस्य संगृहीतुमशक्यत्वात् हेतूदाहरण-समुदायज्ञाने हेतुज्ञानजनकतानवच्छेदकविषयिताशून्यत्वसत्त्वा-त्तादृशविषयताविशिष्टजनकताशून्यत्वनिवेशे च स्वानवच्छेदकोदा-हरणविषयिताविशिष्टोदाहरणज्ञानीयजनकताभिन्नहेतुज्ञानजनक-तावत्त्वेन तादृशविषयिताविशिष्टतथाविधजनकतानाश्रयत्वाभा-वेनातिव्याप्त्यनवकाशादिति । एवं प्रागुक्तनव्यास्तित्वत्यादिक-ल्पेऽप्युदाहरणसंग्रहाय प्रागुक्तत्रितयसम्बन्धेन सामान्यतो विष-

यिताविशिष्टतादृशजनकतायामुदाहरणज्ञानजनकताभिन्नत्वं निवेशनीयमिति प्राहुः ।

अथ जनकतायामन्यतमत्वं निवेश्यान्यतमशरीरे उदाहरणज्ञानीयजनकताद्वयस्य द्वित्वेन प्रवेशे तादृशान्यतमत्वरूपभेदप्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकधर्मविशिष्टयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णसमुदायत्वविवक्षणेनैव प्रतिज्ञाद्यघटकत्वमनिवेश्यापि उदाहरणैकदेशातिव्याप्तिवारणं सम्भवतीति । वैशिष्ट्यञ्च स्वाश्रयानवच्छेदकीभूतविषयितावैशिष्टजनकताशून्यत्व—स्वावच्छिन्नवत्त्वोभयसम्बन्धेन, तथाचोदाहरणज्ञानीयजनकतावृत्तितादृशभेदप्रतियोगितावच्छेदकद्वित्वमादायैवोदाहरणे लक्षणसमन्वयः एकदेशविषयकज्ञाने च निरुक्तोभयसम्बन्धेन तादृशोभयत्ववत्त्वासत्त्वान्नातिव्याप्तिरिति चेन्न यादृशावयवज्ञानं नियताप्रामाण्यज्ञानास्कन्दितं तत्रात्र्याप्तेस्तादृशावयवज्ञानस्योक्तसम्बन्धेनोक्तधर्मवत्त्वाभावात् , एवमुदासीनविषयतानियतविषयताकावयवव्यक्तावव्याप्तिश्च तादृशावयवव्यक्तिविषयकज्ञानीयविषयताश्रयवर्णसमुदायत्वस्योदासीनसाधारणतया तन्मात्रवृत्तेः । न च स्वानाश्रयानवच्छेदकविषयताविशिष्टजनकताशून्ययत्किञ्चिज्ज्ञानीयत्व—स्वाश्रयावच्छेदकत्वोभयसम्बन्धेन तादृशधर्मविशिष्टविषयताश्रयवर्णसमुदायत्वविवक्षणान्नोक्ताव्याप्त्यतिव्याप्ती इति वाच्यम् तथासत्युदाहरणैकदेशातिव्याप्तितादवस्थ्यादेकदेशमात्रविषयकज्ञानीयविषयतायामपि निरुक्तोभयसम्बन्धेन तादृशोभयत्ववत्त्वादिति ध्येयम् ॥ १४ ॥

साध्यनिर्देशः प्रतिज्ञेति सूत्रम् । साध्यो विधेयधर्मविशिष्टो धर्मी तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टसाध्यतावच्छेदकवह्नित्वादिविशिष्टवैशिष्ट्यज्ञानजनकं न्यायावयव इति पर्यवसितार्थः । उदाहरणाच्च साध्यतावच्छेदकविशिष्टज्ञानं न पक्षतावच्छेदकविशिष्टे उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदास इति चिरन्तनाः ।

यद्यपि साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानजनकत्वमात्रस्य निवेशे उपनयनिगमनयोरतिव्याप्तिस्तथापि यत्किञ्चिद्धर्मविशिष्टे शुद्धसाध्यतावच्छेदकविशिष्टबोधजनकत्वनिवेशे न तत्रातिव्याप्तिप्रस-

ज्ञः उपनयजन्यबोधे उपनयार्थव्याप्तिशरीरघटकसाध्यस्य धर्मितावच्छेदकाप्रवेशात् निगमनजन्यबोधे च साध्यांशे हेतुज्ञानज्ञाप्यत्वस्याधिकस्य भानात् अन्यथा पक्षतावच्छेदकान्तर्भावेऽप्यनुषङ्गप्रसङ्गनिस्तारात् इत्युदाहरणमात्रानुसरणम् तदापि उदाहरणजन्यबोधे ज्ञापकत्वं न विधेयतावच्छेदकतया भासते अपितु शुद्धवह्नित्वाद्यवच्छिन्नत्वमेव सकलहेत्वधिकरणे भासत इति प्राचीनमतमनुसृत्य इति भट्टाचार्येणोक्तम् ।

अथात्र शुद्धसाध्यतावच्छेदकावच्छिन्नत्वं यदि साध्यतावच्छेदकातिरिक्तानवच्छिन्नत्वं तदा किञ्चिद्धर्मविशिष्ट इत्यस्य वैयर्थ्यम् उपनयजन्यबोधीयसाध्यप्रकारताया हेतुव्यापकत्वेनाप्यवच्छेदात् । न च उपनयजन्यबोधे साध्यतावच्छेदक एव व्यापकतावच्छेदकत्वं भासत इति तदीयसाध्यप्रकारतायां साध्यतावच्छेदकातिरिक्तानवच्छिन्नत्वमक्षतमेवावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वानुपगमादिति वाच्यम् तथासत्यग्रे उदाहरणजन्यबोधे व्यापकत्वभानानङ्गीकर्तृप्राचीनमते दीधितिकारीयोदाहरणातिव्याप्तिदानसङ्गमनस्य सन्दर्भविरुद्धत्वापत्तेः । उदाहणजन्यबोधस्य साध्यतावच्छेदक एव व्यापकतावच्छेदकत्वावगाहितया तदीयसाध्यप्रकारतायां तादृशातिरिक्तानवच्छिन्नत्वस्याक्षतत्वात् । अत एव साध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकताकत्वं तदित्यपि प्रत्युक्तम् । उदाहरणादौ साध्यांशे व्यापकत्वभानाऽस्वीकर्तृप्राचीनमतानुसरणस्य सन्दर्भविरोधापत्तेः । साध्यतावच्छेदकव्यापकतावच्छेदकत्वभानस्वीकारे च किञ्चिद्धर्मविशिष्ट इत्यस्य वैयर्थ्यापत्तेः, उभयथा निगमनातिव्याप्तेः तत्र हेतुज्ञानज्ञाप्यत्वस्य धर्मितावच्छेदकतया स्वरूपत एव वह्नित्वादेर्भानात् । सखण्डसाध्यतावच्छेदकस्थले प्रतिज्ञायामव्याप्तेश्चेति चेत् साध्यतावच्छेदकातिरिक्तानवच्छिन्नत्वं साध्यतावच्छेदकतापर्याप्त्यधिकरणरूपपर्याप्तावच्छेदकताकत्वमेव वा शुद्धसाध्यतावच्छेदकावच्छिन्नत्वम् तथा चोदाहरणजन्यबोधे साध्यांशे व्यापकत्वभानेऽवच्छेदकतावच्छेदकत्वमते साध्यतावच्छेदकांशे व्यापकतावच्छेदकत्वभाने वा उदाहरणातिव्याप्तिर्न सम्भवतीति प्राचीनमतानुसरणम् । न च हेतुव्यापकसाध्यसमानाधिकरणहेतुमान्पक्ष इत्याका-

रूकोपनयजन्यबोधीयसाध्यप्रकारतायां निरुक्तशुद्धसाध्यताव- च्छेदकावच्छिन्नत्वविरहादेवोपनयवारणसम्भवात् किञ्चिद्धर्म इत्य- स्य वैयर्थ्यमिति वाच्यम् साध्यवदन्यावृत्तित्वरूपपर्याप्तिबोधको- पनये स्वरूपत एव साध्यतावच्छेदकभानात् तादृशोपनयवारणा- यैव तत्सार्थक्यात् । न च साध्यवदन्यावृत्तित्वरूपव्याप्तेरनुमित्युप- युक्तत्वमते वह्निमानेव धूमवानित्याकारकोदाहरणस्यैव प्रकृ- तोपयुक्ततया यो यो धूमवान् स वह्निमानित्याकारकोदाहरण- स्यानुयोगित्वेन तत्र व्यापकत्वभानाभिधानमसङ्गतमिति वाच्य- म् एतन्मतमाश्रित्यैव दीधितिकारेणोदाहरणव्याप्तिरुक्ता नतु व्या- पकसामानाधिकरण्यव्याप्तिविशिष्टहेतुमत्त्वबोधकोपनयस्वीकर्तृम- तेनेत्यावेदयितुमेव तथाभिधानादिति केचित् ।

नव्यास्तु हेतुव्यापकतावच्छेदकवह्नित्वावच्छिन्नसमानाधिक- रणहेतुमान्पक्ष इत्याकारकोपनयजन्यबोधीयसामानाधिकरण्यवि- शेषणीभूतवह्नित्वप्रकारतायां निरुक्तशुद्धसाध्यतावच्छेदकाव- च्छिन्नत्वासत्त्वेऽपि व्यापकतावच्छेदकधर्मितावच्छेदकवह्नित्वघट- कीभूतवह्नीतरावृत्तित्वघटकेतरत्वविशेषणीभूतवह्निप्रकारतायां शु- द्धसाध्यतावच्छेदकावच्छिन्नत्वस्याक्षततयोपनयातिव्याप्तिप्रसङ्ग इति तद्वारणाय किञ्चिद्धर्मविशिष्ट इत्यस्य सार्थक्यम् । नच व- ह्नित्वघटकेतरांशे इतरत्वत्वं धर्मितावच्छेदकीकृत्यैव वह्नेर्भानात् किञ्चिद्धर्मविशिष्ट इत्युपादानेऽप्यतिव्याप्तिर्दुर्वारेति वाच्यम् ता- दात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नीयवदवृत्ति- त्वस्यैव वह्नित्वघटकत्वात् । नच तथापीतरत्वांशे भासमान- प्रकारताया साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहादेवोक्ता- तिव्याप्त्यसम्भव इति वाच्यम् प्रतियोगितासम्बन्धेन वह्निसाध्य- कोपनय एव सम्भवादिति प्राहुः ।

केचित्तु अयस्पदस्याननुषङ्गपक्षे शुद्धसाध्यतावच्छेदकावच्छि- न्नत्वमनुपादायोपनयवारणार्थं किञ्चिद्धर्मविशिष्ट इत्येव निवेश्य- मनुषङ्गपक्षे तु किञ्चिद्धर्मविशिष्ट इत्यनुपादाय साध्यतावच्छेदका- वच्छिन्नत्वमेव निवेशनीयमिति पक्षद्वयाभिप्रायेण विशेषणद्वयम् । नचैवमनुषङ्गपक्षे तु निगमनेऽप्यतिव्याप्तिः सम्भवतीति वाच्यम् । तत्पक्षे निगमनातिव्याप्तिवारकप्रकारस्य केचिदित्यन्तेन स्वयमे-

वोक्तत्वादिति वदन्ति ॥ १५ ॥

सत्यन्तस्यावयवाघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य च वारणाय तदिति शिरोमणिः ।

अत्रायमाशयः । एतल्लक्षणघटकन्यायावयवत्वशरीरे उभयघटकभागद्वयाघटितत्वं न निवेशनीयम् अनतिरिक्तविषयकत्वनिवेशनेनैव तादृशभागद्वयसमुदायातिव्याप्तिवारणात् । न च शब्दज्ञानस्यैव शाब्दबोधजनकतया तज्जनकत्वमत्र जनकज्ञानविषयत्वमेव वाच्यम् एवञ्च तादृशभागद्वयघटितसमुदायविषयकज्ञानमप्येकदेशप्रतिज्ञाविषयकत्वेन तथाविधबोधजनकमिति प्रतिज्ञाहेतुसमुदायातिप्रसङ्ग इति वाच्यम् तादृशबोधजनकतावच्छेदकीभूतयत्किञ्चिदेकज्ञानविषयतानिरूपकवर्णसमुदायत्वस्य विवक्षणीयत्वात् । न च तादृशवर्णसमुदायत्वं तादृशवर्णत्वव्यापकसमुदायत्वं तादृशञ्च प्रतिज्ञाहेत्वादिसमुदायत्वमपीति तत्समुदायेऽतिप्रसङ्ग एवेति तादृशभागद्वयाघटितत्वमवश्यं निवेश्यमिति वाच्यम् अनतिरिक्तपदसाफल्याय तादृशयत्किञ्चिदेकज्ञानविषयताशालिवर्णत्वसमनियतसमुदायत्वमेव निवेश्य प्रतिज्ञाहेत्वादिसमुदायत्वस्य वारणीयत्वात् । समानार्थकप्रतिज्ञाद्वयादिविषयकयत्किञ्चिदेकज्ञानविषयताश्रयवर्णत्वसमनैयत्यस्य तादृशप्रतिज्ञाद्वयपर्याप्तसमुदायत्वे सत्त्वेऽपि न क्षतिः तदुभयादावपि प्रतिज्ञाव्यवहारात् अपि तु प्रतिज्ञैकदेशस्यापि तादृशबोधनिष्ठवह्निसम्बन्धिबुद्धित्वावच्छिन्ननिरूपितजनकतावच्छेदकीभूतयत्किञ्चिदेकसमूहालम्बनविषयताश्रयवर्णसमुदायत्वमादाय प्रतिज्ञात्वप्रसङ्ग इति प्रतिज्ञाद्यघटकत्वं प्रतिज्ञामात्राघटकत्वं वा निवेश्यमिति भट्टाचार्येणोक्तम् ।

अत्रेयमाशङ्का । प्रतिज्ञाघटकत्वविशेषणेनैव एकदेशातिव्याप्तिवारणसम्भवेन समनैयत्यघटकव्यापकत्वनिवेशो व्यर्थः केवलव्याप्यत्वनिवेशेनैव प्रतिज्ञाहेतुसमुदायवारणसम्भवादिति चेदत्राहुः—

समनैयत्यघटकव्यापकत्वानिवेशे पर्वतो वह्निमान् पर्वतो वह्निमान् इति प्रतिज्ञाद्वयविषयकज्ञानमादाय पर्वतो वह्निमान् पर्वत इति प्रतिज्ञाभागे प्रतिज्ञैकदेशघटितसमुदायात्मकेऽतिव्याप्तिस्तादृशसमुदायत्वस्यापि तादृशविषयताश्रयवर्णत्वव्याप्यत्वात् । न च समानाकारप्रतिज्ञाद्वये प्रतिज्ञात्वस्य स्वयमेवाङ्गीक-

तत्वेन प्रतिज्ञैकदेशघटितसमुदाये प्रतिज्ञाद्यघटकत्वाभावादेव नातिव्याप्तिरिति वाच्यम् तादृशप्रतिज्ञाद्वयस्य प्रतिज्ञात्वाङ्गीकर्तृमते पर्वतो वह्निमानित्यादिप्रतिज्ञाया अपि प्रतिज्ञाद्वयात्मकप्रतिज्ञाघटकत्वेनासङ्ग्रहभिया प्रतिज्ञयाऽघटिता या प्रतिज्ञा तद्घटकत्वस्यैव प्रतिज्ञाद्यघटकत्वपदेन विवक्षणीयतया उक्तसमुदायेऽपि तत्सत्त्वात् प्रतिज्ञात्वपर्याप्त्यधिकरणाविषयकप्रतीतिविषयतावच्छेदकधर्मभिन्नत्वरूपप्रागुक्तप्रतिज्ञाद्यघटकत्वस्य तत्र सत्त्वाच्च। न च समनैयत्यनिवेशेऽपि यत्किञ्चिज्ज्ञानपदेन प्रतिज्ञैकदेशविषयकज्ञानमादायोक्तातिव्याप्तितादवस्थ्यमिति वाच्यम् अन्यूनानतिरिक्तविषयकबोधनिष्ठजन्यतानिरूपितयत्किञ्चिज्जनकतावच्छेदकीभूतयत्किञ्चिज्ज्ञानीयाविषयताश्रयवर्णत्वसमनियतसमुदायत्वविवक्षणेनैव प्रतिज्ञाप्रतिज्ञैकदेशमात्रविषयकज्ञानमादायातिव्याप्तिवारणसम्भवात्। एतेन समानानुपूर्वीकप्रतिज्ञाद्वयस्य लक्ष्यत्वेऽपि विभिन्नानुपूर्वीकप्रतिज्ञाद्वयस्यालक्ष्यतया तत्रातिव्याप्तिस्तादृशप्रतिज्ञाद्वयविषयकज्ञानीयविषयतामात्रस्यैव तादृशबोधजनकतावच्छेदकत्वादित्यपि समाहितमिति ध्येयम्।

केचित्तु तादृशविषयताश्रयवर्णत्वव्याप्तसमुदायत्वनिवेशे प्रतिज्ञैकदेशेऽतिव्याप्तिरतो व्यापकत्वनिवेश इत्यभिप्रायेणाह नचेत्यादि। प्रतिज्ञाद्यघटकत्वनिवेशनवैयर्थ्यञ्च वस्तुत इत्यादिना स्वयमेव दास्यतीत्याहुः।

तन्मन्दम्। तादृशविषयताश्रयवर्णत्वव्यापकत्वनिवेशे दीधितिकारोक्तप्रतिज्ञाद्यघटकत्वविशेषणस्य प्रतिज्ञैकदेशातिव्याप्तिवारकतया सार्थक्यसम्भवे सत्यत्र व्यापकत्वं निवेश्याग्रे तद्वैयर्थ्यदानस्य सन्दर्भविरुद्धत्वात्॥ १६॥

अथात्र प्रतिज्ञामात्राघटकत्वनिवेशे उदाहरणघटकवह्निमानिति भागेऽतिव्याप्तिस्तत्राप्यन्यूनानतिरिक्तविषयकप्रतिज्ञामात्रजन्यबोधनिष्ठवह्निसम्बन्धिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकत्वस्य प्रतिज्ञामात्राघटकत्वस्य च सत्त्वात्। न च प्रतिज्ञात्वपर्याप्त्यधिकरणाविषयकप्रतीतिविषयतावच्छेदकधर्मभिन्नत्वरूपप्रतिज्ञामात्राघटकत्वमेव तत्र नास्तीति वाच्यम् प्रतिज्ञात्वपर्याप्त्यधिकरणाविषयकप्रतीतिविषयतावच्छेदकधर्मभिन्नत्वरूपप्रतिज्ञामात्राघटकत्व-

निवेशे तेनैव हेतुवारणसम्भवादन्यूनविषयकत्वदलवैयर्थ्यापत्तिरतः प्रतिज्ञावृत्तित्वे सति प्रतिज्ञात्वपर्याप्त्यधिकरणाविषयकप्रतीतिविषयतावच्छेदको यस्तदन्यत्वस्यैव प्रतिज्ञामात्राघटकत्वपदेन विवक्षणीयतया उदाहरणैकदेशेऽपि तत्सम्भवादिति ।

अत्र केचित् । फलोपधायकत्वरूपजनकत्वनिवेशनेनैवोदाहरणैकदेशवारणं सम्भवतीति तदभिप्रायेणैव प्रतिज्ञामात्राघटकत्वं निवेशितमित्याहुः ।

तन्न अन्यूनानतिरिक्ताविषयकबोधोपधायकत्वरूपजनकत्वस्य प्रतिज्ञैकदेशमात्रविषयकज्ञानेऽप्यसत्त्वेन प्रतिज्ञैकदेशेऽप्यतिव्याप्तिवारणसम्भवात् प्रतिज्ञामात्रघटकत्वविशेषणस्य वैयर्थ्यापत्तेः ।

परेतु एतत्कल्पे धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यादिस्थलीयहेत्ववयव इव उदाहरणैकदेशातिव्याप्तिरस्त्येवाग्रिमकल्प एव तद्वारणसम्भवादिति प्राहुः

प्रतिज्ञामात्राघटकत्वमेवेति वाकारोऽनास्थायामित्यपि कश्चित् ॥१७॥

प्रतिज्ञामात्रजन्यबोधनिष्ठधूमविशेषितहेतुत्वविषयकशाब्दत्वावच्छिन्नकारणधूमादित्यादिविषयकज्ञानविषयतामादाय अवयवाघटके धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादिस्थलीयहेतावतिव्याप्तिरतोऽनतिरिक्तविषयकबोधनिष्ठपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानविषयतानिरूपकवर्णसमुदायत्वमेव निवेशनीयम् तथा चावयवाघटकेत्यस्य वैयर्थ्यमित्याशङ्क्यावयवाघटकेत्यनेनावयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यत्वज्ञानवृत्तित्वावच्छिन्नभेदोऽन्यूनानतिरिक्तविषयकबोधजनकतायां निवेशितो भट्टाचार्येण ।

न च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नत्वस्य जन्यतायां निवेशेपि प्रतिज्ञैकदेशे वह्निमानिति भागेऽतिव्याप्तितादवस्थ्यमेव तादृशैकदेशीयजन्यतायामपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकत्वरूपान्यूनविषयकत्वावच्छिन्नत्वसत्त्वादिति तद्वारकतयैवावयवाघटकेत्यस्य सार्थक्यसम्भवेन कथं तद्वैयर्थ्यमुक्तमिति वाच्यम्

पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकताकजन्यताया एवान्यूनविषयकत्वावच्छिन्नजन्यतापदेन विवक्षितत्वादेकदेशीयजन्यतायाश्चातथात्वादन्यथा प्रकृतपक्षविशेष्यतानिरूपितप्रकृतसाध्यप्रकारतानिष्ठावच्छेदकताकत्वप्रकृतसाध्यप्रकारतानिरूपितप्रकृतपक्षविशेष्यतावच्छेदकत्वयोरेकतरस्य जन्यताविशेषणत्वे धूमनिष्ठहेतुत्वपक्षकधूमहेतुकयोर्हेत्ववयवयोरतिव्याप्त्यापत्तेरिति ध्येयम् ।

अथावयवघटकेत्यस्योक्तार्थकत्वेऽन्यूनविषयकत्वदलं व्यर्थम् धूमादालोकवान्पर्वतो वह्निमान् धूमादित्यादौ हेतुविषयकज्ञानत्वावच्छिन्नजनकताया अवयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यं यत्प्रतिज्ञाघटकधूमादिति—भागविषयकज्ञानं तद्वृत्तित्वेन लक्षणाघटकतया तादृशजनकतामादायोक्तस्थलीयहेत्ववयवातिव्याप्त्यनवकाशात् । न च हुताशनादालोकवान्पर्वतो द्रव्यवान्वह्नेरित्यादौ वह्नेरित्यानुपूर्वीज्ञानजनकताया अवयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यं यत् प्रतिज्ञाघटकहुताशनादिति-भागविषयकज्ञानं तद्वृत्तिभिन्नत्वेन तादृशजनकतामादाय हेत्ववयवातिव्याप्तिवारणाय तस्य सार्थक्यमिति वाच्यम् हुताशनज्ञानज्ञाप्यालोकवत्पर्वतत्वावच्छिन्नपक्षकद्रव्यसाध्यकस्थले वह्नेरालोकवान्पर्वतो द्रव्यवानित्याकारिकाया अपि प्रतिज्ञायाः सम्भवेन- प्रतिज्ञाघटकवह्नेरिति-भागविषयकज्ञानवृत्तित्वेन तादृशजनकताया लक्षणाघटकतया तादृशजनकतामादायातिव्याप्त्यनवकाशादिति चेत् ।

अत्र केचित्—महानसीयवह्नेरालोकवान् पर्वतो वह्नेरित्यादौ वह्नेरित्यानुपूर्वीज्ञानत्वावच्छिन्नजनकताया अवयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यं यत्प्रतिज्ञाघटकदेशविषयकं महानसीयवह्नेरित्यानुपूर्वीज्ञानं तदवृत्तित्वेन तादृशजनकतामादाय वह्नेरिति हेतावतिव्याप्तिवारणायान्यूनविषयकत्वदलसार्थक्यम् । महानसीयवह्नेरित्यानुपूर्वीज्ञानोत्तरं ज्ञानज्ञाप्यत्वं वह्नीयमित्याकारकबाधस्य सर्वानुभवविरुद्धतया वह्नेरित्यानुपूर्वीज्ञानत्वावच्छिन्नजनकतायां तादृशज्ञानावृत्तित्वस्याक्षतत्वादित्याहुः । तच्चिन्त्यम् ।

यत्तु निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभाववच्छे-

तुत्वविशिष्टपर्वतत्वावच्छिन्नपक्षकद्रव्यसाध्यकस्थले ताद्दशपक्षबोधकतदादिपदघटितसद्द्रव्यवान् धूमादित्यादौ धूमादित्यानुपूर्वीज्ञानजनकतायास्ताद्दशप्रतिज्ञादिघटकवस्तुविषयकज्ञानावृत्तित्वेन तामादाय हेत्ववयवातिव्याप्तिवारणाय तद्दलमिति।

तत्तुच्छम्। ज्ञानजन्यज्ञानविषयतात्वसामानाधिकरण्येन धूमाभावस्य पक्षताच्छेदकघटकत्वे ताद्दशविषयतात्वसामानाधिकरण्येन धूमकोटिकसंशयस्य प्रकृतपक्षे प्रकृतसाध्यावगाहिनिश्चयानिवर्त्यतया हेतुजन्यबोधस्य ताद्दशसंशयनिवर्तकत्वेनानतिरिक्तविषयकत्वाभावादतिव्याप्त्यनवकाशात्ताद्दशविषयतात्वावच्छेदेन धूमाभावस्य पक्षतावच्छेदकघटकत्वे च प्रतिज्ञाप्रतिपाद्यविशिष्टार्थाप्रसिद्ध्या ताद्दशवाक्यपञ्चकस्य न्यायत्वाभावादेवातिव्याप्त्यसम्भवात्।

नव्यास्तु धूमव्याप्यवद्धेतुत्ववदालोकवान्पर्वतो वह्निमान्धूमादित्यादौ हेत्ववयवातिव्याप्तिवारणायान्यूनविषयकत्वदलं हेतुत्वत्वावच्छेदेन धूमव्याप्यवत्त्वस्याप्रसिद्ध्या हेतुत्वत्वावच्छेदेन धूमव्याप्यवत्त्वस्य पक्षतावच्छेदकघटकत्वे न्यायत्वासम्भवेपि हेतुत्वत्वसामानाधिकरण्येन धूमव्याप्यवत्त्वस्य पक्षतावच्छेदकघटकतया तत्सम्भवात्। हेतुत्वसामानाधिकरण्येन धूमीयत्वाभावकोटिकस्य हेतुत्वं धूमीयं नवेति संशयस्य प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकनिश्चयानिवर्त्यत्वेपि हेतुत्वत्वसामानाधिकरण्येन धूमीयत्वप्रकारकहेतुजन्यबोधस्य ताद्दशसंशयानिवर्तकतया हेतुजन्यबोधेऽनतिरिक्तविषयकत्वस्य सत्त्वादिति प्राहुः।

वस्तुतस्तु प्रमेयनिष्ठं हेतुत्वं प्रमेयं प्रमेयात् हेतुत्वं प्रमेयनिष्ठहेतुत्ववत् प्रमेयादित्यानुपूर्वीप्रकारकज्ञानत्वावच्छिन्नजनकताया अवयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यज्ञानावृत्तित्वमक्षतमेव प्रमेयनिष्ठहेतुत्वमित्यानुपूर्वीज्ञानजनकताया भिन्नत्वात्। एवमुक्तस्थलीयहेतुजन्यबोधेऽनतिरिक्तविषयकत्वमक्षतमित्युक्तस्थलीयहेत्ववयवातिव्याप्तिवारणायैवान्यूनविषयकत्वदलमावश्यकम्। न च तथाप्यन्यूनानतिरिक्तविषयकबोधनिष्ठजन्यतानिरूपितजनकताविशेषो उक्तस्थले प्रतिज्ञायामव्याप्तितादवस्थ्यमिति वाच्यम् अन्यूनानतिरिक्तविषयकबोधे मुख्यविशेष्यताद्वयशून्यत्व

स्यापि निवेशनीयत्वादिति ।

एतेनावयवत्वपर्याप्त्यवच्छेदकेत्यादिकमनिवेश्य प्रतिज्ञात्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मविशिष्टव्यापकविषयताकान्यज्ञानावृत्तित्वं कथं न निवेशितम् तावतैव धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यादौ हेतावतिव्याप्तिवारणसम्भवादिति केषाञ्चित्प्रलपितमप्यपास्तम् ।

तथासति प्रतिज्ञाहेत्वन्तभागवारकतयाऽनतिरिक्तविषयकत्वदलस्य सार्थकत्वेपि अन्यूनविषयकत्वदलवैयर्थ्यापत्तेः । प्रतिज्ञात्वपर्याप्त्यवच्छेदकेत्यादिविशेषणेनैव हेत्ववयववारणादिति युक्तमुत्पश्यामः ।

परे तु हेतुत्वं वाच्यप्रमेयत्ववत् प्रमेयत्वादित्यादिन्यायान्तर्गतहेतावतिव्याप्तिवारकमेवान्यूनविषयकत्वदलं तज्ज्ञानजन्यशाब्दबोधस्यानतिरिक्तविषयकत्वात् तज्ज्ञाननिष्ठजनकतावदवयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यज्ञानावृत्तित्वस्य च सत्त्वादिति वदन्ति ।

नन्वेतत्कल्पे रमाधवः पूज्यो माधवत्वादित्यादिस्थलीय—रमाधवः पूज्य इति प्रतिज्ञाघटक–माधवः पूज्य इत्यादिप्रतिज्ञायामव्याप्तिः माधवः पूज्य इति प्रतिज्ञाविषयकज्ञानत्वावच्छिन्नजनकताया अवयवत्वपर्याप्त्यवच्छेदकीभूतयत्किञ्चिद्धर्मव्यापकविषयताकान्यं यत् रमाधवः पूज्य इति प्रतिज्ञाघटक—माधवः पूज्य इति भागविषयकज्ञानं तद्वृत्तित्वात् । न चावयवत्वपर्याप्त्यवच्छेदक इत्यत्रावयवत्वं प्रतिज्ञाद्यघटकत्वाघटितमेव वाच्यम् तथा च रमाधवः पूज्य इति प्रतिज्ञाघटक–माधवः पूज्य इति भागस्यापि प्रतिज्ञाद्यघटकत्वाघटितावयवत्वसत्त्वेन तद्विषयकज्ञानस्यापि तादृशविषयताकान्यत्वाभावादिति वाच्यम् धूमादिति—हेत्ववयवातिव्याप्तितादवस्थ्यादिति चेदेतदस्वरसेनैव वस्तुतस्त्वित्यादिकल्पान्तरमुक्तमित्याहुः ।

पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वमेवान्यूनविषयकत्वम् । अथ पक्षतावच्छेदकावच्छिन्नविषयताकत्वे साध्यतावच्छेदकावच्छिन्नप्रकारताकत्वमेवान्यूनविषयकत्वमिति कथं नोक्तम् । न च पक्षतावच्छेदका-

वच्छिन्नविशेष्यतानिवेशस्यावश्यकत्वे ज्ञाने तन्निरूपकत्व-निवेशमुपेक्ष्य प्रकारतायां तन्निरूपितत्वनिवेशे गौरवाभावान्न दोष इति वाच्यम् लाघवाभावेपि ज्ञाने तन्निवेशसंभवे तमुपेक्ष्य प्रकारतायां तन्निवेशस्य ग्रन्थकारीयरीतिविरुद्धत्वादिति चेन्न धूमादालोकवान्पर्वतो वह्निमान्धूमादित्यादिन्यायान्तर्गतहेतावतिव्याप्तिवारणायान्यूनविषयकत्वावच्छिन्नजन्यतानिवेशस्यावश्यकत्वे जन्यतायां पक्षविशेष्यकत्वावच्छिन्नत्वसाध्यप्रकारकत्वावच्छिन्नत्वयोर्निवेशापेक्षया पक्षविशेष्यतानिरूपितसाध्यप्रकारकत्वावच्छिन्नत्वनिवेशेनैव लाघवादिति ध्येयम् ॥ १८ ॥

अनतिरिक्तविषयकत्वं पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताविलक्षणविषयताशून्यत्वम् । तदर्थश्च तादृशप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यत्वम् । तत्र प्रतिबन्धकतायां तादृशनिश्चयत्वव्यापकत्वमनिवेश्य स्वरूपसम्बन्धरूपावच्छिन्नत्वनिवेशेऽन्यूनविषयकत्वदलवैयर्थ्यम् । धूमादालोकवान्पर्वतो वह्निमान्धूमादित्यादौ हेतुजन्यबोधस्य तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्य—हेतुत्वं धूमीयं नवेति—संशयप्रतिबन्धकत्वेनानतिरिक्तविषयकत्वाभावादिति भट्टाचार्येणोक्तम् ।

अथ उक्तस्थलीयप्रतिज्ञाजन्यबोधेऽपि तादृशप्रतिबन्धकताकान्य-हेतुत्वं धूमीयं नवेति—संशयप्रतिबन्धकत्वेनानतिरिक्तविषयकत्वाभावादेवोक्तस्थलीयप्रतिज्ञायामव्याप्तेरसम्भवेनान्यूनविषयकत्वदलवैयर्थ्याभिधानमनुचितमिति चेत्,

उच्यते—तादृशप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतावच्छेदकीभूतमुख्यविशेष्यताशून्यत्वनिवेशेनैवोक्तातिव्याप्तिवारणसंभवादिति । न चैवमुक्तस्थले तादृशमुख्यविशेष्यताशून्यप्रतिज्ञामात्रजन्यबोधकत्वस्य हेत्ववयवेऽपि सत्त्वेन हेत्ववयवातिव्याप्तिवारणायैवान्यूनविषयकत्वस्य सार्थक्यसंभवे कथं तद्वैयर्थ्यमुक्तमिति वाच्यम् निरुक्तमुख्यविशेष्यताशून्यज्ञानीयमुख्यविशेष्यतावच्छिन्नजन्यतानिवेशेनैवातिव्याप्तिवारणसंभवादिति ध्येयम् ।

अथ वा तादृशप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतावच्छे-

दकविषयताशून्यत्वं ज्ञानेऽनिवेश्य जन्यतायां तादृशसंशय-प्रतिबन्धकतावच्छेदकविषयत्वानवच्छिन्नत्वनिवेशेनैवावच्छेदकता-वच्छेदकसाधारणावच्छेदकत्वानङ्गीकृतमते पक्षविशेष्यत्वावच्छि-न्नजन्यतामादायोक्तप्रतिज्ञायां लक्षणसमन्वयान्नाव्याप्तिरिति । नच तथापि तादृशानिवेशे निगमनेऽतिव्याप्तिस्तादृशप्रतिबध्यता-शून्यो यो ज्ञानज्ञाप्यत्वादिसंशयस्तन्निवर्तकतावच्छेदकमुख्यवि-शेष्यताशून्यत्वस्य निगमनजन्यबोधे निरुक्तप्रतिबन्धकतावच्छे-दकविषयतानवच्छिन्नत्वस्य च जन्यतायां सत्त्वादित्यनतिरिक्तत्व-दलनिवेशोऽपि कार्य इति वाच्यम् साध्यतावच्छेदकपर्याप्त्यवच्छे-दकताकप्रकारताया निवेशात् साध्यतावच्छेदकपर्याप्त्यवच्छेद-कताकप्रकारत्वावच्छिन्नप्रतिबन्धकताकप्रतिबध्यताशून्यतादृशज्ञान-ज्ञाप्य-वह्निमान्नवेति-संशयप्रतिबन्धकतावच्छेदकमुख्यविशेष्यत्वा-दिशून्यत्वस्य निगमनजन्यबोधेऽसत्त्वादिति ध्येयम् ।

केचित्तु इतरभेदानुमापकलक्षणस्यावच्छेदावच्छेदेनानुमित्य-नुत्पादप्रयोजकाव्याप्तिरूपदोषापेक्षया विशेषणवैयर्थ्यरूपदोषस्यैव बलवत्त्वादिति वदन्ति ।

अत्र निश्चयत्वशरीरे पर्वताद्यप्रवेशे निश्चयत्वव्यापकप्रतिबन्ध-कत्वाप्रसिद्धिरुक्ता सा न सङ्गच्छते वह्निरवृत्तिरिति-ज्ञानीयप्रतिब-न्धकताया एव तादृशनिश्चयत्वव्यापकत्वादिति तु नाशङ्कनीयम् उक्तरीत्या तादृशप्रतिबन्धकत्वस्य प्रसिद्धत्वेऽपि असम्भववारणा-दप्रसिद्धिकथनेन तस्यैव सूचितत्वात् । वस्तुतः पक्षतावच्छेदक-साध्यतावच्छेदकोभयाप्रवेशे साध्यनिष्ठप्रकारताकनिश्चयत्वस्य वह्निमान्द्रव्यवानिति-निश्चयसाधारणतया तादृशनिश्चयत्वस्य कस्यां-श्चिदपि प्रतिबन्धकतायामसत्त्वेन वह्निरवृत्तिरिति—ज्ञानीयप्रतिब-न्धकतामादायापि न प्रसिद्धिसम्भव इति ध्येयम् ।

अथात्र पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यता-वच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानव-च्छेदकविषयताशून्यत्वविवक्षणेनैव सामञ्जस्ये गुरुतरनिवेशा व्यर्थ इति । न च इदो वह्न्यभाववानित्यादि—प्रतिज्ञायामव्याप्तिः अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वविशिष्टाभावविषयक-निश्चयत्वेनैव प्रतिबन्धकतयोक्तप्रतिज्ञाजन्यबोधे प्रतिबन्धकतान-

वच्छेदकीभूतवह्नित्वावच्छिन्नविषयतासत्त्वादिति वाच्यम् उक्तप्रतिज्ञाजन्यबोधीयवह्निविषयताया अपि वह्निज्ञानं जायतामितीच्छीयप्रतिबन्धकत्वात् । न च प्रतिबन्धकतानवच्छेदकीभूतनिरवच्छिन्नविषयतामादायासंभव इति वाच्यं ज्ञाने तादृशविषयताशून्यत्वमनिवेश्य जन्यतायां तादृशविषयत्वानवच्छिन्नत्वनिवेशेनैव निरवच्छिन्नविषयतामादायासम्भववारणसम्भवादिति सुधीभिर्भाव्यम् । इत्थञ्चानतिरिक्तविषयकत्वघटकसाध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नविषयतायां स्वनिष्ठत्वनिवेशेनैव न्यूनविषयकदर्शितहेतुजन्यबोधवारणसम्भवे पृथगन्यूनविषयकत्वनिवेशनमफलमित्यादि समाहितम् ॥ १९ ॥

तादृशविषयतायां स्वनिष्ठत्वनिवेशे निगमनादिजन्यबोधस्य ज्ञानज्ञाप्यत्वविशेषितसाध्यविशिष्टपक्षविषयताशालित्वनियमात् स्वनिष्ठानिरुक्तविषयताशालिनिश्चयत्वव्यापकप्रतिबन्धकताकज्ञानज्ञाप्यत्वादिसंशयान्यसंशयाप्रतिबन्धकतयाऽनतिरिक्तविषयकत्वापत्तेर्दुर्वारत्वादिति भट्टाचार्येणोक्तम् ।

अथान्यूनविषयकत्वस्य पृथगनुपादाने धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यादिस्थलीयहेत्ववयवे दर्शितानतिरिक्तविषयकप्रतिज्ञामात्रजन्यबोधनिष्ठ—हेतुत्वं धूमीयमिति—बोधीयजन्यतामादायातिव्याप्तिः । न च तदुपादानेपि प्रतिज्ञार्थमात्रविषयकबोधनिष्ठहेत्वर्थविषयकत्वावच्छिन्नजन्यतामादायोक्तातिव्याप्तिर्दुर्वारैवेति वाच्यम् जन्यतायां तादृशान्यूनविषयकत्वावच्छिन्नत्वनिवेशेनैव तद्वारणादिति ।

नैवम् स्वावच्छेदकीभूततादृशविषयताशालिनिश्चयत्वव्यापकप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यज्ञानवृत्ति यज्जन्यत्वं तन्निरूपितजनकताविवक्षणेनैव दर्शितातिव्याप्तिवारणसंभवात् । स्वपदं जन्यतापरं । दर्शितानतिरिक्तविषयकज्ञानीयप्रकृतपक्षविशेष्यकत्वावच्छिन्नजन्यतानिवेशेनैवोक्तातिव्याप्तिवारणसम्भवे प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वनिवेशो व्यर्थ इत्याहुः ॥ २० ॥

प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्त्यविषयकत्वं वा तदनतिरिक्तविषयकत्वमिति शिरोमणिः । यद्रूपावच्छिन्नविशेषितप्रकृत-

हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नवि-षयकनिश्चयत्वं प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितिज-नकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयकत्वमिति तु पर्यवसितम् । तादृशञ्च रूपं तत्तद्धेतुतावच्छेदकावच्छिन्नहेतुव्यापकसाध्यसामा-न्योऽनाधिकरण्यत्वं तत्तत्साध्यतावच्छेदकावच्छिन्नसाध्याभावव्याप-काभावप्रतियोगित्वञ्चेति भट्टाचार्येणोक्तम् ।

अथात्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेनैवोपपत्तौ अन-तिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशो व्यर्थः । न च वृत्तिधूमका-लीनवह्निसाध्यकधूमहेतुकप्रतिज्ञायामव्याप्तिस्तत्र परामर्शवि-षयतान्तःपातिवृत्तित्वविशेषितधूमविशिष्टपक्षविषयताशालिनिश्चय-त्वस्यापि स्वरूपसंबन्धानुमितिजनकतावच्छेदकतयोक्त-स्थलीयप्रतिज्ञाजन्यबोधे वृत्तित्वविषयताशून्यत्वाभावादिति वा-च्यम्, यद्रूपावच्छिन्नाविशेषितहेतुविशिष्टपक्षविषयतासामान्य-मनुमितिजनकतावच्छेदकं तद्रूपावच्छिन्नाविषयकत्वविवक्षणे-नैवाव्याप्तिवारणसम्भवात् । न च सामान्यपदस्य व्यापकतार्थक-तयाऽनतिरिक्तवृत्तित्वनिवेशापेक्षया लाघवानवकाश इति वाच्य-म् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वपक्षेऽप्रामाण्यज्ञानाभावादि-निवेशस्यावश्यकतया स्वमते तदप्रवेशेनैव विपरीतलाघवाव इति चेत् ।

अत्र केचित् । अप्रामाण्यज्ञानाभावस्य स्वातन्त्र्येणानुमितिहेतुत्व-मतेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वपक्षेऽप्यप्रामाण्यज्ञानाभावादिनि-वेशकृतगौरवाभावात् । न च तथाप्यनतिरिक्तवृत्तित्वनिवेशकल्पे निश्चयत्वनिवेशस्यावश्यकतया गौरवमिति वाच्यम् संशयवि-षयताया निश्चयत्वविषयतातो भिन्नत्वमते संशयविषयताया जनकतानवच्छेदकत्वेन भवन्मतेपि निश्चयत्वनिवेशस्यावश्यकत्वा-दित्याहुः । तच्चिन्त्यम् ।

अथ यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वमनुमितिजन-कतानतिरिक्तवृत्ति तद्रूपावच्छिन्नाविषयकत्वनिवेशेऽपि यद्रूपपदेन साध्यव्याप्यहेतुमत्पक्षतानवच्छेदकत्वमुपादायैवोपनयनिगमनयोर्वा-रणसंभवात् यद्रूपावच्छिन्नाविशेषितप्रकृतहेतुविशिष्टप्रकृतपक्षविषय-तेत्यादिकाभिधानमनर्थकमिति चेन्न लाघवेन तथाऽभिधानात्

लघुधर्मावच्छिन्नप्रतियोगिताकाभावनिवेशोऽभावप्रतियोगितावच्छेदककोटौ पर्याप्तिनिवेशकृतगौरवादिति केचित् ।

यत्तु यत्र स्थलविशेषे साध्यव्याप्यहेतुमत्पक्षविषयकपरामर्श एव यदङ्कुरविशेषस्य मानं तत्र यद्रूपवत्त्वेन तदङ्कुरस्यापि धर्तुं शक्यतया तदङ्कुरव्याप्तिघटितपक्षादिकताद्दशस्थलविशेषीयप्रतिज्ञायामव्याप्तिरतो यद्रूपावच्छिन्नविशेषितेत्याद्यभिधानमिति ।

तत्तुच्छम् अनुमितौ प्रतिज्ञाजन्यशाब्दबोधे च तदङ्कुरस्य भानेन तदङ्कुरविषयताया अनुमितिजनकतानतिरिक्तवृत्तित्वाभावात् । तत्र प्रतिज्ञाजन्यबोधोऽपि परामर्शात्मक एव जायते इत्यभ्युपगमे तु प्रतिज्ञात एव व्याप्त्यादिप्रतीतावाकांक्षाविरहेण उदाहरणाद्यनुत्थानात्तेन न्यायप्रयोगस्यैवासम्भवादिति ।

अथैतत्कल्पे सिषाधयिषाधीनन्यायप्रयोगानुपगमेन प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वविरहादेव नोदाहरणातिव्याप्तिः, हेत्वन्तभागे च सत्यन्तस्य न्यायत्वार्थकत्वाज्ञातिव्याप्तिरिति स्वयमेवोक्तम् । एवञ्च व्याप्त्यविषयकत्वदलं निगमनमात्रवारकमेव तथा च यद्रूपावच्छिन्नविषयतेत्याद्यनभिधायानतिरिक्तवृत्तित्वञ्चापहाय प्रकृतपक्षसाध्यहेतुकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतायाः स्वरूपसम्बन्धात्मकावच्छेदकतावद्विषयताशून्यत्वं कथं नोक्तं तावतैव निगमनवारणसम्भवात् । निगमस्थतत्पदस्य व्याप्तिपक्षधर्मताविशिष्टपरत्वेन निगमनजन्यबोधीयविषयताया अनुमितिजनकतावच्छेदकत्वात् । अत्र इदो निर्धूमो निर्वह्नित्वात् यो यो धूमवान् स वह्निमान् धूमव्यापकवह्न्यभाववांश्चायं तस्मान्निर्धूमवान् इत्यादिन्यायान्तर्गतनिगमनेऽपि नातिव्याप्तिः । अन्यथोक्तन्यायान्तर्गतोपनयनिगमनयोर्वह्निसामान्याभावत्वरूपप्रकृतहेतुतावच्छेदकरूपेण हेत्वभानात् यद्रूपावच्छिन्नविशेषितप्रकृतहेतुविशिष्टप्रकृतपक्षाविषयताशालिनिश्चयत्वमनुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नाविषयकत्वस्याक्षततयोक्तनिगमनवारणमशक्यमेव स्वमते चोक्तनिगमनजन्यबोधेऽप्यनुमितिजनकतावच्छेदकविषयतावत्त्वादेवातिव्याप्त्यनवकाशादिति ।

यत्तु नव्यमते व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानस्यै-

वानुमितिजनकतया पक्षवृत्तिसाध्यव्याप्यहेतुपरतत्पदघटितनिगमनेऽनुमितिजनकतावच्छेदकविषयताशून्यत्वस्याक्षततया निगमनातिव्याप्तिर्दुर्वारैव इति नोक्तप्रकारः साधीयान् । अत एव यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वमनुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयकत्वं कथं नोक्तमित्यपि समाहितम् उक्तक्रमेण निगमनातिव्याप्तेर्दुर्वारत्वात्, स्वमते च यद्रूपावच्छिन्नविशेषितहेतुविशिष्टपक्षविषयताशालिनिश्चयत्वमनुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नाविषयकत्वमिति यथाश्रुतदीधितिकारोक्तव्याप्तिविषयताशून्यत्वनिवेशाभिप्रायेणोक्तम्।

परमार्थतस्तु—यद्रूपावच्छिन्नविशेषितप्रकृतपक्षविषयताशालिनिश्चयत्वमनुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नाविषयकत्वस्यैव व्याप्त्यविषयकत्वपदेन विवक्षणीयतया ह्रदो निर्वह्नित्वादित्यादिस्थलीयप्रागुक्तव्यतिरेकिनिगमनेऽपि नातिव्याप्तिः । तत्र यद्रूपपदेन धूमव्यापकवह्न्यभावत्वमादायैवातिव्याप्तिवारणसम्भवादिति ।

तन्मन्दम् व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानस्यैवानुमितिजनकत्वमिति नव्यमते निगमनस्थतत्पदस्यापि साध्यव्याप्यहेतुमत्पक्षपरत्वावश्यकत्वेन तन्मते पक्षवृत्तिसाध्यव्याप्यहेतुपरतत्पदघटितनिगमनस्यैवाङ्गीकारात् । अन्यथा साध्यान्वितपञ्चम्यर्थे निगमनस्थतत्पदार्थस्यायोग्यतयाऽनन्वयापत्तेरिति सुधीभिर्विभावनीयम् ॥ २१ ॥

यादृशपक्षसाधिका पक्षे यादृशयादृशविशिष्टार्थबोधिकाः प्रतिज्ञाः सम्प्रदायसिद्धाः तादृशानां बोधानामन्यतमेनाप्यनिवर्त्यस्य संशयस्यानिवर्तको यस्तावतां बोधानामन्यतमो बोधस्तज्जनकत्वं मिति शिरोमणिः । अधिकन्त्वित्यादिन्यायेन साध्यांशे हेतुज्ञानज्ञाप्यत्वमवगाहमानेऽपि निगमनादिजन्यबोधे प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकत्वस्याक्षततया निगमनाद्यतिव्याप्तिवारणाय यद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकत्वरूपमनतिरिक्तविषयकत्वं बोधविशेषणम् । तदर्थश्च तादृशतादृशविशिष्टार्थविषयकनिश्चयत्वव्यापकप्रतिबन्धकतावच्छेदकविषयताशून्यत्वम् प्रतिज्ञाजन्यबोधस्य स्वसमानाकारकानुमितौ सिषाधयिषाविरहकालीनतादृशबोधाप्रतिबन्धकत्वात् तादृशानुमितेश्च सिषाधयिषाकालीनतादृशबोधा-

निवर्त्यतया तादृशनिश्चयव्यापकप्रतिबन्धकताकान्यत्वादसंभव इत्यतो ज्ञानसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनम् । प्रत्यक्षनिश्चये विशेषदर्शनकालीनविपरीतनिश्चयस्याप्रतिबन्धकत्वमते प्रत्यक्षनिश्चयस्यापि तादृशनिश्चयत्वव्यापकप्रतिबन्धकताकान्यतयोक्तदिशाऽसंभव इत्यतः प्रत्यक्षसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनमिति महाचार्येणोक्तम् ।

न च ग्राह्यप्रत्यक्षनिश्चयात्मक—उदासीनसंशयस्यापि प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकनिश्चयत्वव्यापकप्रतिबन्धकताकान्यत्वात् संशयत्वाच्च तादृशोदासीनसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यत्वस्य प्रकृतप्रतिज्ञाजन्यबोधेऽसत्त्वेन संशयपर्यन्तानुधावनेपि असम्भवतादवस्थ्यमिति वाच्यम् तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतानवच्छेदकसंशयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताशून्यत्वस्य विवक्षणीयत्वात्तथा चोदासीनसंशयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वं प्रतिज्ञाजन्यबोधे नास्तीति नोक्तदोषः । न च संशयत्वस्यार्थसमाजग्रस्ततया न प्रतिबध्यतावच्छेदकत्वमिति वाच्यम् प्रकारत्वावच्छिन्नप्रकारिताया एव संशयत्वरूपतया प्रकारितात्वेन तस्यापि प्रतिबध्यतावच्छेदकत्वात् । यद्यप्येवमपि स्मृतिनिवेशनेनैवोक्तदोषाणां वारणसम्भवे संशयत्वनिवेशो व्यर्थः । न च संशयसंशयत्वमादाय पर्यनुयोगस्तुल्य एवेति वाच्यम् स्मृतित्वस्य सर्वसिद्धजातितातया तन्निवेशे संशयत्वमादाय पर्यनुयोगाभावात्तथापि स्मृतिं प्रत्यनुभवसामग्रीविधयाऽनुमितिविधया वह्निव्याप्यसाध्यकप्रतिज्ञाजन्यबोधस्य प्रतिबन्धकतया तादृशनिश्चयत्वव्यापकप्रतिबन्धकताकान्यघटादिस्मृतिप्रतिबन्धकतावच्छेदकविषयताया व्याप्यसाध्यकप्रतिज्ञाजन्यबोधे सत्त्वेनाव्याप्तिरतः संशयपदोपादानमित्यवधेयम् ।

उपनयवारणाय लिङ्गाविषयक इति दीधितिग्रन्थः । अत्र लिङ्गाविषयकत्वानिवेशे निगमनेप्यतिव्याप्तिसंभवः तत्कथमुपेक्षितमित्याशंक्य वस्तुत इत्यादिना पक्षमुख्यविशेष्यकत्वनिवेशेपि गोत्वं सास्नाभाववत् गोत्वाभावादित्यादौ यत्र सास्ना तत्र गोत्वमित्यु-

दाहरणे पक्षमुख्यविशेष्यकज्ञानजनकेऽतिव्याप्तिर्दुर्वारैव पक्षमात्र-मुख्यविशेष्यकत्वनिवेशो च विश्वपक्षकस्थले मात्रार्थाप्रसिद्ध्याऽव्याप्तिरिति पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वमेव निवेशनीयम् । तथाच निगमनेऽननुषङ्गपक्षेऽतिव्याप्तिर्न सम्भवतीति भट्टाचार्येणोक्तम् ॥ २३ ॥

अथ पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वनिवेशेऽपि गोत्वपक्षककालिकसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वाभावहेतुकसमवायसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वाभावसाध्यकव्यतिरेक्युदाहरणस्य यत्र गोत्वं तत्र गोत्वमित्याकारकस्य पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकबोधजनकस्यावारणमेव उक्तोदाहरणजन्यबोधीयमुख्यविशेष्यताद्वयस्यैव पक्षतावच्छेदकीभूतगोत्वत्वावच्छिन्नत्वादिति । यदि च समवायसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वाभावसाध्यककालिकसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वाभावात्मकहेतुर्व्यभिचारी तस्य प्रतियोग्यनधिकरणदेशावच्छेदेन प्रतियोगिमत्यपि सत्त्वेन केवलान्वयित्वादतस्तत्र सदुदाहरणमेव नास्ति उक्तहेतोः साध्याभावे उक्तसाध्यस्य हेतुभावे सद्धेतुत्वेऽपि तत्र साध्यस्य केवलान्वयितया व्यतिरेकव्याप्त्यप्रसिद्ध्या व्यतिरेक्युदाहरणमेव नास्ति इति कुतोऽतिव्याप्तिरित्युच्यते तदापि समवायसम्बन्धावच्छिन्नाधारत्वसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वाभावहेतुकसमवायावच्छिन्नप्रतियोगिताकगोत्वाभावसाध्यकगोत्वपक्षकस्थलीय-यत्र गोत्वं तत्र गोत्वमित्युदाहरणे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकसमवायसम्बन्धावच्छिन्नप्रमेयाभावहेतुकप्रमेयपक्षकस्थलीय-यत्र प्रमेयं तत्र प्रमेयमित्युदाहरणे चातिव्याप्तिर्दुर्वारैवेति चेत्,

अत्राहुः-उक्तोदाहरणवारणाय स्वातन्त्र्येण स्वनिरूपकत्व-स्वभिन्नस्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतानिरूपकत्वोभयसम्बन्धेन पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतावदन्यत्वमपि बोधविशेषणं देयम् तथा चोदाहरणजन्यबोधस्य पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताद्वयनिरूपकतया न तादृशविशेषणत्वमिति नातिव्याप्तिः । अत्र धूमादालोकवान्पर्वतो वह्निमानित्यादिप्रतिज्ञाजन्यबोधे आलोकप्रकारतानिरूपिता या पर्वतत्वावच्छिन्न-

मुख्यविशेष्यता तन्निरूपकत्वस्य अधिकान्नित्यादिन्यायेन तदवच्छेदकधर्मावच्छिन्नसाध्यप्रकारतानिरूपितमुख्यनिरूपकत्वस्य च द्वयाः सत्त्वेन स्वपदेनालोकप्रकारतानिरूपितमुख्यविशेष्यतामादायाव्याप्तिः स्यादतः सामान्यतो मुख्यविशेष्यतावदन्यत्वमुपेक्ष्य पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतावदन्यत्वनिवेशः। द्वितीयसम्बन्धमध्ये स्वावच्छेदकतापर्याप्त्यधिकरणनिवेशो स्वपदेन साध्यप्रकारतानिरूपितमुख्यविशेष्यतामादायोक्ताव्याप्तितादवस्थ्यमतस्तन्निवेशः। तत्र स्वभिन्नत्वानिवेशे साध्यप्रकारतानिरूपितमुख्यविशेष्यतामादाय सर्वत्रासम्भवः स्यादिति तन्निवेशः। स्वपदेनोपनयादिजन्यबोधीयपक्षमुख्यविशेष्यतामादायासम्भववारणाय प्रथमसम्बन्धघटकनिवेशः। न च तथापि सास्नाभावसाध्यकगोत्वाभावहेतुकप्रागुक्तव्यतिरेक्युदाहरणवारणाय पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वनिवेशस्यावश्यकत्वे धूमादालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञायामव्याप्तिः तज्जन्यबोधे पक्षतावच्छेदकानवच्छिन्ना या आलोकप्रकारतानिरूपितमुख्यविशेष्यता तन्निरूपकत्वसत्त्वादिति, पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वपदेन पक्षतावच्छेदककोटिप्रविष्टधर्मानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वविवक्षणे च प्रमेयगोत्वत्वेन यत्र पक्षता पूर्ववद्गोत्वाभावस्य साध्यता हेतुता च तत्र यत्र गोत्वं तत्र गोत्वमित्युदाहरणातिव्याप्तिस्तज्जन्यबोधीयविशेष्यताद्वयस्यैव पक्षतावच्छेदककोटिप्रविष्टगोत्वावच्छिन्नत्वादिति वाच्यम्, पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वपदेन पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वानवच्छिन्नपक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वस्य विवक्षितत्वात्। न चैवं प्रागुक्तोभयसम्बन्धघटकीभूतद्वितीयसम्बन्धघटकस्वभिन्नमुख्यविशेष्यतायां स्वावच्छेदकावच्छिन्नत्वमनिवेश्य स्वानवच्छिन्नत्वानिवेशेनैव धूमादालोकवान्पर्वतो वन्हिमानित्यादि—प्रतिज्ञायामव्याप्तेर्यत्र गोत्वं तत्र सास्ना इत्यादि प्रागुक्तव्यतिरेक्युदाहरणातिव्याप्तेश्च वारणसम्भवेन पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वविशेषणं व्यर्थम्, तथासत्यननुपक्रपक्षेऽपि निगमनातिव्याप्तेर्दुर्वारत्वाद्विशेषणान्तरं प्रक्षिप्य विशेषणान्तरस्य खण्डनासम्भवाच्च। द्वितीयसम्बन्धघटकस्वभिन्नमुख्यविशेष्यतायां स्वावच्छे-

दकावच्छिन्नत्वदलस्याखण्डाभावघटकतयैव सार्थक्यादिति ध्येयम्।

वस्तुतस्तु पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वपदेन पक्षतावच्छेदकावच्छिन्नयत्किञ्चिद्विशेष्यताभिन्नमुख्यविशेष्यत्वानिरूपकत्वविवक्षणान्न कोपि दोषः। तादृशयत्किञ्चिद्विशेष्यताभिन्नमुख्यविशेष्यत्वानिरूपकत्वञ्च स्वभिन्नस्वावच्छिन्नमुख्यविशेष्यतानिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदत्वसम्बन्धेन पक्षतावच्छेदकावच्छिन्नविशेष्यत्ववत्त्वमतो नाननुगमः। सर्वत्रैव प्रतिज्ञायां स्वजन्यबोधीयप्रकृतपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतां स्वपदेनादाय लक्षणं सङ्गमनीयम्। प्रागुक्तव्यतिरेक्युदाहरणजन्यबोधेऽननुषङ्गपक्षे निगमनजन्यबोधे चोक्तसम्बन्धेन न कदाचिदपि पक्षतावच्छेदकावच्छिन्नविशेष्यताऽस्तीति न तत्रातिव्याप्तिरिति युक्तमुत्पश्यामः।

परे तु पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वपदेन मुख्यविशेष्यताद्वयशून्यत्वे सति पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताकत्वस्य विवक्षितत्वान्न प्रागुक्तव्यतिरेक्युदाहरणातिव्याप्तिर्वाऽननुषङ्गपक्षे निगमनातिव्याप्तिः। समानाधिकरणविशेष्यतायाश्चैक्यात् न धर्मितावच्छेदकप्रकारतानिरूपितमुख्यविशेष्यतामादायासम्भव इत्याहुः।

केचित्तु उदाहरणजन्यबोधे व्यापकत्वभानस्यावश्यकतया पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वपदेन पक्षतावच्छेदकतापर्याप्त्यनवच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकमुख्यविशेष्यत्वानिरूपकत्वस्य विवक्षणीयतया नोक्ताव्याप्तिः व्यापकत्वविशिष्टगोत्वत्वावच्छिन्नविशेष्यकयत्पदार्थवृत्तित्वप्रकारकोक्तोदाहरणजन्यबोधे पक्षतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकव्यापकत्वविशिष्टगोत्वत्वावच्छिन्नविशेष्यतानिरूपकत्वस्यैव सत्त्वात्। न च साध्याभावव्यापकत्वं यत्पदार्थवृत्तित्वञ्चैकत्र द्वयमिति रीत्याऽवगाहमानव्यतिरेक्युदाहरणजन्यबोधमादायातिव्याप्तितादवस्थ्यमिति वाच्यम् एकत्र द्वयमिति रीत्याऽवयवजन्यबोधस्य स्वयमेव खण्डितत्वादित्याहुः। तच्चिन्त्यम् ॥ २४ ॥ लिङ्ग·

वस्तुतो लिङ्गं लिङ्गित्वं तथा च प्रकृतहेतुताव०

-मकत्वौपयिकं यद्व्याप्तिविषय-
स्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकत्वौपयिकं यद्व्याप्तिविषय-
त्वं तच्छून्यत्वमर्थ इति शिरोमणिः ।

अथात्र किमिदं तादृशगमकत्वौपयिकत्वमित्याशङ्क्य प्रकृतपक्ष-
तावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयतानिरूपितवि-
षयतानिरूपितविषयतानिरूपितविषयत्वांशे प्रकृतानुमितिजनक-
तावच्छेदकतापर्याप्त्यधिकरणो यो धर्मस्तदवच्छिन्नविषयत्वाव-
च्छिन्नप्रतिबन्धकतावच्छेदकविषयतात्वेनोदाहरणजन्यबोधीयहेतु-
व्यापकसाध्यविषयतायाः साध्याभावव्यापकहेत्वभावविषयतायाश्च
सङ्ग्रहो बोध्य इति भट्टाचार्येणोक्तम् ।

नन्वत्र पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितादिचतु-
र्थीविषयतानिवेशेनैव सर्वत्र व्यतिरेकपरामर्शीयसांसर्गिकविषय-
त्वानिवेशेऽपि सामञ्जस्ये पञ्चमीविषयतानिवेशो व्यर्थ इति
चेन्न व्याप्तिघटकाधिकरणं साध्यप्रकारेणैव परामर्शे भासते न तु
अधिकरणत्वं धर्मितावच्छेदकीकृत्य साध्यं भासते तथा च त-
दंशे निर्धर्मितावच्छेदकतया तादृशचतुर्थीविषयतावच्छिन्नप्रति-
बन्धकत्वाप्रसिद्धेरिति तादृशपञ्चमविषयतानिवेशः । ननु हे-
तुतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतानिरूपितविषयता-
निरूपितविषयतायामित्यादिनिवेशस्यापि सम्यक्त्वे तादृश-
चतुर्थविषयतां परित्यज्य मुख्यविशेष्यताघटितपञ्चमविषयता-
निवेशो व्यर्थ इति चेन्न गोत्वाभावव्यापकसाध्याभाववृत्तिगो-
त्वाभावः सास्नाभाववान् गोत्वाभावव्यापकसास्नाभाववृत्ति-
गोत्वाभावादित्यादिस्थलीयप्रतिज्ञाजन्यबोधस्य सास्नाभावव्या-
प्यगोत्वाभावव्यापकसास्नाभाववृत्तिगोत्वाभाववान् गोत्वा-
भावव्यापकसास्नाभाववृत्तिगोत्वाभाव—इत्याकारकपरामर्शीयपक्ष-
तावच्छेदकावच्छिन्नमुख्यविशेष्यतात्मकहेतुविषयतानिरूपितवि-
षयताघटितहेतुतावच्छेदकान्तःपातिसास्नाभावविषयतात्मकचतु-
र्थविषयतांशे तादृशं यत् गोत्वाभावव्यापकत्वप्रकारतानिरूपितत्व-
विशिष्टसास्नाभावविषयतात्वं तदवच्छिन्नविषयत्वावच्छिन्नप्रति-
बन्धकतावच्छेदकीभूतविषयतावत्त्वेन तादृशप्रतिज्ञायामव्याप्तेरिति ।
यदि च तादृशीपञ्चमविषयतानिवेशेऽप्युक्तरीत्या हेतुतावच्छेदकसा-
स्नाभावविषयतायां सांसर्गिकविषयताघटितपञ्चमीविषयतात्मक-

तादृशप्रतिज्ञायव्याप्तिवारणाय प्रतिबन्धकतायां हेतुतावच्छेदकाव-च्छिन्नप्रकारताकनिश्चयत्वाव्यापकत्वं निवेश्यम्, एवं सति चतुर्थ-विषयतानिवेशकल्पेऽपि प्रतिबन्धकतायां प्रकृतहेतुप्रकारकनिश्चयत्वा-व्यापकत्वविवक्षणेनैव तादृशप्रतिज्ञायामव्याप्तिवारणसंभवे पक्षमुख्य-विशेष्यताघटितपञ्चमविषयतानिवेशो व्यर्थ इत्युच्यते तदा ह्रदो निर्धूमो निर्वह्नित्वादित्यादिस्थलीय-यो यो धूमवान् स वह्निमानित्या-कारकव्यतिरेक्युदाहरणेऽतिव्याप्तिः तादृशोदाहरणजन्यज्ञान-स्य धूमव्यापकवह्न्यभाववान्ह्रद इत्याकारकपरामर्शीय—हेतुता-वच्छेदकावच्छिन्नविषयताघटितकिञ्चिद्धर्मव्यापकत्वविशिष्टचतुर्थ-विषयत्वाप्रसिद्ध्या धूमव्यापकवह्न्यभावाभावप्रतियोगिवन्ह्य-भाववान् ह्रद इत्याकारकपरामर्शीयतादृशी या चतुर्थी विषय-ता तदवच्छिन्नप्रतिबन्धकतावच्छेदकीभूतविषयताशून्यत्वात्। यदि च धूमव्यापकवह्निप्रतियोगिवन्ह्यभाववान् ह्रद इत्या-कारकपरामर्शात्मकप्रकृतहेतुकानुमितिजनकज्ञानीयहेतुतावच्छेदकी-भूतवन्ह्यभावत्वावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपि-तप्रतियोगित्वविषयतानिरूपितवह्नित्वावच्छिन्नविषयतात्मकचतुर्थी-विषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य उक्तोदाहरणजन्यबो-धविषयतायां सत्वेन नोक्तोदाहरणेऽतिव्याप्तिरित्युच्यते तदाऽऽ-लोकव्यापकवह्निसमानाधिकरणधूमकालीनपर्वतो वह्निमान् धूमा-दित्यादिस्थलीयप्रतिज्ञायामव्याप्तिस्तज्जन्यबोधस्य तदीयपरामर्शी-यपक्षतावच्छेदकघटकहेतुविषयताघटितचतुर्थविषयत्वावच्छिन्नप्र-तिबन्धकतावच्छेदकीभूतविषयतावत्त्वात्, तादृशपञ्चमविषयतानि-वेशनमिति।

ननु प्रकारत्वविषयत्वयोरवच्छेद्यावच्छेदकभावस्य स्वमते स्वीकरणीयतया पक्षमुख्यविशेष्यतानिरूपितविषयतानिरूपितविषय-तेत्यादिग्रन्थस्य पक्षमुख्यविशेष्यतानिरूपिताविषयत्वावच्छिन्नविष-यतायां तात्पर्यं विवक्षणीयम्। एवं सति व्यतिरेकपरामर्शी-यमुख्यविषयतानिरूपितसांसर्गिकविषयतया सहावच्छेदकावच्छे-द्यभावविरहेण तादृशधर्मपुरस्कारेण व्यतिरेकव्याप्तिघटकवि-षयताया धर्तुमशक्यत्वात् व्यतिरेक्युदाहरणेऽतिव्याप्तिर्दुर्वारैवेति पूर्वपक्षः।

अत्रेदं समाधानम्—स्वानिरूपितत्व—स्वानिरूपितविशेष्यतानिरूपितप्रकारत्वावच्छिन्ननिरूपितत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन स्वविशिष्टत्वेन तृतीयाद्विविषयता निवेशनीया । स्वपदं पक्षमुख्यविशेष्यतानिरूपितविषयतापरं। सा च सांसर्गिकविषयता प्रकारतारूपा वा। यत्र वह्निव्याप्यधूमवान् पर्वत—इत्याकारकपरामर्शीयधूमनिष्ठप्रकारता स्वपदेन ध्रियते तत्र वृत्तित्वप्रकारतायां द्वितीयसम्बन्धविरहादेव निरुक्तभेदवत्त्वसम्बन्धेन द्वितीयवैशिष्ट्यं सुलभम् । यत्र वन्ह्याभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत—इत्याकारकपरामर्शीयसांसर्गिकविषयतात्वपदेन तत्र हेतुप्रकारतायाः प्रथमसम्बन्धविरहेण निरुक्तभेदवत्त्वसम्बन्धेन द्वितीयवैशिष्ट्यं सुलभम् । तथा च सांसर्गिकविषयतया सहावच्छेद्यावच्छेदकभावविरहेऽपि न क्षतिरिति भावः।

अथ वा स्वनिरूपितत्व-स्वावच्छिन्नविषयतानिरूपितत्वान्यतरसम्बन्धेन द्वितीयविषयतावैशिष्ट्यं तृतीयविषयितायां विशेषणीयमिति सांसर्गिकविषयतयाऽवच्छेद्यावच्छेदकविरहेऽपि न क्षति भावः।

अथवा पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयताविशिष्टविषयतानिरूपितविषयताविशिष्टविषयतानिरूपितविषयताविशिष्टविषयतानिरूपितविषयताविशिष्टविषयता पञ्चमविषयतापदेन विवक्षणीया। विषयतावैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसंबन्धेन तथाच वह्निव्याप्यधूमवान् पर्वत-इत्यादिपरामर्शीयपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितधूमनिष्ठप्रकारताविशिष्टधूमनिष्ठविशेष्यता-तन्निरूपितवृत्तित्वप्रकारताविशिष्टवृत्तित्वविशेष्यता एवम्प्रकारेण पञ्चमी विषयता ज्ञेया। तथा वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इति-व्यतिरेकपरामर्शीयमुख्यविशेष्यतानिरूपितसांसर्गिकविषयताविशिष्टस्वात्मकसंसर्गविषयता—तन्निरूपितहेतुप्रकारताविशिष्टहेतुविशेष्यता एवं क्रमेण च ज्ञेयेति विभावनीयम् ।

ननु वन्ह्यभावव्यापकाभावकालीनः पर्वतो वह्निमान्धूमादित्यादिप्रतिज्ञायसमव्याप्तिस्ताद्रप्रतिज्ञाजन्यबोधस्य तत्स्थलीयवन्ह्यभावव्यापकाभावप्रतियोगिधूमवान् पर्वत—इत्याकारकपरामर्शीयसांसर्गिकवि-

वबत्ताघटिताभावविषयतात्मकपक्षमाविषयत्वांशे विशेषणविधयाऽनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणं यद्वन्ह्यभावव्यापकत्वप्रकारतानिरूपितत्वसहिताभावविषयतात्वं तदवच्छिन्नप्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वादिति पूर्वपक्षः ।

अत्रेदं समाधानम्—व्यतिरेकपरामर्शे हेत्वभावत्वेनैव साध्याभावव्यापकत्वं भासते न त्वभावत्वेनैव तथासति तादृशप्रतिज्ञाजन्यबोधस्य तादृशपक्षमविषयत्वांशे विशेषणविधयाऽनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणं यत्साध्याभावव्यापकत्वविषयत्वानिरूपितत्वविशिष्टहेत्वभावत्वावच्छिन्नविषयतात्वं तदवच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतविषयताविरहेण तादृशप्रतिज्ञायां नाव्याप्तिरिति । न चाभावत्वावच्छेदेन वन्ह्यभावव्यापकत्वाभाववत्ताबोधप्रतिबन्धकताया अपि तादृशव्यतिरेकपरामर्शीयसाध्याभावव्यापकत्वप्रकारतानिरूपितहेत्वभावत्वावच्छिन्नविषयत्वावच्छिन्नतादृशप्रतिबन्धकतावच्छेदकत्वं तादृशप्रतिज्ञाजन्यबोधस्य साध्याभावव्यापकत्वप्रकारतानिरूपिताभावत्वावच्छिन्नविषयतायां सत्त्वेन तादृशप्रतिज्ञायामव्याप्तिर्दुर्वारणीयेति वाच्यम् तादृशपक्षमविषयतांशे विशेषणविधयाऽनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणयद्धर्मपर्याप्तावच्छेदकतावच्छेदकताकत्वेन प्रतिबन्धकताया विशेषणीयत्वात् तथाच प्रकृते तादृशी साध्याभावव्यापकत्वप्रकारतानिरूपितहेत्वभावत्वावच्छिन्नप्रतिबन्धकतैवातो न दोष इति । न च प्रतिबन्धकतायां तद्धर्मावच्छिन्नप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताशालिज्ञानत्वरूपनिश्चयत्वेनानवच्छिन्नतया तादृशपक्षमविषयत्वांशे विशेषणभूततादृशधर्मप्रतिबन्धकतावच्छेदकतायाः पर्याप्तिविरहेण तद्धर्मपर्याप्तावच्छेदकतावच्छेदकत्वेन प्रतिबन्धकताया निवेशयितुमशक्यतयोक्ताव्याप्तिवारणसम्भव इति वाच्यम् भट्टाचार्यमते तद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालित्वे सति तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकज्ञानान्यज्ञानस्यैव निश्चयत्वरूपत्वात् । तथाच प्रकृते तादृशपक्षमविषयतानिष्ठप्रतिबन्धकतावच्छेदकतायां तादृशपक्षमविषयत्वांशे विशेषणविधया तादृशं यत्तद्धर्मपर्याप्तावच्छेदकत्वं तत् सुलभमिति ध्येयम् ॥

ननु विशिष्टाभावादिकमादाय सर्वस्य हेतुसमानाधिकरणाभाव-प्रतियोगितया व्यापकत्वाप्रसिद्ध्या व्यापकतावच्छेदकताया अवश्यं विवक्षणीयतया हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नि-त्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इत्याकारकपरामर्शस्यै-वानुमितिहेतुत्वं विवक्षणीयम्। एवंसति वह्नित्वावच्छिन्नविषयताया एव पञ्चमविषमत्वात्तदवच्छिन्नप्रतिबन्धकत्वाप्रसिद्ध्याऽन्वय्युदाह-रणेऽतिप्रसङ्गः। न च शुद्धवह्नित्वावच्छिन्नविधेयताकानुमिति—वह्नित्वत्वादिनावह्नित्वावच्छिन्नविधेयताकानुमित्योर्जनकज्ञानवैलक्ष-ण्यानुरोधेन यत्र परामर्शे सामानाधिकरण्यघटकाधिकरणांशे शु-द्धवह्नित्वादिना वह्निर्भासते तस्यैव शुद्धवह्नित्वावच्छिन्नविधेयताका-नुमितिहेतुत्वं विवक्षणीयम् तथाच धूमव्यापकतावच्छेदकवह्नित्वव-द्वह्निसमानाधिकरणधूमवान् पर्वत इत्याकारकपरामर्शस्य शुद्धवह्नि-त्वावच्छिन्नविधेयताकानुमितिहेतुतया तादृशी या शुद्धवह्नित्वत्वाव-च्छिन्नवह्नित्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यतात्मकपञ्चमी-विषयता तदवच्छिन्नप्रतिबन्धकत्वप्रसिद्ध्या लक्षणसमन्वय इति वाच्यम् विशिष्टसाध्यतावच्छेदकस्थलीय यो यो धूमवान् स वह्नित्वव-त्वानित्युदाहरणेऽतिप्रसङ्गस्य दुर्वारत्वात्। विशिष्टसाध्यतावच्छेद-कपरामर्शीयतादृशपञ्चमविषयत्वावच्छिन्नप्रतिबन्धकताया अप्रसि-द्धत्वात्।

अत्रेदं समाधानम्—साध्यांशे निर्धर्मितावच्छेदकस्यापि ज्ञानस्य वह्नित्वावच्छिन्नमवृत्ति इत्याकारकबुद्धिं प्रति विरोधित्वात् तथा च प्रकृते तादृशपञ्चमविषयत्वावच्छिन्नप्रतिबन्धकताप्रसिद्ध्या लक्ष-णसमन्वय इति चिन्त्यम् ॥ २५ ॥

इतिश्रीकालीशङ्करसिद्धान्तवागीशविरचितम्
अवयवप्रकरणक्रोडपत्रम्।

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सटिप्पणं (सकराङ्गम)

# गादाधरीसामान्यनिरुक्ति-क्रोडपत्रम् ।

॥ श्रीगणेशायनमः ॥

॥ ॐनमः सरस्वत्यै ॥

अत्रानुमितिपदम् अनुमितिनिष्ठकार्यतानिरूपकसम्बधित्वेन अनुमितितत्कारणज्ञानपरमिति शिरोमणिः ॥ अत्र निरूपकत्वं यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियोगित्वाभावादनुमित्यसङ्ग्रहः । अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकस्य निरूपकत्वस्य लाभाय । अत्र पर्वतो वह्निमान् ह्रदश्च तथा इत्यादि-समूहालम्बनानुमितिविरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने दोषताप्रसङ्ग इत्यादिदूषणं द्वितीयकल्पानुसरणबीजमुक्तं भट्टाचार्य्यैः ॥

अत्रेदमालोचयामः । अथ स्वावच्छेदकत्वस्वनिरूपितकारणतावच्छेदकत्वान्यतरसम्बन्धेन प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितित्वावच्छिन्नकार्यताविशिष्टं यद्विषयत्वं तदवच्छिन्नप्रतिबध्यतानिवेशे नैष दोष इति पूर्वकल्पस्यैव निर्दोषत्वे कल्पान्तरानुसरणं निर्बीजमिति चेन्न, एवमपि प्रकृत्र द्वयमिति-रीत्या वह्निव्याप्यधूमवटवान् पर्वत इत्याकारकपरामर्शविरोधिज्ञानविषये घटाभाववत्पर्वते वह्निव्याप्यधूमघटोभयाभाववत्पर्वते चातिव्याप्तिरिति । न च निरुक्तान्यतरसम्बन्धेन तादृशकार्यताविशिष्टान्यविषयताशून्यज्ञानीयत्वस्य प्रतिबध्यताविशेषणत्वे नोक्तदोष इति वाच्यम् । परामर्शीयवह्नितोऽरत्वस्य कार्यतावच्छेदकत्वे पक्षसाध्यादिविषयतायाः प्रयोजनविरहेण कार्यतावच्छेदककोटावप्रवेशकल्पे बाधादेरसंग्रहापत्तेः बाधनिश्चयप्रतिबध्यतायां तादृशविषयताशून्यज्ञानीयत्वाभावादिति। एतेन प्रकृतपरामर्शजन्यतावच्छेदककोटिप्रविष्टविषयत्वावच्छिन्नत्वं प्रतिबध्यतायां निवेश्य भट्टाचार्योक्तदूषणवारणमित्यपि निरस्तम् ।

यत्पक्षकयत्साध्यकस्थले एकेनैव लिङ्गेनानुमितिस्तत्र प्रकृतपराम-
र्शाव्यवहितोत्तरत्वस्यापि कार्यतावच्छेदककोटाववेशेन व्यभिचारा-
दावव्याप्तेश्च । न च प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वव्यापक-
प्रतिबध्यत्वम् यच्च प्रकृतपक्षसाध्यहेतुकपरामर्शत्वव्यापकप्रति-
बध्यत्वम् एतदन्यतरनिरूपितप्रतिबन्धकतानिवेशे न कोपि दोष
इति वाच्यम् व्यापकत्वादेर्द्विधा निवेशेन गौरवादित्यालोच्य प्रकृत-
पक्षसाध्यप्रकारकप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकसमूहालम्बना-
नुमितित्वव्यापकत्वं प्रतिबध्यतायां निवेश्य कल्पान्तरानुसरणं
दीधितिकृता कृतम् । न चैतत्कल्पेऽपि वन्हिव्याप्याभाववत्
ह्रदादावतिव्याप्तिस्तस्य हेतुमत्ताग्रहाविरोधितया स्वरूपासिद्ध्यना-
त्मकत्वादिति वाच्यम् । तस्यापि व्याप्यत्वासिद्धित्वेन लक्ष्यताया
असिद्धिग्रन्थे "पक्षः साध्यवान् साध्यव्याप्यो हेतुः हेतुमान् पक्षः
इत्याकारकानुमितेः प्रकृते निवेशवारणसम्भवादिति बोध्यमिति"
मथुरानाथेन स्वीकृतत्वात् । आचार्यमतावलम्बनतोऽप्यनिस्ताराच्च ।
यत्तु प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वावच्छिन्नकार्यतासाक्षात्कार-
त्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकाविषय[redacted]त्वाव-
च्छिन्नत्वं प्रतिबध्यतायां निवेश्यमतः पूर्वकल्पेप्यतिव्याप्त्यनवकाशेन
कल्पान्तरानुसरणं निर्बीजमिति । तन्न तथाविधसाक्षात्कारत्वावच्छिन्नं
प्रति अनुमित्यात्मकसम्बन्धिव्यक्तिसाक्षात्कारत्वेन परामर्शात्मकसंब-
न्धिव्यक्तिसाक्षात्कारत्वेन च हेतुत्वं सम्बन्धिद्वयसाक्षात्कारस्य वाच्य-
म् । अतोऽनुमितिविषयतायाः परामर्शविषयतायाश्च तथाविधसाक्षा-
त्कारत्वावच्छिन्नजनकतावच्छेदकविषयतावत्त्वाभावात् तादृशविषय-
तावद्विषयत्वावच्छिन्नप्रतिबध्यताकप्रतिबन्धकतावच्छेदकाविषयताय-
दन्यत्वाद्बाधादावव्याप्तितादवस्थ्यात् । किञ्चानुमित्यादिविषयतायाः
तथाविधसाक्षात्कारजनकतावच्छेदकविषयतावत्त्वेऽप्येकत्र द्वयमिति
रीत्या प्रागुक्तज्ञानमादाय घटाभाववत्पर्वतादावतिव्याप्तितादवस्थ्या-
त् । न च तथाविधसाक्षात्कारजनकतावच्छेदकविषयत्वाभाववद्वि-
षयताशून्यज्ञानीयप्रतिबध्यतानिवेशे न कोपि दोष इति वाच्यम् एवमपि
परामर्शादिविषयतात्वेन घटादिविषयत्वावगाहिनो निरुक्तसम्बन्धि-
द्वयसाक्षात्कारस्यापि तथाविधकार्यतासाक्षात्कारजनकतया घटादि-
विषयताया अपि तादृशजनकतावच्छेदकविषयतावत्त्वेन घटाभावव-

त्वर्वताद्यावत्तित्व्याप्तिरिति कृतं पल्लवितेन ॥ १ ॥

स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वं सर्वांशे भ्रमभिन्नत्वं भट्टाचार्य्येण निवेशितम्(१)।

अथात्र स्वाधिकरणवृत्तित्वं स्वनिरूपितप्रकारतावच्छेदकसम्बन्धेन वाच्यम् अन्यथा संयोगेन वन्हिमान् ह्रद इत्यादिज्ञानस्यापि प्रमात्वापत्तेः वह्न्यादेः कालिकादिसम्बन्धेन ह्रदादिवृत्तित्वादिति। एवञ्च गुणे गुणान्यत्वविशिष्टसत्तावान् इति ज्ञानस्य संयोगेन गुणो गुणवान् इति ज्ञानस्य च प्रमात्वापत्तिः। आद्ये विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमेन सत्तावृत्तिगुणवृत्तित्वाभावस्य विशिष्टसत्तायामभावात्। द्वितीये च स्वनिरूपितप्रकारतावच्छेदकसम्बन्धेन गुणवृत्तित्वाप्रसिद्धेरिति। न च स्वनिरूपितत्व-स्वावच्छेदकीभूतधर्मावच्छिन्नाभाववद्वृत्तित्व-एतदुभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वमेव सर्वांशे याथार्थ्यं वाच्यमतो नोक्तदोष इति वाच्यम्। एवमपि रङ्गे स्वरूपतो रजतत्वप्रकारकमिदं रजतमित्यादिज्ञानस्य भ्रमभिन्नत्वापत्तिः। तत्र स्वावच्छेदकधर्माप्रसिद्ध्या स्वपदेन रजतत्वप्रकारताया घटुमशक्यत्वात्। न च स्वनिरूपितत्व-स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वमेव भ्रमभिन्नत्वं वाच्यम्, गुणादौ विशिष्टसत्तात्वविशिष्टवैशिष्ट्ययोगस्य तन्नियामकीभूतविशिष्टनिरूपितसमवायस्वरूपत्वाव्च्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वघटितदर्शितोभयसम्बन्धेन विशिष्टसत्तात्वावच्छिन्नप्रकारताविशिष्टविषयताकत्वेन निर्वाहः, रङ्गे स्वरूपतो रजतत्वप्रकारकज्ञानस्यापि दर्शितोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यताशालित्वात्

(टि०)[१] अथात्र स्वव्यधिकरणप्रकारावच्छिन्नत्वं स्वव्यधिकरणनिष्ठप्रकारतानिरूपितत्वं नतु तादृशप्रकारावच्छिन्नत्वं, विशेष्यतायां प्रकारावच्छिन्नत्वोपगमे घटावच्छिन्नविशेष्यकवह्निमत्ताबुद्धिम्प्रति गन्धाभावघटवानित्याकारकस्य एकत्र द्वयमिति रीत्या, निश्चयस्य प्रतिबन्धकत्वापत्तिः। तस्यापि घटावच्छिन्नविशेष्यकवह्न्यभावप्रकारकत्वात् मत एवाऽऽत्रयवग्रन्थे गन्धनिष्ठस्य गन्धत्वांशविशेष्यत्वस्य गन्धत्वानवच्छिन्नत्वादित्युक्तं जगदीशेनेति ध्येयम्।

भ्रमत्वनिर्वाह इति वाच्यम् । तावतापि विषयितासम्बन्धेन प्रकारत्वेन घटत्वानवगाहि–घटत्वत्वेन घटत्वावगाहि–ज्ञानधर्मिकस्य विषयतया घटत्वत्वेन घटत्वप्रकारकज्ञानस्य स्वावच्छेदकीभूतविषयत्वसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वघटितदर्शितोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यताशालित्वात् भ्रमत्वापत्तेः। एवं विषयितया प्रकारत्वेन घटत्वावगाहिज्ञाने विषयितासम्बन्धेन प्रकारत्वावच्छिन्नाभावासत्त्वेन तद्धर्मिकस्य विषयितासम्बन्धेन स्वरूपतो घटत्वादिप्रकारकभ्रमस्य दर्शितोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यत(ाशालि)त्वा(त्) यथार्थत्वापत्तेश्चेति ।

न्यत्वेन मैवम् स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकधर्मावच्छिन्नाभाववद्वृत्तित्व—स्वनिरूपितत्वोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यताशून्यत्वे सति स्वनिरूपितत्व-स्वाश्रयनिष्ठाधिकरणतात्ववत्त्वोभयसम्बन्धेन विशेष्यताविशिष्टनिरवच्छिन्नप्रकारताशून्यत्वस्य सामान्यतो भ्रमभिन्नत्वपदेन विवक्षितत्वात् । तादृशाधिकरणतात्ववत्त्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ग्राह्यम् । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं च स्वावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयनिष्ठनिरवच्छिन्ननिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन ग्राह्यम् स्वरूपतो घटत्वानवगाहि—घटत्वत्वेन घटत्वावगाहि–ज्ञानधर्मिकस्य विषयतया घटत्वत्वेन घटत्वप्रकारकज्ञानस्य प्रमात्वसम्पादनाय प्रकारतायां निरवच्छिन्नत्वनिवेशः । प्रकारत्वेन घटत्वावगाहिज्ञानधर्मिकस्य विषयतया स्वरूपतो घटत्वप्रकारकभ्रमस्य प्रमात्वापत्तिवारणाय सम्बन्धघटकनिरूपकतायां निरवच्छिन्नत्वनिवेशः(१) ॥

(टि०) (१)वस्तुतस्तु स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाभाववद्वृत्तित्व-स्वनिरूपितत्वोभयसम्बन्धेन विशेषणताविशिष्टविशेष्यत्वानिरूपकत्वे सति स्वनिरूपितत्व-स्वाश्रयनिष्ठाधिकरणतात्ववत्त्वोभयसम्बन्धेन विशेष्यताविशिष्टनिरवच्छिन्नविशेषणत्वानिरूपकत्वमेव भ्रमभिन्नत्वं वाच्यम् । स्वावच्छेदकावच्छिन्नाभाववत्त्वञ्च निरवच्छिन्नाधिकरणत्वम् । तेन कपिसंयोगवान् वृक्ष इत्यस्य न भ्रम-

अथ यद्रूपपदेन किं धर्तव्यम्? तत्र यदि सामानाधिकरण्यसम्बन्धेन वन्ह्यभावविशिष्टह्रदत्वमुच्यते तदा धर्मितावच्छेदकविधया ह्रदत्वानवगाहिनि सामानाधिकरण्यसम्बन्धेन वह्न्यभाववद्ह्रदत्ववानित्यादिज्ञानेऽपि यद्रूपावच्छिन्नविषयतायाः सत्त्वेन अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वादसम्भवः स्यात्। यदि च वह्न्यभावह्रदत्वोभयं गृह्यते तदा एकत्र द्वयमिति रीत्या तदुभयावगाहिज्ञाने तदुभयविशिष्टनिरूपितविषयतायाः सत्त्वेन अनुमितिप्रतिबन्धकतातिरिक्तवृत्तितयाऽसम्भवः स्यात् इति चेत्,—

अत्र केचित् यद्रूपावच्छिन्नविषयत्वं यादृशयादृशधर्मावच्छिन्ननिरूपितं तादृशतादृशधर्मावच्छिन्नविषयत्वाभावकूटवज्ज्ञानीयस्वरूपसम्बन्धरूपावच्छेदकतावत् यद्रूपावच्छिन्नविषयित्वं प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वं लक्षणम्। यद्रूपपदेन वह्न्यभावह्रदत्वोभयादिकमेव धर्तव्यम् एकत्र द्वयमिति रीत्या ज्ञाने यद्विषयत्वं तत्र स्वरूपसम्बन्धरूपावच्छेदकतावत्त्व इति तद्व्युदासः। वन्ह्यभावरूपैकदेशेऽपि नातिव्याप्तिः वह्न्यभावत्वावच्छिन्नविषयत्वे वह्न्यभावह्रदत्वोभयावच्छिन्नानिरूपितत्वं वर्तत इति तादृशोभयावच्छिन्ननिरूपितविषयत्वाभाववत् यत्केवलं वन्ह्यभावविषयकं ज्ञानं तदीयविषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्। एवञ्च जातिमान् वह्न्यभाववानित्यादिज्ञानवारणाय अव्याप्यीभूतविषयिताशून्यत्वं स्वतन्त्रं नास्ति पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणाय अनतिरिक्तवृत्तित्वप्रवेश इत्याहुः।

---

(टी०)त्वापत्तिः। प्रकारतास्थले विशेषणतानिवेशात् मूलावच्छिन्नो वृक्षः कपिसंयोगवानित्यादिज्ञानस्य वृक्षः सत्ताप्रतियोगिकसम्बन्धेन द्रव्यत्ववानित्यादिज्ञानस्य च न भ्रमत्वानुपपत्तिः। संसर्गसंसर्गतावच्छेदकादेः प्रकारत्वासत्त्वेऽपि विशेषणताया विशेष्यतायाश्च सर्वजनानुभवसिद्धत्वादिति। अतएव प्रतियोगितायां प्रमेयत्वाद्यवच्छिन्नत्वावगाहितया भ्रमत्वं संसर्गप्रकारसाधारणविशेषणविशेष्यभावस्यैव भ्रमत्वघटकत्वात्। अन्यथा स्वरूपसम्बन्धेन प्रमेयत्वावच्छिन्नप्रतियोगित्वस्यालीकतयाऽखण्डसम्बन्धेन प्रमेयस्याभावधर्मिणि अन्वयासम्भवेन भ्रमत्वानुपपत्तिरिति व्याप्तिपञ्चकग्रन्थे जगदीशिना-
मामिति ध्येयम्॥

तदसत् । गोत्वाभावो गोत्ववानित्याकारकभ्रमात्मकज्ञानीयविषयितामादाय गोत्वाभावेऽतिव्याप्तिः गोत्वाभावत्वावच्छिन्नविषयितायां गोत्वाद्यनिरूपितत्वासत्त्वात् ।

परेतु ह्रदाद्यंशे ह्रदत्वावच्छिन्नानुयोगिताकत्वविशिष्टस्वरूपसम्बन्धेन वह्न्यभावघटितं वह्न्यभाववद्ध्रदत्वमेव यद्रूपपदेन वक्तव्यम् । एकत्र द्वयमिति रीत्या ज्ञाने च ह्रदत्वावच्छिन्नानुयोगिताकत्वविशिष्टस्वरूपस्य संसर्गत्वं न स्वीक्रियते किन्तु ह्रदत्वादिधर्मितावच्छेदककज्ञान एवेति विशिष्टवैशिष्ट्यावगाहिबोधे च धर्मितावच्छेदकावच्छिन्नानुयोगिताकत्वस्य प्रकारसम्बन्धांशे नियतत्वादिति प्राहुः ।

केचित्तु वह्निधर्मितावच्छेदकतापन्नाभावत्वावच्छिन्नधर्मितावच्छेदकतापन्नह्रदत्वादिकमेव यद्रूपपदार्थ इति ।

तदपि न, पर्वतो वह्न्यभाववानित्यादिभ्रमविषयपर्वतादावतिव्याप्तिः । यदि च तादृशधर्मितावच्छेदकतापन्नं यद्वन्ह्यभाववद्ध्रदत्वादिकं तदेव यद्रूपपदेनोच्यते तदा नोक्तदोष इत्यवधेयम् ।

नव्यास्तु प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिकविषयितानिरूपकतावच्छेदकताश्रयत्वमेव यद्रूपं तादृशरूपवत्त्वं वा समुदितलक्षणार्थः । प्रतिबन्धकतावृत्तित्वं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन बोध्यमिति प्राहुः ॥ २ ॥

यद्विषयकत्वेन यादृशविशिष्टविषयकत्वेन तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्ग इति शिरोमणिः । यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनानुमितिप्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषसम्बन्धावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतादिनिष्ठप्रकारताकत्वेन विरोधित्वात्तेन सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रकृतधूमादिहेतावसत्त्वात्तत्र दुष्टत्वव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यकेत्युक्तमिति गादाधरी(१) ।

---

(टि०)(१) ननु सामानाधिकरण्येन वह्निसाध्यकस्थले पर्वतत्व-

अथ यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेन अनुमितिप्रतिबन्धकत्वम् तत्सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे धूमत्ववान्पर्वतो वह्निमान् धूमादित्यादौ धूमादेर्दुष्टत्वानुपपत्तिः(१) स्वरूपसम्बन्धावच्छिन्नधूमत्वाभावप्रकारकत्वेनानुमितिप्रतिबन्धकतया तेन सम्बन्धेन धूमत्वाभावादेर्धूमादावसत्त्वात् । न च धूमत्वे पर्वतावृत्तित्वप्रकारकज्ञानस्यापि विरोधितया समवायसम्बन्धावच्छिन्नपर्वतवृत्तित्वाभावादेः स्वरूपसम्बन्धेन धूमादौ सत्त्वान्न तत्र दुष्टत्वानुपपत्तिरिति वाच्यम् । तावतापि रूपत्ववान्पर्वतो वह्निमान् तद्रूपादित्यादौ दुष्टत्वानुपपत्तेः । यदि च रूपत्वनिष्ठाधेयतायां पर्वतनिरूपितत्वाभावस्यापि अनुमितिप्रतिबन्धकतावच्छेदक-

---

(टि०)व्यापकवह्न्यभावप्रतियोगिकस्वरूपसंबन्धस्यैव दोषघटकतया तत्सम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन वृत्तित्वाप्रसिद्ध्या तत्सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिसद्धेतौ [illegible]सत्त्वेऽपि इति ग्रन्थः कथं संगच्छत इति चेत्, अत्र केचित्-तत्पर्वतपक्षकस्थले एव तादृशस्योक्तत्वादिति । तत्तुच्छम् प्रसिद्धस्थलपरित्यागापत्तेः । धर्मिविशेषनियन्त्रितप्रतिबध्यप्रतिबन्धकत्वमत एवोक्तत्वात् तन्मते व्यापकताया अनावश्यकत्वादिति प्राहुः । परे तु पर्याप्त्यनिवेशात्केवलस्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन तादृशान्यतरत्वे प्रसिद्धिसंभवादित्याहुः । तदप्यसत् तथासति धूमादावपि [illegible]सम्बन्धावच्छिन्नत्वं विहाय केवलाधेयतासंबन्धेन पर्वतादिमत्तायाः संभवात् पक्षविशेष्यकभ्रमेत्यादिग्रन्थासङ्गतिप्रसङ्गात् । वस्तुतस्तु प्रकारतावच्छेदकसंबन्धे उद्देश्यतावच्छेदकव्यापकप्रकारप्रतियोगित्वमिव उद्देश्यतावच्छेदकताघटकसम्बन्धे प्रकारव्याप्यउद्देश्यतावच्छेदकप्रतियोगिकत्वं भासते अवच्छेदावच्छेदकस्थले साध्यव्याप्यवत्तानतिरिक्तत्वविशिष्टपक्षतावच्छेदकताघटकसंसर्ग[illegible]स्य विशेष्यतावच्छेदकप्रत्यासत्तित्वे इत्यादिनाऽनुमितिग्रन्थे जगदीशेनोक्तत्वात् । तथा च केवलस्वरूपस्यैव भानान्नासङ्गतिरिति ध्येयम् ॥

(टि०) (१) इदन्तु कालिकसम्बन्धेन साध्यहेतुकाभिप्रायेण अन्यथा प्रतिबन्धकभ्रमविषयवह्न्यभावमादाय दुष्टत्वव्यवहारस्य नानुपपत्तिरिति ध्येयम् ॥

प्रकारत्वात् तमादाय दुष्टत्वोपपत्तिः, तदापि निरूपकत्वसम्बन्धेन पर्वतनिरूपिताधेयत्वनिरूपिताधेयत्ववान् पर्वतो वह्निमान् धूमवत्त्वान्वा, पर्वतनिरूपिताधेयत्वादित्यादौ दुष्टत्वानुपपत्तिः तत्र निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशपक्षतावच्छेदकाभावस्य तादृशपक्षतावच्छेदकानिष्ठनिरूपकत्वसम्बन्धावच्छिन्नपर्वतवृत्तित्वाभावस्य तादृशपक्षतावच्छेदकनिष्ठाधेयतायां पर्वतनिरूपितत्वाभावस्य च प्रकृतहेतावसत्त्वादिति । न च तत्रापि पक्षनिष्ठाधिकरणतायां तादृशपक्षतावच्छेदकनिरूपितत्वाभावस्यापि प्रतिबन्धकतावच्छेदकप्रकारत्वात् तद्रूपस्य च हेतौ सत्त्वान्नानुपपत्तिरिति वाच्यम्, तावतापि पर्वततादृशाधेयत्वान्यतरत्वस्य पक्षतावच्छेदकप्रकृतहेतौ तादृशान्यतरनिरूपितत्वाभावादेरसत्त्वाद् दुष्टत्वानुपपत्तिरेवेति चेत् । रूपत्वाभावव्याप्यः पर्वतवृत्तिरित्याकारकज्ञानप्रकारतापन्नपर्वतवृत्तित्वादिकमादाय तद्रूपस्य दुष्टतासम्भवात् । एवं तादृशाधेयत्वाभावव्याप्यः पर्वतवृत्तिरित्यादिज्ञानप्रकारतापन्नपर्वतवृत्तित्वादिकमादाय तत्रापि दुष्टतासम्भवादिति । नचैवं वह्न्यभावव्याप्यः पर्वतवृत्तिरित्यादिपक्षविशेषणकज्ञानप्रकारतापन्नपर्वतवृत्तित्वादिकमादाय वह्निमान् धूमादित्यादिप्रसिद्धधूमादिहेतावपि दुष्टत्वप्रसक्तौ तद्ग्रन्थस्यासङ्गतिरिति वाच्यम् । तावतापि बाधभ्रमस्थले पक्षविशेषणकभ्रममादाय प्रसिद्धधूमादौ दुष्टत्वापत्तिर्न सम्भवतीति "अणुरपि विशेषोऽध्यवसायकर" इति न्यायेन तद्ग्रन्थोक्तिः सम्भवतीति ध्येयम् ।

केचित्तु दुष्टतास्थले तादृशपक्षतावच्छेदकविशिष्टे पक्षनिष्ठभेदप्रतियोगित्वबुद्धेरपि पक्षतावच्छेदकविशिष्टग्रहविरोधितया तादृशप्रतियोगित्ववत्तामादाय दुष्टत्वसम्भवान्नानुपपत्तिरित्याहुः । तच्चिन्त्यम् ॥ ३ ॥

जातिमान्वह्न्यभाववानित्यादिज्ञानमादाय वह्न्यभाववद्वृत्तादावसम्भववारणाय यद्रूपावच्छिन्नविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नविषयित्वं तद्रूपावच्छिन्नविषयिताशून्यत्वं यादृशविशिष्टविषयकनिश्चये निवेशितं भट्टाचार्येण ।

अथ इदन्त्वसामानाधिकरण्येन वह्निसाध्यतास्थले इदन्त्वावच्छेदेन वह्न्यभावादेरेव दोषतया जातिमान् वह्न्यभाववानि-

त्यादिज्ञाने ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धघटितवह्न्यभाववद्ध्रदत्वविशिष्टविषयिताया असत्त्वेन तत्र लक्षणगमनात्कथमसम्भव इति । न च जातिमान्वह्न्यभाववानितिज्ञान एव यत्र ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकः स्वरूपसम्बन्धो भासते तज्ज्ञानमादाय तत्रापि लक्षणगमनासम्भव इति वाच्यम् । भट्टाचार्येण एकदेशव्यापकतानभ्युपगमेन जातिधर्मितावच्छेदककज्ञाने शुद्धह्रदत्वव्यापकत्वस्य संसर्गतया भानासम्भवादिति चेन्न उक्तस्थलेपि प्रकारीभूतवह्न्यभावत्वांशे प्रमेयत्वावगाहि-ह्रदो वह्निप्रमेयत्वविशिष्टवत्वानित्यादिज्ञानमादाय तत्रापि लक्षणगमनासम्भवादिति ध्येयम्(१) ।

अथ यादृशविशिष्टविषयकज्ञाने अव्यापकीभूतविषयताशून्यत्वनिवेशेऽप्यभावत्वेन ह्रदत्वावगाहि-अभाववान्वह्न्यभाववानित्यादिज्ञानवारणमशक्यम् । अभावत्वावच्छिन्नविषयितात्वस्य वह्न्यभाववद्ध्रदत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वात् यद्रूपपदेनाभावत्वस्य धर्तुमशक्यत्वात् । वह्न्यभाववदभाववत्त्वस्य धर्तुं शक्यत्वेऽपि तद्रूपावच्छिन्नविषयिताशून्यत्वस्याभावत्वेन ह्रदत्वावगाहि-निरुक्तभ्रमे सत्त्वादिति । न च यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वं निवेश-

---

(टि०)(१) नव्यास्तु परामर्शे यद्धर्मव्यापकत्वं हेतुसंसर्गांशे भासते तद्धर्मव्यापकसम्बन्धेनानुमितिः फलम् । तथा च जातिमान् वह्न्यभाववानिति निश्चयमादाय लक्षणगमनासंभव इति प्राहुः । वस्तुतस्तु ह्रदत्वादिव्यापकवह्न्यभावादिप्रतियोगिकस्वरूपादिसंसर्गांशे प्रमेयत्वावगाहि-तादृशसंसर्गतावच्छेदकांशे प्रमेयत्वावगाहि वा वह्न्यभाववान्ह्रद इत्यादिज्ञानमादायासंभवो बोध्यः । एवञ्च वह्नीयप्रमेयत्वविशिष्टवह्न्यभाववान् ह्रद इति ज्ञाने प्रमेयत्वविशिष्टवह्न्यभावत्वादिरूपधर्मेणैव व्यापकत्वं भासते न तु केवलवह्न्यभावत्वादिना भट्टाचार्येणाग्रे एतद्ग्रन्थे एव तथा वक्ष्यमाणत्वादित्युक्तावपि नासंगतिरिति ध्येयम् ।

नीयम् तथा चाभावत्वावच्छिन्नविषयतानिरूपितवह्न्यभाववद्ध्रदत्वा-वच्छिन्नविषयतात्वं तादृशाभावप्रतियोगितावच्छेदकमेवेति तादृश-विषयताशून्यत्वं नोकज्ञानस्येति वाच्यम्। अभावत्वावच्छिन्नविषय-तानिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतायाः वह्न्यभाववद्ध्र-दविषयकज्ञानेपि सत्त्वेन तादृशविशिष्टविषयकत्वाव्यापकत्वाभावेन यद्रूपपदेनाभावत्वादेर्धर्तुमशक्यत्वात्। यदि च यद्रूपावच्छिन्नविष-यतात्वावच्छिन्ननिरूपकतानिरूपितयद्रूपावच्छिन्नविषयतात्वं ता-दृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं त-द्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपकतानिरूपिततद्रूपावच्छिन्न-विषयिताशून्यत्वस्य निवेशान्न दोषः यतो वह्न्यभाववद्ध्रदत्वा-वच्छिन्नविषयतात्वावच्छिन्ननिरूपितत्वं न वह्न्यभाववान् ह्रद इत्यादिज्ञानीयाभावत्वावच्छिन्नविषयतायां किन्तु अभाववान् वह्न्य-भाववानित्यादिज्ञानीयाभावत्वावच्छिन्नविषयतायामेवेति तज्ज्ञान-व्युदास इत्युच्यते तदा तादृशरीत्या गोत्वाभावत्वावच्छिन्नविषयता-त्वावच्छिन्ननिरूपकतानिरूपितगोत्वत्वावच्छिन्नविषयितात्वस्य गो-त्वाभावत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छे-दकतया तादृशविषयताशून्यत्वस्य गोत्वाभावो गोत्ववानिति ज्ञानेऽसत्त्वेन तादृशभ्रममादाय गोत्वाभावादावतिव्याप्तिविरहेण वक्ष्यमाणसामान्यपदव्यावृत्त्यसङ्गतेः। एतेन भ्रमसामान्यभिन्नत्वं नि-वेश्य अभाववान्वह्न्यभाववानिति ज्ञानवारणमित्यपि परास्तम्। एत-ल्लक्षणस्य यथार्थत्वाघटितत्वेन एतत्कल्पे तस्यानुपादेयत्वाच्च। न च यादृशविषयतात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणा-भावप्रतियोगितावच्छेदकं तादृशविषयतात्वावच्छिन्नाविषयताशून्य-त्वविशेषणन्देयम्, तथाच वह्नित्वावच्छिन्नविषयतानिरूपिता-भावत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नावच्छेदकतानिरू-पितविशेष्यतात्वरूपतादृशविशिष्टविषयकत्वसमानाधिकरणाभाव-प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नाभावासत्त्वेन उक्तज्ञानव्यु-दास इति वाच्यम्। एवमपि सामान्यपदव्यावृत्त्यसङ्गतेः गोत्ववि-षयतानिरूपिताभावविषयतानिरूपितगोत्वाविषयतात्वस्य तादृशा-भावप्रतियोगितावच्छेदकत्वात्। वह्न्यभाववान् ह्रद इत्यादिज्ञाने-निरूप्यनिरूपकभावापन्नह्रदत्वादिनिष्ठनिरवच्छिन्नावच्छेदकतानिरू-

पितविशेष्यताक... जातित्वेन रूपेण ह्रदत्वावगाहिज्ञाननिष्ठ-तादृशभावप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नाभावासत्त्वेनासम्भवापत्तेश्च ।

मैवम् । स्वाश्रयवृत्तिनिष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताकत्व-स्वाश्रयनिष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताकत्वोभयसम्बन्धेन धर्मविशिष्टान्यत्वेन स्वाश्रयाभाववद्वृत्तित्व-स्वनिरूपितत्वोभयसम्बन्धेन अवच्छेदकताविशिष्टविषयताशालिज्ञानान्यत्वेन वा यादृशविशिष्टविषयकनिश्चयस्य विशेषणीयतया अभाववान्वह्न्यभाववानित्यादिज्ञानवारणसम्भवादिति ।

केचित्तु यथाश्रुताव्यापकीभूतविषयताशून्यत्वस्य निवेशे जातिमान् वह्न्यभाववानित्यादि-ज्ञानव्यावर्तनेऽप्यभाववान्वह्न्यभाववानित्यादिज्ञानवारणासम्भवः । एवं जातिमान् वह्निमानित्यादौ वह्न्यभाववज्जातिमत्ह्रदादिरूपबाधेऽव्याप्तिश्चालनीयन्यायेन सर्वासामेव वह्न्यभाववज्जातिमद्विषयितानां तादृशबाधविषयित्वाव्यापकत्वेन तादृशविषयिताशून्यत्वस्योक्तबाधविषयकज्ञानेऽसत्त्वात् अतो यद्रूपावच्छिन्ननिरूपितयत्किञ्चिद्विषयिताविशिष्टनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वं लक्षणं वाच्यम् । वैशिष्ट्यं च स्वनिरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकविषयताशून्यत्वसम्बन्धेन । यत्किञ्चिद्विषयतायां यद्रूपावच्छिन्ननिरूपितत्वं च यद्रूपपर्याप्तावच्छेदकताकत्वमेव तेन वह्न्यभाववान् ह्रद इत्यादिज्ञानीयवह्न्यभाववत्ह्रदत्वावच्छिन्नविषयितायाः अपि ह्रदत्वावच्छिन्ननिरूपितत्वेन यत्किञ्चित्पदेन तादृशविषयित्वमादाय शुद्धह्रदे नातिव्याप्तिः । जातिमान् वह्न्यभाववानित्यादिज्ञानविषयित्वं च वह्न्यभाववद्ह्रदत्वावच्छिन्ननिरूपितयत्किञ्चिद्विषयतानिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयताशालिवह्न्यभाववान् ह्रद—इत्यादिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकमेवेति तच्छून्यत्वं न जातिमान्वह्न्यभाववानित्यादि ज्ञाने किन्तु वह्न्यभाववान् ह्रद इत्यादिनिश्चय एवेति तादृशनिश्चयव्यापकत्वं प्रकृतानुमितिप्रतिबन्धकतायामक्षतमेवेति यत्किञ्चित्पदेन ह्रदो वह्न्यभाववानित्यादिज्ञानीयविषयतामादाय

बाधादौ लक्षणसमन्वयः । एवं जातिमान्वह्निमानित्यादावपि वह्न्यभाववज्जातिमदादौ नाव्याप्तिः । जातित्वेन यत्किञ्चिज्जात्यवगाहिवह्न्यभाववज्जातिमदित्यादिज्ञानीयविषयताया एव यत्किञ्चिद्विषयपदेनोपादेयतया तादृशविषयिताविशिष्टनिश्चयत्वव्यापकत्वस्य प्रतिबन्धकतायामक्षतत्वात् ।

अथवा यत्किञ्चिद्विषयिताविशिष्टयद्रूपावच्छिन्नविषयिता तादृशानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वं दोषत्वम् । यत्किञ्चिद्विषयितावैशिष्ट्यं च स्वतादात्म्य-स्वनिरूपकतावच्छेदकतापर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकनिरूपकताकमुख्यविशेष्यतासमानाधिकरणभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वोभयसम्बन्धेन । तथा च यत्किञ्चित्पदेन ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितामादाय बाधादौ लक्षणसमन्वयः । एवं जातिमान् वह्निमान् इत्यत्रापि जातित्वेन यत्किञ्चिज्जात्यवगाहि-जातिमान् वह्न्यभाववानित्यादिज्ञानीयविषयितामादाय वह्न्यभाववज्जातिमदादौ लक्षणसमन्वयः । ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः स्वनिरूपकतावच्छेदकधर्मपर्याप्तावच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेन वह्न्यभावाद्येकदेशविषयतायामपि सत्त्वात् । तादृशविषयिताविशिष्टवह्न्यभावाद्येकदेशविषयताव्यापकत्वस्य च प्रतिबन्धकताया मक्षतत्वात् । यत्किञ्चिद्विषयतापदेन ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतामादायैकदेशेऽतिव्याप्तिरतः स्वतादात्म्यनिवेशः । केवलस्वतादात्म्यनिवेशेऽपि ह्रदो वह्न्यभाववानिति ज्ञानीयैकदेशविषयतामादाय तत्रैवाव्याप्तिरत उभयसम्बन्धनिवेशः । तथा च ह्रदो वह्न्यभाववानित्यादिज्ञानीयैकदेशविषयितायां स्वतादात्म्यसत्त्वेपि स्वनिरूपकतावच्छेदकीभूतं यद्वह्न्यभावत्वादिकं तत्पर्याप्तावच्छेदकताकनिरूपकताकं यत्केवलवह्न्यभाव इति ज्ञानीयविषयत्वम् तत्समानाधिकरणभेदप्रतियोगितावच्छेदकविषयिताशून्यज्ञानीयत्वाभावान्नातिव्याप्तिः । न च दोषाविषयकवह्न्यभाव इतिज्ञानीययत्किञ्चिद्विषयितायास्तादृशोभयसम्बन्धेन विषयिताविशिष्टत्वादतिव्याप्तिरिति वाच्यम् इति

वाच्यम्, प्रकृतानुमितिप्रतिबन्धकतायां तादृशविशिष्टविषयिताव्यापकत्वाभावादिति। ह्रदो वन्ह्यभाववानिति-ज्ञानीयमुख्यविशेष्यताया अपि वन्ह्यभाववद्ध्रदवान् देश इति ज्ञानीयस्वनिरूपकतावच्छेदकवन्ह्यभाववद्ध्रदत्वावच्छिन्ननिरूपकताकप्रकारतात्मकविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतया तादृशभेदप्रतियोगितावच्छेदकविषयताशून्यज्ञानीयत्वाभावेन निरुक्तोभयसम्बन्धेन यत्किञ्चिद्विषयिताविशिष्टविषयित्वाप्रसिद्ध्याऽसम्भवः अतः [redacted] सम्बन्धघटकमुख्यविशेष्यतानिवेशः। मुख्यविशेष्यतानिवेशेऽपि ह्रदो वन्ह्यभाववानित्यादिज्ञानीयवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयितायां ह्रदत्वावच्छिन्नत्वस्यापि सत्त्वेन यत्किञ्चित्पदेन तादृशविषयतामादाय ह्रदत्वावच्छिन्नैकदेशेऽतिव्याप्तिरतो यद्रूपावच्छिन्नविषयितापदेन यद्रूपपर्याप्तावच्छेदकताकनिरूपकताकविषयिता वाच्या। ह्रदो वन्ह्यभाववानित्यादिज्ञानीयविषयितायाः स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकताकविषयिताशालिजातिमान्वन्ह्यभाववानित्यादिज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वेनासम्भवः स्यात अतः सम्बन्धघटकमुख्यविशेष्यतायाम् स्वनिरूपकतावच्छेदकधर्मपर्याप्तावच्छेदकताकनिरूपकताकत्वनिवेशः। एकत्र द्वयमिति रीत्या वन्ह्यभाववद्ध्रदविषयकज्ञानीयविषयितायां वन्ह्यभाववद्ध्रदत्वावच्छिन्ना या प्रतिबन्धकतावच्छेदकीभूतविषयता तन्निरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकनिरूपकताकत्वाभावान्न तमादाय दोषः। न च विषयभेदेन विषयताभेदाद्वन्ह्यभाववद्ध्रदादावव्याप्तिः ह्रदो वन्ह्यभाववानित्यादियत्किञ्चिद्ध्रदविषयकज्ञानीयविषयितायाः स्वनिरूपकतावच्छेदकीभूतधर्मावच्छिन्ननिरूपकताकह्रदान्तरविषयताकतादृशज्ञानीयविषयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन तच्छून्यज्ञानीयत्वस्य स्वस्मिन्नसत्त्वादिति वाच्यम्। स्वतादात्म्य-स्वविशिष्टमुख्यविशेष्यतासमानाधिकरणभेदप्रतियोगितावच्छेदकविषयताशून्यज्ञानीयत्वोभयसम्बन्धेन यद्रूपपर्याप्तावच्छेदकताकविषयतायां यत्किञ्चिद्विषयतावैशिष्ट्यनिवेश इति। सम्बन्धघटकविषयतावैशिष्ट्यं च स्वनिरूपकतावच्छेदकधर्मपर्याप्तावच्छेदकताकनिरूपकताकत्व—स्वनिरूपकनिरूपितत्वोभयसम्बन्धेन ग्राह्यम्।

तथा च यत्किञ्चिद्ध्रदविषयकज्ञानीया या विषयिता तन्निरूपकनिरूपितत्वस्य ह्रदान्तरविषयकज्ञानीयविषयतायामसत्त्वान्नैव दोष इत्याहुः।

तच्चिन्त्यम्। स्वरूपसम्बन्धरूपावच्छेदकताकल्पे वक्ष्यमाणसामान्यपदव्यावृत्त्यसङ्गतेः। निश्चयत्वांशनिवेशवैयर्थ्यापत्तेश्चेति ध्येयम्(१)।

वस्तुतस्तु "अथैवं जातिमान्वन्ह्यभाववानित्यादिग्रन्थ एवापाततः विषयतासम्बन्धेन यादृशविशिष्टव्यापकं प्रतिबन्धकत्वं तादृशत्वमित्यस्यैव सम्यक्त्वात्। यत्र स्वरूपतोऽस्वरूपतो वा यादृशविशेषणघटितयादृशविशिष्टस्य संसर्गताविरहेण दोषत्वम् तत्र तादृशविशिष्टनिरूपितविषयिताया एव तादृशविशिष्टस्य संसर्गता स्वीक्रियते न तु अन्यविधाया इति जातिमद्वन्ह्यभाववद्ध्रदरूपवि-

---

(१) नव्यास्तु यद्रूपावच्छिन्नविषयताशालियत्किञ्चिज्ज्ञाननिष्ठभेदप्रतियोगितावच्छेदकीभूतविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां निवेश्यम् तथाच यद्रूपावच्छिन्नविषयताशालिज्ञानत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितेत्यादिरीत्या तद्व्यक्तिनिष्ठभेदप्रतियोगितावच्छेदकीभूतविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं नास्तीत्यभावं संगृह्य निवेशे तात्पर्यम् ह्रदो वह्न्यभाववानितिज्ञाननिष्ठभेदप्रतियोगितावच्छेदकीभूतं यज्जातित्वावच्छिन्नविषयित्वं तच्छून्यत्वस्य ह्रदो वह्न्यभाववानित्याकारकज्ञाने सत्त्वाल्लक्षणसमन्वयः। इत्थञ्च सामान्यपदानुपादाने वन्ह्यभावेऽतिव्याप्तिः स्वावच्छिन्नविषयिताशालियत्किञ्चिज्ज्ञानपदेन वन्ह्यभाववान् ह्रद इति ज्ञानमादाय तन्निष्ठभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयिताशून्यं वन्ह्यभाववान् ह्रद इति ज्ञानं तद्वृत्तिवन्ह्यभावत्वावच्छिन्नविषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वात् तन्निवेशे तु केवलवन्ह्यभाववानिति-ज्ञानस्यापि तादृशत्वात्तद्वृत्तिवन्ह्यभावविषयिताव्यापकत्वाभावान्न दोष इति प्राहुः।

शिष्टस्य विषयितायाः स्वरूपतो ह्रदत्वघटितविशिष्टस्य संसर्गताविरहेण जातिमान्वह्न्यभाववानित्यादिज्ञानमादायासम्भवाभावात् । परन्तु याद्दशत्वमननुगतमिति । एतेन अभावत्वेन ह्रदत्वावगाहिज्ञानवारणाय यथार्थपदसार्थक्यसम्भवेन दीधितिकृतां यथार्थपदाघटितद्वितीयलक्षणावतारस्य विरोध इति परास्तम् । अत एवानुमितिग्रन्थे परामर्शग्रन्थे च भट्टाचार्येण विशिष्टव्याप्त्यप्रसिद्धिस्थले खण्डशो विषयितामादाय विषयितासम्बन्धेन व्याप्तिविशिष्टस्यैव ज्ञाने निवेशः कृत इति ।

परे तु अव्यापकीभूतविषयताशून्यत्वमिव यद्रूपावच्छिन्नस्य यस्य यस्य ताद्दशविशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वरूपप्रागुक्तविशेषणमप्यस्ति तथा च अभावत्वेन ह्रदत्वस्य न विशिष्टघटकता इति अभावत्वावच्छिन्नह्रदादिविषयता ताद्दशविषयताभिन्नैवेति तच्छून्यत्वं नाभाववान्वह्न्यभाववानित्यादिज्ञानस्येति ताद्दशज्ञानमादाय न दोषः । एवं चाभावपक्षकसंयोगेन वह्निसाध्यकस्थले अभावो वह्निमान्न वेतिसंशयमादाय वह्न्यभाववदभाववरूपबाधेऽव्याप्तिवारणाय निश्चयत्वनिवेशः। गोत्वाभावो गोत्वाभाववान् इत्यत्र गोत्वाभावो गोत्ववानितिभ्रममादाय गोत्वाभावेऽतिव्याप्तिवारणाय वक्ष्यमाणसामान्यपदसार्थक्यमिति वदन्ति ॥ ४ ॥

अथ यद्रूपावच्छिन्नविषयितात्वं स्वावच्छिन्नविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्यत्र स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकाविषयित्व(१)समानाधिकरणाभावप्रतियोगितावच्छेदकमित्युक्तावेव सामञ्जस्ये विशिष्टान्तराघटितत्वविशिष्टद्वयाघटितत्वनिवेशो व्यर्थ इति । तथाहि मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयतायामपि मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतशुद्धव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकत्वेन तच्छून्यत्वस्य मेयत्वविशिष्टव्यभिचारज्ञानेऽसत्त्वा-

---

(१) भ्रमज्ञाने प्रतिबन्धकतासत्त्वादसम्भववारणायावच्छेदकविषयतापर्यन्तानुधावनमत्र बोध्यम् ।

त्। एवं वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदत्वावच्छिन्नविषयताया अपि तादृशजलवद्ह्रदत्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतवह्न्यभाववज्जलवत्कालीनजलवद्ह्रदत्वावच्छिन्नविषयित्वाव्यापकत्वेन तच्छून्यत्वस्य च तादृशजलवत्ह्रदविषयकज्ञानेऽसत्त्वात्। न च व्यभिचारघटितबाधेऽव्याप्तिः तादृशबाधविषयकत्वस्य तादृशबाधविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकव्यभिचारविषयकत्वाव्यापकत्वेन तच्छून्यत्वस्य तादृशबाधविषयकज्ञानेऽसत्त्वात्। स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकेत्युक्तौ च बाधविशिष्टव्यभिचारादावतिव्याप्तिः तादृशव्यभिचारविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य केवलबाधविषयितायां केवलव्यभिचारविषयितायां चासत्त्वादिति वाच्यम् स्वावच्छिन्नविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयित्वसमानाधिकरणाभाव इत्यस्य विवक्षितत्वात्। यत्किञ्चित्प्रतिबन्धकतापदेन बाधप्रतिबन्धकतामादायैव व्यभिचारघटितबाधादौ लक्षणसमन्वयादिति।

अत्र केचित् उक्तरीत्या अव्यापकीभूतविषयताशून्यत्वनिवेशे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षत्वे तत्राव्याप्त्यापत्तेस्तादृशसत्प्रतिपक्षविषयतायाः स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतप्रतिहेतुव्यापकसाध्याभावकालीनहेतुमत्पक्षविषयित्वाव्यापकत्वात्। न च स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयस्वावच्छिन्नविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकीभूतस्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीय[redacted]त्वमेवावश्यं वाच्यम् तथाच नोक्तसत्प्रतिपक्षादावव्याप्तिः कालीनत्वघटितविशिष्टविषयितायाः स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वाभावात्, परन्तु वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदादावतिव्याप्तिवारणाय विशिष्टाघटितत्वनिवेशोऽस्तु विशिष्टान्तराघटितत्वनिवेशो व्यर्थ एवेति वाच्यम्। यतः स्वावच्छिन्नविषयित्वाव्यापकाविषयिताशून्यज्ञानीयस्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकं स्वावच्छिन्नवि

०१- इतः प्रभृति प्राचीनं त्यन्तं सीमपाठः पाठोऽशुद्धः।

पयित्वाव्यापकीभूतविपयिताशून्यज्ञानीययद्रूपावच्छिन्नविपयित्वं [redacted] । किन्तु स्वाव-च्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयस्वावच्छिन्नविप-यित्वावच्छिन्नप्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयित्वाव्या-पकीभूतविषयिताशून्यज्ञानीयद्रूपावच्छिन्नविषयित्वं तद्रूपावच्छि-न्न[redacted]त्वमेव निवेशनीयम् अन्यथा ह्रदो वह्निमानित्यत्र जातिमद्वन्ह्यभाववद्ध्रदेऽतिव्याप्त्यापत्तेः व-ह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः जातिमद्वन्ह्यभाववद्ध्र-दत्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यजातिमान् वन्ह्य-भाववानिति ज्ञानेऽपि सत्त्वेन जातिमद्वन्ह्यभाववद्ध्रदत्वावच्छि-न्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वाभावात्, तादृशप्र-तिबन्धकतावच्छेदकवन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापक-विषयिताशून्यत्वस्य च तादृशह्रदविषयकज्ञाने सत्त्वात् । एव-ञ्च प्रागुक्तसत्प्रतिपक्षाव्याप्तिर्दुर्वारैवेति प्राहुः(१) ॥ ५ ॥

---

टि० (१)एवं सर्वं गगनवद्वाच्यत्वादित्यादौ गगनाभाववत्सर्वरू-पबाधेऽव्याप्तिश्च बाधविषयतायास्तादृशप्रतिबन्धकतावच्छेदकभूत-गगनाभाववद्घटत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीय-त्वाभावात् । अथ यद्रूपावच्छिन्नविषयितायां यद्रूपावच्छिन्नविषयि-त्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वमिव स्वावच्छिन्नविषयित्वा-व्यापकीभूतविषयिताशून्यत्वमपि देयम् तावतैव नोक्तस्थलेऽव्याप्तिः । न च लाघवानवकाश इति वाच्यम् भवन्मतेऽनुमितित्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकतायाः द्विधा निविष्टतया गौरवम् । मम मते तु तादृशयत्किञ्चित्प्रतिबन्धकतायाः सकृन्निवेशेनातीव ला-घवादिति चेन्न प्रतिबन्धकताया ज्ञानभेदेन भिन्नत्वे मम मतेऽपि स-कृन्निवेशसम्भवादिति । तथाच विशिष्टान्तरं स्वावच्छिन्नविष-यिताव्यापकतावच्छेदकतादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपि-तप्रतिबन्धकतात्ववृत्ति यद्रूपं तदवच्छिन्नविषयकत्वादिनिवे-शः । वृत्तित्वञ्चावच्छिन्नविषयिताव्यापकतावच्छेदकत्वसम्बन्धे-न । भवन्मतेऽप्येतादृशनिवेशस्यावश्यकतया गौरवापत्तेः यत्कि-ञ्चित्प्रतिबन्धकताघटितविशिष्टान्तराघटितत्वकल्पे मन्मते लाघवा-

अथ यद्रूपावच्छिन्नविषयितासामान्यमनुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावदित्यत्र सामान्यपदं व्यर्थम्— ह्रदो वन्ह्यभाववानित्यादिज्ञानीयह्रदत्वावच्छिन्नैकदेशविषयितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वेऽपि तज्ज्ञानस्य ह्रदत्वादिविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्वन्ह्यभावत्वावच्छिन्नविषयतात्वं तद्रूपावच्छिन्नविषयताशून्यत्वाभावादेव वारणसम्भवात् शुद्धह्रद—इत्यादिज्ञानीयविषयितायाश्च स्वरूपसम्बन्धरूपावच्छेदकत्वविरहात्। न चात्र कल्पे तादृशविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यत्वं न निवेशनीयम् वन्ह्यभाववज्जातिमत्त्वावच्छिन्नविषयिताया अपि जातिमान् वह्न्यभाववानित्यादिज्ञानकालीनस्य जातिमान् ह्रद-इत्यादिज्ञानस्य ज्ञानवैशिष्ट्यावच्छिन्ना या ह्रदधर्मिकवन्ह्यनुमितिप्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वादिति वाच्यम्। ह्रदत्वसामानाधिकरण्येन वह्न्यभावादिव्याप्तिवारणाय तादृशाव्यापकीभूतविषयिताशून्यत्वनिवेशस्यावश्यकत्वात्। तत्र जातिसामानाधिकरण्येन वह्न्यभावविषयितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वविरहात्। न च संयोगः संयोगाभाववानित्यादौ संयोगः संयोगवानित्याकारकभ्रमात्मकज्ञानविषये संयोगेऽतिव्याप्तिः तत्र संयोगत्वावच्छिन्नविषयतात्वस्य संयोगत्वाविशिष्टविषयतासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावात्तादृशाव्यापकीभूतविषयिताशून्यत्वस्य चोक्तभ्रमात्मकज्ञाने सत्त्वादिति वाच्यम्। संयोगावच्छिन्नविषयितायास्तादृशविशिष्टविषयकत्वाव्यापकत्वेन तच्छून्यत्वस्य संयोगः संयोगवानिति भ्रमात्मकज्ञानेऽसत्त्वादिति चेन्न गोत्वाभावो गोत्वाभाववानित्यादौ गोत्वाभावो गोत्ववानित्याकारकभ्रमात्मकबाधज्ञानविषये गोत्वाभावादावतिव्याप्तिवारणाय सामान्यपदसार्थक्यात्। तत्र गोत्वाभावत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य गोत्वत्वावच्छिन्नविषयित्वादावसत्त्वात्। न च यत्संसर्गावच्छि-

---

ब। वस्तुतस्तु यादृशस्थले व्यभिचारविषयकज्ञाननियतं मेयत्वविशिष्टव्यभिचारविषयकज्ञानं तत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिरिति ध्येयम्।

न्नयद्रूपावच्छिन्नविषयतात्वं तादृशविशिष्टविषयकत्वसमानाधिक·
रणाभावप्रतियोगितावच्छेदकं तत्संसर्गावच्छिन्नतद्रूपावच्छिन्नविष·
यताशून्यत्वस्य ज्ञानविशेषणत्वेनैवोक्तातिव्याप्तिवारणसम्भवः। गो·
त्वाभावत्वविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छे·
दकं यत्समवायसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नविषयितात्वं त·
दवच्छिन्नाभावस्य गोत्वाभावो गोत्ववानिति ज्ञानेऽसत्त्वादिति वा·
च्यम् । तथासत्यपि गोत्ववत्समानकालीनगोत्वाभावपक्षकस्थले
तादृशगोत्वाभावेऽतिव्याप्तेर्दुर्वारत्वात् तत्र समवायसम्बन्धाव·
च्छिन्नगोत्वत्वावच्छिन्नविषयितात्वस्यापि तादृशविशिष्टविषयित्वा·
व्यापकत्वाभावात् । जातिमज्ज्ञात्यवच्छिन्नविषयितायाः सं·
सर्गानवच्छिन्नतया संसर्गनिवेशे हृदे जात्यभाववानित्यत्र जातिमा·
न् जातिमान् इत्यादिज्ञानवारणासम्भवाच्च। न च यद्रूपावच्छिन्नसां·
सर्गिकविषयतानिरूपितयद्रूपावच्छिन्नविषयित्वं तादृशविशिष्टविष·
यत्वाव्यापकं तद्रूपावच्छिन्नसांसर्गिकविषयतानिरूपितद्रूपावच्छि·
न्नविषयताशून्यत्वानिवेशे नोक्तदोषः समवायत्वावच्छिन्नसांसर्गि·
कविषयतानिरूपितगोत्ववत्समानकालीनगोत्वाभावत्वावच्छिन्नवि·
षयतायास्तादृशविशिष्टविषयित्वाव्यापकतया तच्छून्यत्वस्य गो·
त्ववत्समानकालीनगोत्वाभावो गोत्ववानिति बाधभ्रमेऽसत्त्वादि·
ति वाच्यम् । तावताऽपि गगनत्ववत्कालीनगगनत्वाभावो
गगनत्वाभाववानित्यत्र गगनत्ववत्कालीनगगनत्वाभावो गगनत्ववा·
निति बाधभ्रममादाय गगनत्ववत्कालीनगगनत्वाभावेऽतिव्याप्तिः ।
तत्र स्वरूपत्वावच्छिन्नसांसर्गिकविषयतानिरूपितगगनत्ववत्काली·
नगगनत्वाभावत्वावच्छिन्नविषयताया विशिष्टविषयित्वाव्याप·
कत्वाभावात् । न च यद्रूपावच्छिन्नविषयितात्वावच्छिन्ननिरूपित·
यद्रूपावच्छिन्नविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकर·
णाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयितात्वावच्छिन्ननि·
रूपिततद्रूपावच्छिन्नविषयिताशून्यत्वं निवेशनीयम्, तथा चोक्तस्थ·
ले बाधविषयकभ्रमे गगनत्ववत्कालीनगगनत्वाभावत्वावच्छिन्न·
विषयतात्वावच्छिन्ननिरूपितगगनत्वत्वावच्छिन्नविषयतात्वरूपतादृ·
शविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकयद्रू·
पावच्छिन्नाभावासत्त्वेनोक्तस्थले नातिव्याप्तिरिति वाच्यम्। एवमपि

यत्र संयोगवत्संयोगवत्संयोगाभावस्य साध्यता संयोगवत्संयोगस्य पक्षता(१) तत्र संयोगवत्संयोगः संयोगवत्संयोगवत्संयोगवानित्यादिबाधभ्रमविषयीभूतसंयोगवत्संयोगवत्संयोगवत्संयोगरूपबाधैकदेशेऽतिव्याप्तिः। अत्र साध्यघटकीभूतप्रथमसंयोगस्य वैशिष्ट्यं संयोगसम्बन्धेन, द्वितीयस्य कालिकसम्बन्धेन, पक्षघटकसंयोगवैशिष्ट्यमपि कालिकसम्बन्धेन, साध्यघटकप्रतियोगित्वं च कालिकसम्बन्धावच्छिन्नं ग्राह्यम्। न च यद्रूपावच्छिन्नसांसर्गिकविषयतानिरूपितयद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपितयद्रूपावच्छिन्नविषयत्वम् विशिष्टविषयित्वाव्यापकं तद्रूपावच्छिन्नसांसर्गिकविषयतानिरूपिततद्रूपावच्छिन्नविषयतात्वावच्छिन्ननिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वनिवेशे नोक्तातिव्याप्तिरुक्तस्थलीयबाधभ्रमे तादृशाव्यापकीभूतसंयोगत्वावच्छिन्नसांसर्गिकविषयतानिरूपितसंयोगत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपितसंयोगत्वावच्छिन्नविषयताशून्यत्वविरहादिति वाच्यम्। गगनाभाववत्संयोगपक्षक—उक्तसाध्यकस्थले बाधभ्रममादाय संयोगवत्संयोगवद्गगनाभाववत्संयोगवत्संयोगेऽतिव्याप्तिः। अत्र साध्यघटकप्रथमसंयोगवैशिष्ट्यं स्वरूपसम्बन्धेन द्वितीयवैशिष्ट्यं कालिकेन। तथा च स्वरूपत्वावच्छिन्नसांसर्गिकविषयतानिरूपितसंयोगत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपितसंयोगत्वावच्छिन्नविषयित्वमपि न विशिष्टविषयित्वाव्यापकमिति।

तत्तदप्रामाण्यज्ञानाभावस्य तत्तदाहार्यभिन्नत्वस्य च तत्तद्व्यक्तित्वेन निवेशे गौरवमतोऽनुगतरूपेण निवेशः कार्यः। अनुगमस्तु—स्वाभाववत्त्व—स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतावत्त्वोभयसम्बन्धेन अभावविशिष्टान्यत्वम्। एवञ्च स्वातन्त्र्येण निश्चयत्वस्यापि लक्षणेऽनिवेशात् संशयान्यत्वदलवैयर्थ्यम्। एतेन वन्ह्यभाववज्जलवद्वृत्तिजलवद्ह्रदविषयकनिश्चयधर्मिकाप्रामाण्यज्ञानाभावादेर्लक्षणेऽनिवेशेनैव तत्रातिव्याप्तिवारणसम्भवे विशिष्टद्वयाघटितत्वनिवेशो व्यर्थ इति परास्तम्। सम्बन्धव्यावृत्तिस्तु स्वयमूह्या ॥६॥

---

टि० (१) संयोगसम्बन्धावच्छिन्नावच्छेदकतानिरूपितसंयोगावच्छिन्नावच्छेदकतात्मकविषयतायाः संयोगावच्छिन्नविषयतानिरूपितसंयोगवत्संयोगत्वावच्छिन्नप्रकारतात्मकविषयताया अव्यापकत्ववारणाय पक्षांशे संयोगद्वयप्रवेशः।

यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वमित्यत्र तादृशविशिष्टद्वयविषयताशून्यत्वनिवेशे ह्रदो वह्निमान् धूमादित्यादौ एकत्र द्वयमिति रीत्या वह्निव्यापकीभूताभावप्रतियोगित्वह्रदवृत्तित्वोभयवज्जले (१) तिव्याप्तिः । तत्र तादृशोभयावच्छिन्नजलत्वावच्छिन्नविषयताया ऐक्येन तादृशविशिष्टद्वयविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगित्ववज्जलत्वे सत्त्वात् । एवं तादृशविशिष्टविषयताशून्यत्वे सति तादृशविशिष्टविषयताशून्यत्वनिवेशेऽसाधारणेऽव्याप्तिः, असाधारणस्यापि निरुक्तविशिष्टद्वयान्तर्गतत्वात् । अतस्तादृशविशिष्टविषयिताशून्यत्वमपहाय तादृशविशिष्टविषयताविशिष्टतादृशविशिष्टविषयिताशून्यत्वमेव भट्टाचार्येण निवेशितम् ।

अथ ह्रदो गगनाभाववद्वह्निव्यापकीभूताभावप्रतियोगित्ववत्कालीनवह्निमान् जलादित्यादौ गगनाभाववद्वह्निव्यापकीभूताभावप्रतियोगित्ववत्कालीनवह्निव्यापकीभूताभावप्रतियोगित्ववज्जलरूपासाधारणेऽव्याप्तिः तादृशासाधारणस्य गगनाभाववद्वह्निव्यापकीभूताभावप्रतियोगित्ववत्कालीनवह्निमान् ह्रदस्तादृशवह्निव्याप्यजलवांश्च जल च गगनवृत्तिव्याद्यनुमितिविरोधितया निरुक्तविशिष्टद्वयघटितत्वात् । अतः विशिष्टद्वयाघटितत्वशरीरे प्रतिबन्धकतायामनुमितित्वव्यापकप्रतिबध्यतानिरूपितत्वनिवेशः(२) । न च व्यापकत्वनिवेशापेक्षया लाघवात् पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशेनैव तद्दोषवारणसम्भवा-

---

टि० (१) व्याप्तिविशिष्टहेतौ पक्षवृत्तित्वावगाहिज्ञानस्य व्याप्तिविशिष्टहेतुमत्पक्षावगाहिज्ञानस्य च अनुमितिकारणतया एकत्र द्वयमिति रीत्या निरुक्तोभयावगाहिनः कारणत्वाभावान्न तस्य सत्प्रतिपक्षत्वमिति भावः ।

टि० (२) गगनाभाववद्वह्न्यधिकरणवृत्तित्ववत्कालीनजलादित्यादिस्थलीयासाधारणेऽव्याप्तिः समूहालम्बनानुमित्यात्मकाभावो गगनवानित्याकारकानुमितिनिष्ठप्रतिबध्यतानिरूपितताया वह्न्यधिकरणवृत्तित्ववान् गगनाभाववान् वह्न्यधिकरणवृत्तित्ववांश्चाभाव इति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायास्तत्र सत्त्वादिति केचित् ।

प्यर्थमेवेति वाच्यम् पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्धूमत्ववद्वृत्तिधूमत्ववद्धूमेऽतिव्याप्तिरिति ध्येयम्(१)।

अथ वह्न्यभाववद्ह्रदादावसम्भवः ह्रदत्वविशिष्टविषयकानिश्चयविशिष्टवह्न्यभाववद्ह्रदत्वविशिष्टविषयकानिश्चयत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्टद्वयघटितत्वादिति। (न च परस्परं यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वं निवेशनीयम् अतो न कोऽपि दोष इति वाच्यम् तथासत्यपि वह्न्यभाववद्ह्रदत्वादिविशिष्टविषयकानिश्चयविशिष्टवह्न्यभाववद्ह्रदत्वादिविशिष्टविषयकनिश्चयत्वस्य परस्परमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वात्तादृशविशिष्टद्वयघटितत्वस्य बाधादौ सत्वादसम्भवतादवस्थ्यादिति चेन्न) यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वस्य विवक्षितत्वात्।

(अन्येतु परस्पराघटकयादृशविशिष्टविषयक इत्यादेर्वक्तव्यत्वान्नोक्तदोष इत्याहुः।)

अथैवमपि वन्ह्यभाववज्जलादिमद्वृत्तिजलाभाववद्ह्रदपक्षकवह्निसाध्यकस्थले तादृशजलवद्ह्रदात्मकाश्रयासिद्ध्यादावव्याप्तिः। तत्र तादृशविशिष्टद्वयघटितत्वात्। (न चाश्रयासिद्धिविषयताघटकविषयताभिन्नत्वं तादृशविशिष्टद्वयाविषयतायां निवेशनीयमिति नोक्तदोष इति वाच्यम्। तथासति तादृशरीत्या साध्याप्रसिद्धि·

---

टि० (१) अथ यत्र ह्रदत्वप्रतियोगिकस्वरूपसम्बन्धेन ह्रदत्वविशिष्टस्य पक्षता वह्नेः साध्यता ह्रदत्वप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभाववज्जलवत्कालीनजलवज्जातिमत्कालीनघटस्य हेतुत्वं तत्र वह्निव्यापकीभूताभावप्रतियोगिवह्न्यभाववज्जलवत्कालीनजलवज्जातिमत्कालीनघटरूपासाधारण्येऽव्याप्तिः तत्र तादृशविशिष्टद्वयविषयतात्मकवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयतायां जलवद्ह्रदत्वावच्छिन्नविषयतासत्त्वात् जलवज्जातिमदन्तर्गतजलवद्ह्रदत्वावच्छिन्नविषयतासत्त्वादिति चेन्न यादृशप्रतिबन्धकतानतिरिक्तवृत्तितादृशप्रतिबन्धकतावच्छेदकीभूततादृशविशिष्टद्वयविषयताशून्यत्वस्य विवक्षितत्वादिति ध्येयम्॥

विषयताघटकविषयताभिन्नत्वस्यापि निवेशनीयतया गौरवापत्तेः ग्रन्थकारस्य सत्प्रतिपक्षविषयताभिन्नत्वमात्रनिवेशानौचित्याच्च । न च यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टघटकत्वं तादृशविशिष्टद्वये निवेशनीयमतो नोक्तदोष इति वाच्यम् । तथासत्युक्तस्थले एव वन्ह्यभाववज्जलवत्कालीनजलवद्ह्रदादेरपि दोषत्वापत्तेर्वन्ह्यभाववज्जलवद्[illegible]दिरूपविशिष्टस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकविशिष्टघटकत्वाद्विशिष्टपक्षग्रहाविरोधितया कालीनत्वघटितविशिष्टस्याश्रयासिद्ध्यात्मकत्वाच्च । न च वन्ह्यभाववज्जलवत्कालीनत्वकालीनजलवद्ह्रदादिरूपविशिष्टद्वयस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तविषयताकविशिष्टाघटकत्वेन तादृशविशिष्टद्वयघटितत्वान्नोक्तातिव्याप्तिरिति वाच्यम् कालीनत्वादिघटितविशिष्टद्वयस्य धारणासंभवस्योपरिष्टाद्वक्ष्यमाणत्वादिति चेन्न यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टविषयताघटकविषयताभिन्नत्वस्य निरुक्तविषयितायां निवेशनीयत्वात् । एवञ्च विशिष्टद्वयाघटितत्वशरीरे प्रागुक्तासंभववारणाय प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वमपि नोपादेयम् वन्ह्यभाववद्ध्रदत्वाविशिष्टविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टविषयिताघटकविषयिताभिन्नत्वस्यासत्त्वात् ।

वस्तुतस्तु लाघवाद्विशिष्टद्वयाघटितत्वशरीरे ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकविषयिताभिन्नत्वमेव विशिष्टद्वयविषयितायां निवेशनीयमिति न दोषः । नन्वेवं ह्रदो वह्निमान्वह्न्यभाववज्जलवत्कालीनजलाभाववद्ध्रदादित्यत्र वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिस्तत्र ज्ञानवैशिष्ट्यानवच्छिन्नं यद्धेतुमत्ताग्रहप्रतिबन्धकत्वं तदवच्छेदकविषयिताकविशिष्टविषयिताभिन्नं यन्निरुक्तविशिष्टद्वयविषयित्वं तच्छून्यप्रतीतिविषयत्वस्योक्तविशिष्टे सत्त्वात् । न च तादृशविशिष्टान्तरं यज्जलवद्ध्रदादि उक्तविशिष्टस्य तद्घटितत्वान्नातिव्याप्तिरिति वाच्यम् । विशेष्यगुणवद्धटादिसङ्ग्रहायाग्रे वक्ष्यमाणस्य यत्किञ्चित्प्रतिबन्धकताघटितविशिष्टान्तराघटितत्वस्य ज्ञान-

वैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादायोक्तविशिष्टेऽक्षतत्वात् ।

अथ वक्ष्यमाणयत्किञ्चित्प्रतिबन्धकताघटितविशिष्टान्तराघटितत्वकल्पे विशिष्टद्वयाघटितत्वनिवेश एव नास्ति । स्वावच्छिन्नविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयतात्वस्य कालीनत्वादिघटितविशिष्टविषयतायामपि सत्त्वात् तत्र स्वावच्छिन्ननिरूपितत्वस्य च विरहेण वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिविरहादिति । न च स्वावच्छिन्नविषयित्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयताशून्यज्ञानीयत्वनिवेशस्यावश्यकतया तत एव कालीनत्वघटितविशिष्टविषयिताव्युदास इति वाच्यम् स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशे प्रागुक्तयुक्त्या ह्रदो वह्निमानित्यत्र वन्ह्यभाववज्जातिमद्ध्रदादावतिव्याप्तिरतः स्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयत्वाव्यापकविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयत्वं तद्रूपावच्छिन्नविषयित्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वमित्येव वक्तव्यम् तेन कालीनत्वघटितविशिष्टविषयिताव्युदाससम्भवादिति चेन्न यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्येव स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्याप्यवश्यं निवेशनीयत्वात् अन्यथा व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्पक्षस्य सत्प्रतिपक्षत्वे तु तत्राऽव्याप्त्यापत्तेः । तादृशप्रतिबन्धकतावच्छेदकप्रकृतहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षविषयितायाः स्वावच्छिन्ननिरूप्यत्वाभावादिति वक्ष्यमाणकल्पे विशिष्टद्वयाघटितत्वमवश्यं निवेशनीयमिति ।

नैवम् । स्वव्यापकत्व—स्वव्यभिचारित्वोभयसम्बन्धेन प्रतिबन्धकताविशिष्टान्यज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तियादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तादृशविशिष्टद्वयाघटितत्वनिवेशेनैवोक्तदोषाणां वारणसम्भवात् । ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिवेशात् वन्ह्यभाववद्ध्रदादौ न प्रागुक्तासम्भवः । तादृशप्रतिबन्धकतायां निरुक्तोभयसम्बन्धेन प्रतिबन्धकताविशिष्टान्यत्वनिवेशात्प्रोक्ताश्रयासिद्ध्यादाव

व्याप्तिः । न च वन्ह्यभाववज्जलवद्वृत्तिजलाभाववद्ध्रदपक्षकस्थले वन्ह्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्तिः । यत्र घटकालीनवह्न्यभाववज्जलवृत्तिजलवद्ध्रदस्य स्वरूपासिद्धत्वं तत्र वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिश्च ।

अत्राहुः—ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताशून्यस्वावच्छिन्नविषयताशालिनिश्चयवृत्तियादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयघटितं यत्त्वं तत्पर्याप्तावच्छेदकताकविषयिताशून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितत्वपदेन विवक्षितत्वात् । स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकताविशिष्टान्यत्वस्य वा (१)विवक्षितत्वादिति ।

केचित्तु वह्न्यभाववद्ध्रदादौ प्रागुक्तासम्भववारणाय स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयिताकान्यत्वेन विशिष्टद्वयं निवेशनीयम् । तथाच स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयताकान्ययादृ-

---

टि० (१) न च तथापि यत्र गगनाभाववत्प्रतियोगित्ववत्कालीनवह्नेः साध्यत्वं गगनस्य हेतुत्वं पक्षत्वञ्च तत्र गगनाभाववत्प्रतियोगित्ववत्कालीनवह्निव्यापकीभूताभावप्रतियोगिगगनरूपासाधारण्येऽव्याप्तिः तस्य ज्ञानवैशिष्ट्यावच्छिन्नहेतुमत्ताग्रहप्रतिबन्धकत्वमादाय विशिष्टद्वयघटितत्वस्य सत्त्वादिति वाच्यम् तत्र व्यतिरेकव्याप्त्यन्वयव्याप्त्युभयव्याप्तिविशिष्टप्रकृतपक्षधर्मिकप्रकृतहेतुमत्तानिश्चयस्याहार्यत्वेनाप्रतिबध्यत्वादिति । न च तथापि यत्र गगनाभाववद्वह्निमद्वृत्तित्ववत्कालीनवह्नेः साध्यत्वं गगनवदभाववज्जलस्य हेतुत्वं ह्रदस्य पक्षत्वं तत्र तादृशसाध्यव्यापकीभूताभावप्रतियोगि—अभाववज्जलरूपासाधारण्येऽव्याप्तिः, एवं यत्र गगनस्य पक्षत्वं वह्नेः साध्यत्वं गगनाभाववद्वह्निव्यापकाभावप्रतियोगित्ववत्कालीनगगनस्य हेतुत्वं तत्रासाधारण्येऽव्याप्तिश्चेति वाच्यम् स्वावच्छिन्नविषयकत्वावच्छिन्नत्वपदेन स्वावच्छिन्नविषयकत्वव्यापकत्वस्य विवक्षितत्वात् । व्यापकत्वं च स्वानाश्रयत्व—स्वकालीनपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभाववत्तासम्बन्धेन । तथाचासाधारण्यप्रतिबन्धकताविशिष्टान्यत्वस्य हेतुमत्ताग्रहप्रतिबन्धकतायामसत्त्वान्नाव्याप्तिरिति भावः ॥

शविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्ति तादृशविशिष्टद्वयघटितत्वावच्छेदकं यद्यत्त्वं तदन्यत्वं दोषतावच्छेदके निवेशनीयमतो नोक्तदोषः। तादृशनिश्चयविशिष्टनिश्चयत्वे स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वनिवेशान्न प्रागुक्ताश्रयासिद्धावव्याप्तिः। निश्चयविशिष्टनिश्चयत्वानिवेशान्नोक्तविशिष्टद्वयघटितत्वावच्छेदकस्वपदार्थाप्रसिद्धिनिबन्धनो दोषः। स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयताकान्यत्वेन यादृशविशिष्टद्वयविशेषणासम्भवः। तत्रापि प्रतिबन्धकतासामान्यनिवेशेन वह्निमज्जलवत्कालीनजलाभाववद्ध्रदपक्षकस्थले वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादौ नातिव्याप्तिः। न च वह्न्यभाववज्जलवत्त्वविशिष्टविषयकनिश्चयविशिष्टजलवद्ध्रदादिविशिष्टविषयकनिश्चयत्वस्य निश्चयद्वयसाधारणतया वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदत्वरूपस्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तित्वविरहान्निरुक्तस्वपदार्थाप्रसिद्धिरिति वाच्यम् स्वावच्छिन्नविषयित्वव्यापकत्वस्वरूपसम्बन्धरूपस्वावच्छिन्नविषयित्वावच्छेद्यत्वोभयवत्प्रतिबन्धकतानतिरिक्तवृत्तित्वस्य (१)विवक्षितत्वादिति प्राहुः।

---

टि०(१) एतेन ह्रदो वह्निमानित्यादौ वह्न्यसमानाधिकरणजलवद्ध्रदरूपबाधेऽव्याप्तिः तत्र वह्निमदवृत्तिमत्तानिश्चयत्वेनैकं प्रतिबन्धकत्वम् अपरञ्च वह्निमदवृत्ति जलमिति-निश्चयविशिष्टजलवत्तानिश्चयत्वेन। निरुक्तस्वव्यापकत्व-स्वभिचारित्वोभयसम्बन्धेन प्रतिबन्धकताविशिष्टान्यतया प्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकवह्निमदवृत्तिजलरूपविशिष्टजलवद्ध्रदरूपविशिष्टद्वयघटितत्वादिति निरस्तम्। तादृशविशिष्टविषयकनिश्चयविशिष्टाविशिष्टविषयकनिश्चयत्वस्य स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गतवह्निमदवृत्तिमत्तानिश्चयप्रतिबन्धकतानतिरिक्तवृत्तित्वविरहेण स्वपदेन निरुक्तबाधत्वस्य धर्तुमशक्यत्वादव्याप्तिविरहात्। अत एव स्वनिरूपितप्रतिबध्यतावच्छेदकाविषयित्वावच्छिन्नानुमितित्वव्यापकप्रतिबध्यतानिरूतप्रतिबन्धकतानतिरिक्तवृत्तियादृशविशिष्टविषयकनिश्चयविशिष्टवि-

स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयादृशविशिष्टविष-
यकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं स्वावच्छिन्नवि-
षयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशविशिष्टद्वय-
घटितत्वावच्छेदकं यद्यत्त्वं तदन्यत्वेन लक्ष्यतावच्छेदकं विशेषणी-
यमतो न कोपि(१) दोष इत्यपरे(२) ॥
यत्तु ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकीभूतविष-
यिताशून्यज्ञानीयविषयिताभिन्ना या तादृशविशिष्टद्वयविषयता
तच्छून्यप्रतीतिविषयतावच्छेदकत्वेन लक्ष्यतावच्छेदकं विशेषणी-
यम् तथाच वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदात्मकाश्रयासिद्धि-
ज्ञानीयविषयताया ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छे-
दकत्वविरहेण तादृशप्रतिबन्धकतानवच्छेदकीभूतविषयिताशू-
न्यज्ञानीयविषयिताभिन्ना या उदासीनज्ञानीयतादृशविशिष्टद्वय-
विषयता तच्छून्यप्रतीतिविषयतावच्छेदकत्वस्याश्रयासिद्धित्वादौ
सत्त्वान्न तत्रातिव्याप्तिः। वह्निमज्जलवत्कालीनजलाभाववद्ध्रदहेतुक-
स्थले च वह्न्यभाववज्जलवद्वृत्तिजलत्ववद्ध्रदत्वस्य तादृशप्रतिबन्ध-
कतानवच्छेदकीभूतवृत्तित्वविषयताशून्यजलवान्ह्रद इत्यादिज्ञानीय-
विषयताभिन्नैव वह्न्यभाववज्जलवद्वृत्तिजलवान् ह्रद इत्यादिज्ञानीय-
तादृशविशिष्टद्वयाविषयतेति तच्छून्यप्रतीतिविषयतावच्छेदकत्वा-
भावात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादौ नातिव्याप्तिरिति।
तन्मन्दम्। उक्तरीत्या मेयत्वविशिष्टव्यभिचारादेर्वारणसम्भवे व-
क्ष्यमाणविशिष्टान्तराघटितत्वविशेषणवैयर्थ्यापत्तेः। वह्न्यभाववज्जल-

---

टि०षयकनिश्चयत्वे तादृशविशिष्टद्वयाघटितत्वनिवेशात्पूर्वोक्ताश्रया-
सिद्ध्यादौ नातिव्याप्तिरित्यपि प्रत्युक्तम्। निरुक्तबाधेऽव्याप्त्या-
पत्तेरिति ध्येयम् ॥

(१) वह्निर्धूमवान् वह्नेरित्यादौ एकत्र द्वयमिति रीत्या धूमा-
भावधूमाभाववद्वृत्तिवह्न्यादावतिव्याप्तिवारणाय विशिष्टान्तराघटि-
तत्वस्य सार्थक्यं बोध्यम्।

(२) केचित्तु परेत्वित्यादिकल्पद्वय एव अभावः संयोगेन वह्नि-
मानित्यादौ प्रतियोगितासम्बन्धेन वह्न्यवच्छेदेन वह्न्यभाववद्वह्नि-
त्यतिव्याप्तिः तत्र वक्ष्यमाणयुक्त्या ज्ञानाविशिष्टज्ञानत्वेन प्रतिबन्धक-
तासत्त्वेपि स्वपदेन धर्तुमशक्यत्वादिति ध्येयम्।

तत्कालीनत्वाभाववज्जलवत्कालीनजलाभाववद्ध्रदपक्षकवह्निसाध्यकस्थले वह्निमज्जलवत्कालीनजलवत्कालीनजलाभाववद्ध्रदपक्षकवह्निसाध्यकस्थले च वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेऽतिव्याप्त्यापत्तेश्च उक्तज्ञानीयविषयताया तादृशप्रतिबन्धकतावच्छेदकत्वाभावात्(१)।

अथ घटो गगनाभाववदभाववत्कालीनगगनवानित्यादौ गगनाभाववदभाववत्कालीनगगनाभाववद्घटरूपबाधेऽव्याप्तिः तादृशबाधज्ञानस्य शुद्धगगनवत्ताबुद्धिं प्रति अभाववान् गगनाभाववानभाववांश्च घट इत्याकारकनिश्चयस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वस्यावश्यकत्वेन तत एवोपपत्तौ गगनाभाववदभावकालीनगगनवत्ताबुद्धिं प्रति तादृशगगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वान्तरे मानाभावेन गगनाभाववान् अभाववानित्याकारकनिश्चयविशिष्टाभाववद्घटविषयकनिश्चयत्वस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तितया तादृशविशिष्टद्वयविषयकत्वस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतया च गगनाभाववदभाववत्कालीनगगनाभाववद्घटत्वस्य तादृशविशिष्टद्वयविषयताशून्यप्रतीतिविषयतावच्छेदकत्वाभावादिति। न च वह्न्यभाववज्जलवद्वृत्तिजलाभाववद्ध्रदपक्षकस्थले वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदात्मकपा

टि० (१) स्वानवच्छेदकीभूतविषयतावत्त्वसम्बन्धेन निरुक्तयत्किञ्चित्प्रतिबन्धकताविशिष्टान्यज्ञानीयविषयताभिन्नत्वनिवेशे निरुक्तविशिष्टघटकविषयतायां कस्या अपि प्रतिबन्धकतावच्छेदकत्वाभावान्निरुक्तविशिष्टज्ञानस्य निरुक्तसम्बन्धेन तादृशसकलप्रतिबन्धकताविशिष्टतया अतिव्याप्तिवारणेऽपि वह्न्यभाववद्ध्रदादावसम्भवः लाघवादवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वविषयतानिरूपितअभावविषयता इत्यादिक्रमेण विषयताप्रतिबन्धकत्वकल्पनाद्वह्नित्वावच्छिन्नविषयताया अनवच्छेदकतया निरुक्तसम्बन्धेन सकलप्रतिबन्धकताविशिष्टत्वात्। न चावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वविषयतया वह्न्यभाववान् ह्रद इति ज्ञानेऽसम्भव इति वाच्यम् पारतन्त्र्येण तादृशभानाङ्गीकारात्। एतच्च व्याप्त्यनुगमे भट्टाचार्येण लिखितत्वादिति ध्येयम्॥

गुकाश्रयासिद्ध्यादावव्याप्तिवारणाय विशिष्टद्वयाघटितत्वघटकी-भूतज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां स्वव्यापकत्व-स्वव्य-भिचारित्वोभयसम्बन्धेन स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्ध-कताविशिष्टान्यत्वमनिवेश्य तादृशोभयसम्बन्धेन तादृशानुमितित्व-व्यापकप्रतिबन्धकतानिरूपितस्वावच्छिन्नविषयित्वावच्छिन्नप्रतिब-ध्यताविशिष्टान्यत्वमेव निवेश्यम् तथा चोक्तस्थलीयबाधनिश्चयस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वान्तरासत्त्वेऽपि प्रकृतसाध्य-वत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतासत्त्वेनोक्त-बाधज्ञानीयज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायास्तादृशप्रतिबध्य-ताविशिष्टत्वान्नोक्तबाधाव्याप्तिः। न चोक्तस्थले गगनाभाववद-भाववत्कालीनघटाभाववद्घटादावतिव्याप्तिः तज्ज्ञानीयप्रतिबन्ध-कतायां तादृशप्रतिबध्यताविशिष्टान्यत्वाभावादिति वाच्यम्, स्वावच्छिन्नविषयकत्वावच्छिन्नतादृशानुमितित्वव्यापकप्रतिबन्धक-तानिरूपितप्रतिबध्यत्वाप्रसिद्ध्यैवोक्तातिव्याप्त्यनवकाशादिति वाच्य-म्। ह्रदो वह्निमान् वह्न्यभाववज्जलवद्वृत्तिजलाभावव्याप्यादित्यत्र व-ह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्त्यापत्तेः तज्ज्ञानीयवैशिष्ट्या-वच्छिन्नप्रतिबन्धकतायां तादृशानुमितित्वव्यापकतादृशजलाभाव-व्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपिता या स्वाव-च्छिन्नविषयित्वावच्छिन्नप्रतिबध्यता तद्विशिष्टत्वात्। न चानुमिति-त्वव्यापकयादृशरूपावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावि-शिष्टान्यत्वम् अनुमितित्वव्यापकतादृशरूपावच्छिन्नप्रतिबध्यतानिरू-पितप्रतिबन्धकतानतिरिक्तवृत्तित्वनिवेशान्नोक्तदोष इति वाच्यम्। सत्प्रतिपक्षादावव्याप्त्यापत्तेः तत्र स्वावच्छिन्नविषयित्वावच्छिन्न-निरुक्तप्रतिबध्यत्वाप्रसिद्धेरिति चेन्न।

यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्च-यत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति प्रतिबध्यताविशिष्टान्यतादृ-शविशिष्टद्वयविषयताशून्यत्वस्य निवेशनीयत्वात्। प्रतिब-ध्यतावैशिष्ट्यं च स्वावच्छेदकत्व-स्वनिरूपितप्रतिबन्धकतानव-च्छेदकविषयताशून्यज्ञानवृत्तितादृशानुमितित्वव्यापकप्रतिबध्यता-निरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन। स्वनिरूपितप्रति-बन्धकत्वञ्च स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रति-

वन्धकतावच्छेदकीभूतप्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मानवच्छिन्नत्वे सति ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन विवक्षणीयम्। अतो जलाभावव्याप्यसाध्यकह्रदपक्षकस्थले स्वपदेन जलाभावव्याप्यवत्त्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितजलत्वावच्छिन्नप्रकारताशालिप्रतिबध्यतामादाय जलाभावव्याप्याभाववज्जलवद्वृत्तिजलवद्ध्रदादौ नातिव्याप्तिः। न वा वह्निसाध्यकस्थले वह्निमान् जलाभाववान् वह्निमांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकतानिरूपितप्रतिबध्यतामादाय वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादौ अतिव्याप्तिः। एवञ्चोक्तस्थलीयबाधनिश्चयस्य तादृशविशेषाभाववत्ता-निश्चयत्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाभावेऽपि विशेषधर्मावच्छिन्नसाध्यवत्तानिश्चयप्रतिबध्यतासत्त्वात्तादृशबाधज्ञानीयविशिष्टद्वयविषयिताया निरुक्तोभयसम्बन्धेन तादृशप्रतिबन्धकताविशिष्टत्वान्नोक्तबाधेऽव्याप्तिः। संसर्गघटकीभूतानुमितित्वव्यापकप्रतिबध्यतायां स्वनिरूपितप्रतिबन्धकताशालिज्ञानीयत्वनिवेशे ह्रदो वह्निमान्धूमादित्यत्र वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिस्तज्ज्ञानीयविशिष्टद्वयविषयतायास्तादृशजलाभाववत्तानिश्चयप्रतिबध्यताविशिष्टत्वादतः स्वनिरूपितप्रतिबन्धकतानवच्छेदकीभूतविषयिताशून्यज्ञानीयत्वनिवेशः। तन्निवेशे च जलाभाववत्तानिश्चयप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकविषयताशून्यज्ञानीयानुमितित्वव्यापकप्रतिबध्यतासत्त्वान्नातिव्याप्तिः। न चैवं वह्निमज्जलवद्वृत्तिजलाभाववद्ध्रदादिहेतुकस्थले वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिः तज्ज्ञानीयविशिष्टद्वयविषयतायाः हेतुमत्ताग्रहप्रतिबध्यताविशिष्टत्वादिति वाच्यम्। उभयसम्बन्धघटकस्वावच्छेदकत्वपदेन स्वानवच्छेदकविषयिताशून्यज्ञानीयत्वस्य विवक्षितत्वात्। एवञ्च सम्बन्धघटकीभूतस्वनिरूपितप्रतिबन्धकतायां प्रागुक्तजनकतावच्छेदकधर्मानवच्छिन्नत्वं विशेषणं ज्ञानवैशिष्ट्यानवच्छिन्नत्वविशेषण(१)ञ्चानुपादेयमेव।

टि० (१)ह्रदो वह्निमान् वन्ह्यभाववज्जलादिमद्वृत्तिजलाभावव्याप्यादित्यादावतिव्याप्तिभियाऽनुमितित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टान्यत्वनिवेशमुपेक्ष्यैतादृशनिवेशः कृत इति ध्येयम्।

इदन्त्वद्धेयम्। ह्रदो वह्निमान् वन्ह्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनधूमादित्यादौ वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः तादृशविषयताद्वयस्य निरुक्तोभयसम्बन्धेन ह्रदो वह्निमान् वह्निव्याप्यवह्न्यभाववज्जलवद्वृत्तिजलाभाववद्वह्निमत्कालीनधूमवांश्चेत्याद्यनुमितिनिष्ठं यद्वह्न्यवच्छेदेन वन्ह्यभाववज्जलवद्वृत्तिजलाभाववत्तानिश्चयविशिष्टवह्निमत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकत्वं तन्निरूपितप्रतिबध्य(१)ताविशिष्टत्वात्। स्वनिरूपितप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे एतद्दोषवारणसम्भवादित्याहुः[२]। अत एव स्वावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वस्वरूपोभयसम्बन्धेन यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकं प्रतिबन्धकत्वं तद्रूपवत्त्वं लक्षणार्थं इत्युक्तौ वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशज्ञाने व्यावर्तकज्ञानीयप्रतिबन्धकतायाः स्वावच्छेदकत्वसम्बन्धेन सत्त्वेन स्वावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वघटितोभयसम्बन्धेन तादृशविशिष्टविषयकनिश्चयत्वाव्यापकत्वात्तादृशविशिष्टेऽतिव्याप्तिविरहेण विशिष्टद्वयाघटितत्वानिवेशनं व्यर्थमिति निरस्तम्। गगनाभाववदभाववत्कालीनगगनाभाववत्घटात्मकबाधेऽव्याप्त्यापत्तेस्तादृशबाधनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रति-

---

टि०(१)एवं वह्निव्याप्याभाववद्वह्न्यभाववत्कालीनह्रदो वह्निव्याप्यवानित्यादौ वह्न्यभाववद्वह्निव्याप्याभाववद्वह्न्यभाववद्ध्रदरूपोदासीनेऽतिव्याप्तिवारणाय प्रागुक्तजनकतावच्छेदकधर्मावच्छिन्नेत्यादिविशेषणस्यापि देयत्वादिति।

(२) ननु तथापि बाधग्रन्थे भट्टाचार्येण साध्यासमानाधिकरणधर्मवत्पक्षस्यापि बाधत्वस्य स्वीकारेण तादृशबाधज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशविषयितायां प्रतिबध्यताविशिष्टान्यत्वेनाव्याप्त्यापत्तेरिति चेन्न अगत्या विशिष्टद्वयविषयितायां तादृशबाधविषयिताभेदनिवेशनैव तद्वारणसम्भवादिति। वस्तुतस्तु निरुक्तस्थले गगनाभाववद्घट एव बाधः तत्रान्यथा गगनाभाववदभाववत्कालीनगगनकालीनगगनाभाववद्घटस्यापि लक्ष्यत्वस्य सुवचत्वादिति ध्येयम्।

बन्धकतया तादृशत्वस्य च निरुक्तोभयसम्बन्धेन तादृशबाधविषयकनिश्चयत्वाव्यापकत्वादिति ध्येयम् ।

अथाभावपक्षकसंयोगेन वह्निसाध्यकस्थले संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववद्वह्निमदात्मकेऽतिव्याप्तिः(१) प्रतियोगितासम्बन्धेन वन्ह्यवच्छेदेन वन्ह्यभाववत्तानिश्चयकाले अभावत्वावच्छिन्नविशेष्यकप्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयस्य नैयत्येन तादृशविशिष्टविषयकनिश्चयस्य वह्न्यवच्छेदेन वन्ह्यभाववत्त्वनिश्चयत्वेन प्रतिबन्धकतयैवोपपत्तौ ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वान्तरे मानाभावात् उक्तज्ञानीयविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वविरहाच्च । न च प्रागुक्तबाधादावव्याप्तिभिया विशिष्टद्वयविषयितायां प्रतिबध्यताविशिष्टान्यत्वनिवेशेनैव वन्ह्यभाववद्धूमादावव्याप्तिवारणसम्भवाद्विशिष्टद्वयाघटितत्वशरीरे ज्ञानवैशिष्ट्यावच्छिन्नत्वनिवेश एव नास्तीति वाच्यम् वन्ह्यभाववद्धूमादौ लक्षणसम्भवेऽपि वन्ह्यभावव्याप्यवद्धूमादावव्याप्तिवारणाय तन्निवेशस्यावश्यकत्वात् इति चेन्न तत्तत्प्रतिबन्धकताभिन्नत्वेन प्रतिबन्धकताया विशेषणीयत्वादिति ।

वस्तुतस्तु प्रतियोगितासम्बन्धेन वह्निमान् वन्ह्याभाववान् वह्निमांश्च अभावः घटवान् वह्न्यभाववान् घटवांश्चाभाव इत्यादिनानाविधनिश्चयसाधारणनिश्चयविशिष्टनिश्चयत्वेनैवाभाव[illegible]धर्मिकवह्निप्रकारकबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकत्वं कल्पनीयम् न तु वन्ह्यवच्छेदेन वह्न्यभाववत्तानिश्चयत्वेन । निश्चयवैशिष्ट्यं च स्वसामानाधिकरण्य-स्वीयवन्ह्यभावत्वावच्छिन्नप्रकारताविशिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतानिरूपकत्वोभयसम्बन्धेन । तथा चोक्तस्थले ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय विशिष्टद्वयघटितत्वसत्त्वान्नातिव्याप्तिरिति

टि० (१) एवं रूपपक्षकरूपसाध्यकस्थले नीलरूपाभाववन्नीलेऽतिव्याप्तिः समवायसम्बन्धेन नीलावच्छेदेन नीलारूपाभावनिश्चयकाले रूपत्वसामानाधिकरण्येन नीलनिश्चयनैयत्येन नीलरूपाभावप्रकारकनीलविशेष्यकनिश्चयत्वेनैव प्रतिबन्धकत्वकल्पनादिति ।

*१- स्वनिरूपितविशेष्यतावच्छेदकतावत्त्वसम्बन्धेन

तु युक्तमुत्पश्यामः(१) ॥ ७ ॥

अथ यादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टाघटितत्वमेव निवेश्यतां किं विशिष्टद्वयाघटितत्वानिवेशेनेति चेत्।

अत्र केचित्—ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतालाभायैव तादृशाभिधानमित्याहुः। ८

परे तु यादृशविशिष्टपदेन वन्ह्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादेरिव वन्ह्यभाववज्जलवत्कालनिजलवद्ध्रदादेरप्युपादेयतया तादृशानन्तविशिष्टाघटितत्वानिवेशे गौरवमतो लाघवात्तद्घटकाविशिष्टद्वयमादाय तादृशविशिष्टद्वयाघटितत्वनिवेशनमेवोचितमिति। न च तादृशविशिष्टद्वयाघटितत्वनिवेशेऽपि वन्ह्यभाववज्जलादिमत्स्वरूपविशिष्टविषयकनिश्चयविशिष्टकालीनत्वविशिष्टजलवद्ध्रदत्वविशिष्टविषयकनिश्चयत्वादेरपि तादृशप्रतिबन्धकतावच्छेदकतया तादृशविशिष्टद्वयाघटितत्वस्यापि निवेशनीयत्वाद्गौरवं त-

---

(१) अत्रेदमवधेयम्। उक्तरीत्या नानाविधनिश्चयसाधारण्यानुरोधेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतासिद्धौ अभावो गगनवान् आधेयत्वादित्यत्र गगनत्वव्यापकीभूताभावप्रतियोगि-आधेयत्वरूपासाधारण्येऽव्याप्तिः। असाधारण्यशरीरे व्यापकताघटकतया पक्षांशे हेतुमत्त्वस्य निविष्टत्वेन विशिष्टद्वयघटितत्वादिति ध्येयम्।

परे तु विशिष्टद्वयाघटितत्वशरीरे ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकत्वप्रतिबध्यत्वादिविशिष्टान्यत्वादिकं न निवेश्यं परन्तु उक्तासम्भववारणाय विशिष्टद्वयविषयितायां प्रकृतानुमितिप्रतिबध्यतानवच्छेदकत्वविशिष्टप्रकृतानुमितिविरोध्यनुमितिजनकतानवच्छेदकत्वमेव निवेशनीयम्। एवञ्च बाधसत्प्रतिपक्षविषयताया निरुक्तजनकतानवच्छेदकत्वासम्भवान्नासम्भवः। उक्तस्थलीयवन्ह्यभाववद्वह्निमदात्मकविशिष्टविषयितायां तादृशजनकतानवच्छेदकत्वसत्त्वान्नातिव्याप्तिरित्याहुः। तन्न वह्निसाध्यकवन्ह्यभाववज्जलादिमद्वृत्तिजलाभावव्याप्यहेतुकस्थले वन्ह्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदेऽतिव्याप्त्यापत्तेस्तादृशविशिष्टविषयितायां प्रकृतानुमितिप्रतिबध्यतानवच्छेदकत्वविशिष्टनिरुक्तजनकतावच्छेदकत्वविरहादिति ध्येयम्।

...वेति वाच्यम् । यादृशविशिष्टविषयकनिश्चयवैशिष्ट्या...यादृशविशिष्टविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकताया...घटकत्वात् । वन्ह्यभाववज्जलवन्निश्चयविशिष्टकालीनजल...द्विषयकनिश्चयत्वेनाप्रतिबन्धकतया तादृशरूपस्योपादाना...वश्यकत्वाच्च ।

वस्तुतस्तु स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतानवच्छे...विषयिताशून्यप्रतीतिविषयतावच्छेदकत्वेन यादृशरूपद्वयं निवे...शनीयम् तावतैव कालीनत्वादिघटितविशिष्टस्योपादानासम्भवा...दिति प्राहुः(१)।

---

(१) अत्रेदं बोध्यम् । ननु तथापि समूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तिरूपावच्छिन्ननिरूपकताकत्वसम्बन्धेन प्रतिबध्यताविशिष्टान्यविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वस्यानुगतरूपेण लक्ष्यतावच्छेदके निवेशे लाघवसम्भवः । प्रतिबन्धकतावृत्तित्वं च स्वावच्छिन्नविषयताव्यापकतासम्बन्धेन । यदि चेदृशपरम्परासंसर्गो न स्वीक्रियते तदापि तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावृत्तिअभावप्रतियोगितानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितज्ञाननिष्ठावच्छेदकतानिरूपिताविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्रूपं प्रतिबध्यताविशिष्टान्यतद्रूपावच्छिन्नविषयिताशून्यत्वनिवेशसम्भवाल्लाघवसम्भव इति चेत्, अत्रोच्यते—जलवद्ध्रदकालीनवह्निमान्जलादित्यादौ जलवद्ध्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्येऽव्याप्तिः । निरुक्तासाधारण्यविषयकज्ञानत्वस्य ज्ञानविशिष्टज्ञानत्वनैयत्येनासाधारण्यस्य निरुक्तविशिष्टत्वात् । विशिष्टद्वयनिवेशे च प्रत्येकविशिष्टे प्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपकत्वविवक्षणान्नातिव्याप्तिः । न चाभावसंयोगेन वह्निमान् इत्यादौ प्रतियोगितासम्बन्धेन वन्ह्यवच्छेदेन वन्ह्यभाववत्यतिव्याप्तिरिति वाच्यम् अगत्या तत्प्रतिबन्धकतानिवेशेनैव तद्वारणसम्भवादिति ध्येयम् ।

अत्रेदं बोध्यम्। यादृशविशिष्टविषयकनिश्चयविशिष्टस्वविषयताशून्ययादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वनिवेशेनैव ह्रदत्वादिविशिष्टविषयकनिश्चयविशिष्टवह्न्यभाववद्ह्रदत्वाविशिष्टविषयकनिश्चयत्वमादाय नासम्भवः। एवं मेयत्वविशिष्टवह्न्यभाववद्ह्रदत्वविशिष्टविषयकनिश्चयविशिष्टस्वविषयताशून्यवह्न्यभाववद्ह्रदत्वविशिष्टविषयकनिश्चयत्वमादाय मेयत्वविशिष्टवह्न्यभाववद्ह्रदादावतिव्याप्तिवारणसम्भवे कृतं स्वतन्त्रविशिष्टान्तराघटितत्वनिवेशेनेति। न च विशेषगुणवद्घटादिरूपाश्रयासिद्ध्यादावव्याप्तिः विशेषगुणवद्घटानिरूपविशिष्टविषयकनिश्चयविशिष्टविशेषगुणवद्घटाविषयिताशून्यगुणवद्घटविषयकनिश्चयस्यानुमितिप्रतिबन्धकतया तादृशविशिष्टद्वयघटितत्वादिति वाच्यम् त्वन्मतेऽपि तस्य तादृशविशिष्टान्तराघटितत्वरक्षणाय यत्किञ्चित्प्रतिबन्धकतामादाय लक्षणसमन्वयेनैवास्मन्मतेऽपि स्वविषयिताशून्ययत्किञ्चिद्विशिष्टविषयकनिश्चयविशिष्टयत्किञ्चिद्विशिष्टविषयकनिश्चयत्वं यत्प्रतिबन्धकतानतिरिक्तवृत्ति तत्प्रतिबन्धकताभिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकत्वस्य लक्ष्यतावच्छेदके विवक्षणेनैव सामञ्जस्यादिति केचित्पूर्वपक्षयन्ति। एवं लक्ष्यत्वेनाभिमतपरम्।

तन्न एवंरीत्या विशिष्टान्तराघटितत्वखण्डने प्रागुक्तगगनाभाववदभावत्कालीनगगनाभाववद्घटात्मकबाधेऽव्याप्तिप्रसङ्गात्। तादृशविशिष्टनिश्चयस्य निरुक्तप्रतिबन्धकताभिन्नप्रतिबन्धकत्वस्यासत्त्वादिति ध्येयम्॥ ८॥

अथ यादृशविशिष्टविषयकनिश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धावच्छेदकतावद्यद्रूपावच्छिन्नविषयतासामान्यं तादृशविशिष्टविषयताविशिष्टतद्रूपावच्छिन्नविषयिताशून्यज्ञानीययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं तादृशानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वविवक्षणेनैवोपपत्तौ विशिष्टद्वयाघटितत्वशरीरेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशो व्यर्थ इति। न च पक्षवृत्ति जलमिति निश्चयविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुनिश्चयत्वेन प्रतिबन्धकतया जलत्वविशिष्टविषयकनिश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वस्य

वह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुरूपविशिष्टविषयितायां सत्त्वेन जलत्वविशिष्टजलरूपविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुरूपविशिष्टद्वयघटितत्वेनाऽसाधारण्येऽव्याप्तिवारणाय तत्सार्थक्यमिति वाच्यम्, यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चये प्रत्येकं तादृशविशिष्टविषयत्वाव्यापकीभूतविषयताशून्यत्वनिवेशस्यावश्यकतया जलत्वविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यजलमिति निश्चयवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वस्यासाधारण्यविषयितायां विरहेणासाधारणेऽव्याप्तिविरहात्। अन्यथाऽनतिरिक्तवृत्तित्वकल्पेऽपि अव्यापकीभूतविषयताशून्यत्वानिवेशे जातित्वादिना जलत्वाद्यवगाहिज्ञानसाधारणतादृशनिश्चयत्वस्य तादृशानुमितिप्रतिबन्धकतातिरिक्तवृत्तितया विशिष्टद्वयाघटितत्वनिवेशनमाकिञ्चित्करं स्यात्। यदि च प्रथमविशिष्टविषयकनिश्चयेऽव्यापकीभूतविषयिताशून्यत्वं न निवेश्यं शुद्धजलत्वविशिष्टजलव्यापकताघटितसम्बन्धस्य शुद्धजलत्वविशिष्टजलधर्मितावच्छेदककज्ञाने एव भानात् जातिमद्व्यापकताघटितसंसर्गावगाहिज्ञाने वह्न्यभाववज्जलवद्रूपविशिष्टविषयित्वाभावादिति मन्यते, तदापि असाधारणेऽव्याप्तिवारणायैव तादृशाव्यापकीभूतविषयिताशून्यत्वं निवेशयितुमिष्यते तावतापि अप्रामाण्यज्ञानाभावाद्यनिवेशेनानतिरिक्तवृत्तित्वरूपापेक्षया लाघवादिति चेत् अत्राहुः—

जलवत्समानकालीनपर्वतो जलवत्समानकालीनपर्वतकालीनवह्निमान् जलादित्यत्र जलवत्समानकालीनपर्वतकालीनवह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारणेऽव्याप्तिस्तत्र जलप्रकारकपक्षविषयकनिश्चयविशिष्टजलवत्समानकालीनपर्वतकालीनवह्निव्यापकीभूताभावप्रतियोगिहेतुनिश्चयत्वेन प्रतिबन्धकतया तादृशपक्षरूपतादृशासाधारण्यरूपविशिष्टद्वयघटितत्वादतोऽनतिरिक्तवृत्तित्वनिवेश इति। न च यद्रूपावच्छिन्नविषयितानिरूपितयद्रूपावच्छिन्नविषयता तादृशविशिष्टविषयित्वाव्यापिका तद्रूपावच्छिन्नविषयतानिरूपिततद्रूपावच्छिन्नविषयताशून्यत्वनिवेशे नोक्तातिव्याप्तिः तत्र प्रतिबन्धकीभूतहेतुमत्पक्षविषयकज्ञाने हेतुतावच्छेदकावच्छिन्नविषयतानिरूपिततादृशपक्षविषयताया अव्यापिकायास्तत्त्व

न्यत्वाभावात् इति वाच्यम् । यत्र स्वरूपसम्बन्धेन जलविशिष्टं यत्संयोगेन जलवज्जलं तस्य पक्षत्वं स्वरूपवज्जलवज्जलवज्जलकालीनवह्नेः साध्यत्वं स्वरूपवज्जलस्य हेतुत्वम् । साध्यघटकसकलजलवत्त्वं संयोगेन ग्राह्यम् । तत्रत्यासाधारण्ये स्वरूपजलवज्जलवज्जलात्मकतादृशासाधारण्यात्मकतादृशविशिष्टद्वयघटितत्वात् ।

अथवा यत्र जलवज्जलवज्जलवज्जलस्य पक्षत्वं स्वरूपवज्जलवज्जलवज्जलकालीनवह्नेः साध्यत्वम्, अत्र पक्षघटकप्रथमजलस्य वैशिष्ट्यं स्वरूपेण, अन्यजलवैशिष्ट्यं तु संयोगेन साध्यघटकसकलजलवत्त्वमेव संयोगेन बोध्यम्(१) । तत्र स्वरूपवज्जलवज्जलवज्जलवज्जलरूपविशिष्टस्वरूपवज्जलवज्जलवज्जलवज्जलकालीनवह्निव्यापकीभूताभावप्रतियोगिस्वरूपवज्जलात्मकासाधारण्यरूपविशिष्टद्वयघटितत्वेनाव्याप्तिरतोऽनतिरिक्तवृत्तित्वनिवेशः । अत एव यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वम् अनुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वे सति ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकं तादृशविशिष्टद्वयाघटितत्वनिवेशस्यैव सम्यक्त्वे अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वप्रवेशो व्यर्थ इति परास्तमिति ध्येयम् ।

केचित्तु अनुमितिं प्रति चिकीर्षासामग्र्याः प्रतिबन्धकतया कृतिसाध्यपाकत्वविशिष्टविषयकनिश्चयविशिष्टसाधनीभूतपाकत्वविशिष्टविषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतया च तादृशविशिष्टद्वयविषयताशून्यत्वनिवेशे महागौरवम्, अनतिरिक्तवृत्तित्वनिवेशे च कृतिसाध्यपाकत्वविशिष्टविषयकनिश्च-

---

(१) वस्तुतस्तु पक्षघटकप्रथमवैशिष्ट्यमपि संयोगसम्बन्धेन पक्षे हेतुमत्ताज्ञानन्तु द्वितीयजलांशे जलत्वेन जलत्वावगाहि, तथाच तादृशभ्रमेऽव्यापकीभूतविषयताशून्यत्वान्निरुक्तदोषसङ्गतिः । एतेन स्वतन्त्रयद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नसंसर्गतानिरूपितयद्रूपावच्छिन्नविषयत्वमव्यापकं तद्रूपावच्छिन्नविषयताशून्यत्वनिवेशान्नोक्तभ्रमसङ्ग्रह इति परास्तम् । जलत्वेन जलत्वावगाहिनिरुक्तभ्रमस्य धर्तुं शक्यत्वादिति ध्येयम् ॥

यविशिष्टत्साधनीभूतपाकत्वविशिष्टविषयकनिश्चयत्वस्यानुमिति-समानकालीनताद्दशविशिष्टविषयकनिश्चयविशिष्टताद्दशविशिष्टवि-षयकनिश्चये फलेच्छाद्यसमानकालीनताद्दशनिश्चये च सत्वेनानु-मितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् याद्दशविशिष्टपदेन क्वतिसा-ध्यपाकत्वविशिष्टत्साधनीभूतपाकत्वविशिष्टरूपविशिष्टद्वयस्य ध-र्तुमशक्यत्वेन तद्घटितत्वानिवेशाल्लाघवमित्याहुः(१) ॥ ९ ॥

अथ याद्दशविशिष्टविषयकनिश्चयविशिष्टयाद्दशविशिष्टविषय-कनिश्चयत्वमित्यत्र शेषांशे निश्चयत्वस्य संशयान्यज्ञानत्वरूपस्याऽवश्यं विवक्षणीयतया ताद्दशविशिष्टविषयकस्यापि तादात्म्य-सम्बन्धेन वैशिष्ट्याभिधानादेवोपपत्तौ प्रथमनिश्चयनिवेशनमनति-प्रयोजकमिति चेन्न ।

तादात्म्येन याद्दशविशिष्टविषयकवैशिष्ट्याभिधाने तादात्म्येन वन्ह्यभाववज्जलवदात्मकविशिष्टविषयकज्ञानविशिष्टजलवद्ध्रदवि-शिष्टविषयकनिश्चयस्ताद्दशोभयविषयकोऽप्रसिद्ध एव तदुभयविष-यकज्ञानस्य प्रसिद्धत्वेऽपि प्रत्येकविषयत्वाव्यापकीभूतविषयताशू-न्यत्वविरहात् याद्दशविशिष्टद्वयपदेन वन्ह्यभाववज्जलवदात्मकविशि-

---

टि०(१) वस्तुतस्तु तद्वत्ताबुद्धौ बाधनिश्चयस्येव बाधानिश्चयसा-मग्र्या अपि प्रतिबन्धकत्वमस्तीति प्राचां मते नीलपर्वतो महानसीय-वह्निमानित्यादौ महानसीयवह्न्यभाववन्नीलपर्वतादिरूपबाधेऽव्याप्ति-स्तत्र महानसीयवह्निनिश्चयस्य नीलपर्वतनिश्चयस्य च प्रतियोगिता-वच्छेदकविशिष्टप्रतियोगिविधया अनुयोगितावच्छेदकविशिष्टानु-योगिनिश्चयविधया च बाधज्ञानकारणत्वेन तस्य चैकतरनिश्चयविशि-ष्टापरनिश्चयत्वेन प्रतिबन्धकत्वान्महानसीयवह्नेर्नीलपर्वतस्य च यथो-क्तरूपाक्रान्तत्वान्नीलपर्वतो महानसीयवन्ह्यभाववानिति-ज्ञानविष-यमहानसीयवन्ह्यभाववन्नीलपर्वतस्य महानसीयवह्निनीलपर्वतोभय-घटितत्वाच्च । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे तु बाध-निश्चयकारणान्तरासमानकालीनताद्दशोभयनिश्चयस्य नीलपर्वतो महानसीयवन्ह्यभाववानिति ज्ञानाप्रतिबन्धकत्वात् नीलपर्वतनिश्चय-त्वस्य महानसीयवह्निनिश्चयत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वान्नो-क्तदोष इति ध्येयम् ।

स्य
ष्टजलवद्ध्रदविशिष्टस्य च धर्तुमशक्यत्वेन वन्ह्यभाववज्जलादिमद्वृ-
त्तिजलवद्ध्रदेऽतिव्याप्तिः तादृशविशिष्टद्वयाप्रसिध्या असंभवापत्ति-
र्वा स्यादतः सामानाधिकरण्यरूपवैशिष्ट्यनिवेशस्यावश्यकत्वेन प्र-
थमनिश्चयत्वनिवेशनमावश्यकमिति । न च यादृशविशिष्टद्वयपदेन
वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदरूपविशिष्ट एव धर्तव्यः । तथाच या-
दृशविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्यवन्ह्यभाववज्जलवद्वृ-
त्तिजलवान्ह्रद इत्याकारकनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकतान-
च्छेदकतया नातिव्याप्तिरसंभवो वेति वाच्यम् । यादृशविशिष्टविषय-
कनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति इत्यस्यैव सम्यक्त्वे
विशिष्टद्वयप्रवेशस्य वैयर्थ्यापत्तिरित्यस्य समाधाने वृत्तित्वादिघटित-
विशिष्टसाधारणासंभवस्य प्रागेवोक्तत्वात् । न च यादृशविशिष्टविष-
यित्वाव्यापिका सती यादृशविशिष्टविषयित्वाव्यापिका या विषयिता
तच्छून्यनिवेशान्न पूर्वोक्तदोषाणामवकाश इति वाच्यम् । तथासति ह्रद-
पक्षकजातिमज्जलवत्कालीनवन्हिसाध्यकानुमितौ जातिमज्जलवत्काली
नवन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्त्यापत्तिः जातिमज्जलवत्का-
लीनवन्ह्यभाववज्जलवदात्मकविशिष्टविषयिताविशिष्टजलवद्ध्रदविष-
यित्वाव्यापकत्वस्य जातिमज्जलवत्त्वावच्छिन्नविषयितायामसत्त्वान्नि-
रुक्ताव्यापकीभूतविषयिताशून्यजलवाञ्जातिमज्जलवत्कालीनवन्ह्यभा-
ववाञ्जातिमांश्च जलवानित्यादिनिश्चयेऽपि जातिमज्जलवत्कालनिव-
न्ह्यभाववज्जलवदात्मकाविशिष्टविषयकविशिष्टजलवद्ध्रदात्मकाविशि-
ष्टविषयकनिश्चयत्वस्य सत्त्वेनानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात्
यादृशविशिष्टपदेन निरुक्तविशिष्टद्वयस्य धर्तुमशक्यत्वादिति ध्येयम् ।
अथैवमपि पक्षवृत्तित्वाघटितासाधारण्यानुरोधेन यादृशविशि-
ष्टविषयकनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहे-
तुमत्ताज्ञानकालीनत्वोभयाभावस्तादृशत्वस्य विशेष्यदले विवक्षित-
त्वे ह्रदो वन्हिमाञ्जलादित्यादौ जलव्यापके वन्ह्यभावेऽतिव्याप्तिस्तादृ-
विषयित्वव्यापकत्वस्य प्रकृतानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमा-
त्ताज्ञानकालीनत्वोभयाभावे सत्त्वादिति चेन्न ।
एतन्मते वाह्निव्यापकीभूताभावप्रतियोगिजलादावेव जलव्यापक-
वन्ह्यभावस्यासाधारण्यरूपतया भट्टाचार्येण सव्यभिचारे लिखि-
तत्वात् ।

अथ तथापि जलावच्छिन्नधर्मिकवह्निमत्ताबुद्धिं प्रति जलत्वावच्छिन्नधर्मिकवन्ह्यभावव्याप्यत्वज्ञानप्रतिबन्धकतायाः परामर्शग्रन्थे भट्टाचार्येण स्वयं व्यवस्थापितत्वात् जलवान्वह्निमानित्यादौ वन्ह्यभावव्याप्यत्वविशिष्टजलेतिव्याप्तिः(१)तस्य पक्षाघटितत्वेन सत्प्रतिपक्षत्वाभावादिति चेन्न। पक्षसाध्यग्रहाविरोधित्वे सति विशिष्टपक्षे विशिष्टसाध्यग्रहविरोधित्वरूपबाधविभाजकस्य तत्र सत्त्वेन बाधमध्येऽन्तर्भावसम्भवात् तदनन्तर्भावे तु तत्तत्प्रतिबन्धकतामेदस्य लक्षणे निवेशनीयत्वाददोषः(२)।

एतेन ह्रदो वह्निमाञ्जलादित्यादौ वन्ह्यभाववज्जलवद्ह्रदात्मकेऽतिव्याप्तिः तद्विषयकत्वव्यापकत्वस्यानुमित्यप्रतिबन्धकत्वपक्षधर्मताज्ञानकालीनत्वोभयाभावे सत्त्वादित्यपि परास्तम् (३) ॥ १० ॥

अथ ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववदनुमितिप्रतिबंधकतावच्छेदकं यद्रूपावच्छिन्नविषयित्वं तद्रूपावच्छिन्नो दोष इत्यत एव सामंजस्ये किं विशिष्टद्वयाघटितत्वनिवेशनेनेति चेत् अत्राहुः—

तत्र यदि अनुमितिप्रतिबंधकतावच्छेदकत्वं स्वरूपसंबन्धरूपं तदा हेतुमत्पक्षेऽतिव्याप्तिः तादृशोभयाभाववदसाधारण्यज्ञानप्रतिबंधकतायाः स्वरूपसंबन्धरूपावच्छेदकत्वस्य हेतुमत्पक्षविषयितायां सत्त्वात्। यदि चानतिरिक्तवृत्तित्वं निवेश्यते तदा जलं वह्नि

---

(१) एवं ह्रदधर्मिकवह्निमत्ताबुद्धिं प्रति वह्निव्यापकाभावप्रहस्य प्रतिबन्धकत्वस्य व्याप्त्यनुगमग्रन्थे भट्टाचार्येण व्यवस्थापितत्वात् तथाच ह्रदो वह्निमानित्यादौ वह्निव्यापकाभाववद्ह्रदे चातिव्याप्तिरिति।

(२) ह्रदधर्मिकवह्निबुद्धिं प्रति वन्ह्यसमानाधिकरणधर्मवत्ताज्ञानस्यापि प्रतिबन्धकतया वन्ह्यसमानाधिकरणधर्मवद्ह्रदस्य बाधत्वं बाधग्रन्थे दीधितिकृतोक्तम्। परामर्शग्रन्थे तस्य प्रतिबन्धकत्वमतविशेषाभिप्रायेणोक्तमिति चेन्नातिशङ्कापीति ध्येयम्।

(३)तस्यापि व्यभिचारमध्ये प्रवेशादिति हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य इति साधारणग्रन्थे दीधितिकतोक्तत्वात् इति भावः।

मञ्जलादित्यादौ वन्ह्यभाववद्वह्निव्यापकीभूताभावप्रतियोगित्ववद्वृत्ति-तादृशप्रतियोगित्ववज्जलरूपासाधारण्यघटितेतिऽव्याप्तिरतो विशिष्ट्याघटितत्वनिवेशनम्। एतेन पक्षधर्मिकहेतुमत्ताज्ञानभिन्नज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमपि न सत्, तत्रापि स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे हेतुमत्पक्षेऽतिव्याप्तिः ह्रदो वह्निमाञ्जलादित्यादौ वह्न्यभाववज्जलवदादावतिव्याप्तिश्च। अनतिरिक्तवृत्तित्वरूपनिवेशे चोक्तस्थले जलवद्ह्रदकालीनवह्न्यभाववज्जलवदादावतिव्याप्तिः जलवद्ह्रदज्ञानविशिष्टवह्न्यभाववज्जलवाद्विषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः तादृशज्ञानभिन्नज्ञानवैशिष्ट्यानवच्छिन्नतया तत्प्रतिबन्धकतानतिरिक्तवृत्तित्वस्य तादृशविशिष्टविषयितायां सत्त्वात्। यद्यपि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वासाधारण्यविषयताभिन्नत्वोभयाभाववद्यद्रूपावच्छिन्नविषयितासामान्यमनुमितिप्रतिबन्धकतायाः स्वरूपसंबन्धरूपावच्छेदकतावत्तद्रूपवत्त्वं वक्तव्यमतो न पूर्वोक्तातिव्याप्तिः। न चैवं वह्न्यभाववद्ह्रदादावव्याप्तिः तद्विषयतायामभाववान्वह्न्यभाववानभाववांश्च ह्रद इत्यादिज्ञाननिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वासाधारण्यविषयताभिन्नत्वयोः सत्त्वादिति वाच्यम् ज्ञानवैशिष्ट्याद्यनवच्छिन्नप्रतिबन्धकतानवच्छेदकत्वासाधारण्यविषयताभिन्नत्वोभयाभावस्य विवक्षितत्वात्। न चैवमपि बाधाद्येकदेशेऽतिव्याप्तिः तज्ज्ञानीयैकदेशविषयितायां निरुक्तोभयाभावसत्त्वादिति, एवं उदासीनज्ञानीयैकदेशविषयतायां निरुक्तोभयाभावासत्त्वादिति वाच्यम्। यद्रूपावच्छिन्नविषयितात्वावच्छेदेन निरुक्तोभयाभावस्य विवक्षितत्वादिति। यद्यपि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितत्वासाधारण्यविषयित्ववृत्तित्वोभयाभाववत्प्रतिबन्धकतावच्छेदकतावद्यद्रूपावच्छिन्नविषयितासामान्यं तद्रूपवत्त्वं वक्तव्यमतो नोक्तदोष इति। तन्मन्दम् प्रागुक्तजलं (ह्रदो) वह्निमाञ्जलादित्यादौ वह्न्यभाववद्वह्निव्यापकीभूताभावप्रतियोगित्ववद्वृत्तितादृशप्रतियोगित्ववज्जलरूपासाधारण्यघटितेऽतिव्याप्त्यापत्तेः। यदि चासाधारण्यविषयितापदेनासाधारण्यविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयविषयित्वं विवक्ष्यते तदा स्वरूपसम्बन्धरूपावच्छेदकत्वकल्पोऽपि साधीयानिति कश्चिदुपैति। तदपि न वह्निमज्जलवत्कालीनजलाभा-

ववद्ध्रदपक्षकवह्निसाध्यकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदेतिव्याप्तिः तादृशविशिष्टविषयितायां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतावच्छेदकत्वादिति ध्येयम्(१)॥ ११ ॥

अथानुमितिप्रतिबन्धकतानवच्छेदकविषयताशून्यज्ञानवृत्तिवद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्युक्तावेव सामञ्जस्ये कृतं विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वाव्यापकीभूतविषयताशून्यत्वविशेषणानिवेशेनेति । न चैवं वह्न्यभावाद्येकदेशेऽतिव्याप्तिः वह्न्यभाववान्हृद इति ज्ञानीयवह्न्यभावत्वाद्यवच्छिन्नविषयिताया एव तादृशप्रतिबन्धकतानवच्छेदकविषयताशून्यज्ञानीयत्वेन तस्याः तादृशप्रतिबन्धकतानतिरिक्तवृत्तित्वादिति वाच्यम् । वह्न्यभाववत्कालीनजलवान् वह्न्यभाववान् तादृशजलवांश्च ह्रद इति ज्ञानस्याप्यनुमितिप्रतिबन्धकत्वात्तादृशप्रतिबन्धकतानवच्छेदकविषयिताशून्यवह्न्यभाववत्कालीनजलवान्वह्न्यभाववानिति-ज्ञानेऽपि वह्न्यभावत्वावच्छिन्नविषयतायास्सत्त्वेनानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वादिति चेन्न वह्न्यभाववज्जलवत्कालीनत्वाभाववज्जलवत्कालीनजलाभाववद्ध्रदपक्षकवह्निसाध्यकस्थले वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदादावतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वस्य एकत्र द्वयमिति रीत्या वह्न्यभाववद्धूमाभाववद्ध्रदादावतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वस्य सार्थक्यात् । न च यत्किञ्चित्प्रतिबन्धकतानवच्छेदकविषयिताशून्यत्वनिवेशेनोक्तातिव्याप्तिवारणं सम्भवतीति वाच्यम् एवमपि ह्रदो वह्निमान्धूमादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वस्य मेयत्वाविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वस्यावश्यकत्वात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयतामात्र-

---

(१) एवं संयोगाभाववद्वृक्षेऽतिव्याप्तिस्तस्यालक्ष्यताया बाधग्रन्थे भट्टाचार्येण स्वीकारात् अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्य ज्ञाने विशेषणीयतया तत्कालीननिरुक्तबाधज्ञानत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात् समानाकारकज्ञानीयविषयिताया ऐक्यात् भट्टमते तादृशविषयितासामान्ये स्वरूपसम्बन्धरूपावच्छेदकत्वादिति ।

स्य मेयत्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयतामात्रस्य च वह्न्यभाववज्जलवद्वृत्तिजलवान् धूमाभाववान् तादृशजलवांश्च ह्रदः मेयत्वविशिष्टवह्न्यभाववान् धूमाभाववान् मेयत्वविशिष्टवह्न्यभाववांश्च ह्रद इति ज्ञाननिष्ठं यदनुमितिप्रतिबन्धकत्वं तदनवच्छेदकविषयिताशून्यज्ञानीयत्वात्। न च यत्प्रतिबन्धकतानतिरिक्तवृत्तित्वं तत्प्रतिबन्धकतानवच्छेदकविषयिताशून्यत्वविवक्षणे नोक्तदोष इति वाच्यम् तथा सति गोत्वाभावो गोत्वाभाववानित्यादौ बाधप्रतिबन्धकतामादाय बाधभ्रमविषये गोत्वाभावादावतिव्याप्त्यापत्तेरिति। न च स्वानवच्छेदकविषयिताशून्यज्ञानीयविषयितावच्छेदकयद्रूपावच्छिन्नविषयित्वव्यापकं प्रतिबन्धकत्वं तद्रूपवत्त्वमित्युक्तौ नोक्तदोषः उक्तबाधप्रतिबन्धकतानवच्छेदकविषयिताशून्यविषयितावच्छेदकं यत् गोत्वाभावत्वं तदवच्छिन्नविषयित्वाव्यापकत्वात्तत्प्रतिबन्धकत्वस्येति स्वपदमनुमिति प्रतिबन्धकतापरमिति वाच्यम्। एवमपि ह्रदो वह्निमानित्यादौ एकत्र द्वयमिति रीत्या वह्न्यभाववह्न्यभाववद्ध्रदे बाधप्रतिबन्धकतामादायातिव्याप्त्यापत्तेरिति(१) अत एव (२)स्वानवच्छेदकविषयताशून्यत्वस्वरूपोभयसंबन्धेन यद्रूपावच्छिन्नविषयिताव्यापकमनुमितिप्रतिबन्धकत्वमित्युक्तावेव सामञ्जस्ये विशिष्टद्वयाघटितत्वाविशिष्टान्तराघटितत्वनिवेशो व्यर्थ इति प्रलपितमप्यपास्तमिति कृतं पल्लवितेन॥ १२॥

अथ तादृशसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाव्यापकीभूतप्रतिबन्धकताशून्यज्ञानीययद्रूपावच्छिन्न-

---

(१) वस्तुतो ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदादावव्याप्तिः तत्रावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन निरवच्छिन्नवह्नित्वप्रकारतानिरूपिताभावविषयतेत्यादिक्रमेण विषयताशालिज्ञानस्यैव लाघवात्प्रतिबन्धकतया वह्नित्वावच्छिन्नप्रकारतायास्तादृशप्रतिबन्धकतानच्छेदकया तच्छून्यत्वाभावेन वह्न्यभाववद्ध्रदादावव्याप्तिः। एवं निरवच्छिन्नविशेषणतया वह्न्यभाववद्ध्रदादेरेव बाधता प्रतिबन्धकता च केवलविशेषणतयेति मते तत्राव्याप्तिश्चेति ध्येयम्।

(२) वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय स्वरूपेति। स्वानवच्छेदकेत्यादि। जलवद्ध्रदादावतिव्याप्तिवारणाय

विषयताव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमित्यस्यैव सम्यक्त्वे व्यर्थं विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वनिवेशनमिति । न च सर्वस्या एवं प्रतिबन्धकताया ज्ञानभेदेन भिन्नतया तादृशप्रतिबन्धकत्वाव्यापकत्वेन बाधप्रभृतावसम्भव इति वाच्यम् । अव्यापकप्रतिबन्धकतापदेन व्यापकत्वसम्बन्धेन तादृशप्रतिबन्धकताविशिष्टान्यप्रतिबन्धकत्वस्य विवक्षितत्वात् । नचैवमपि वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिः वह्न्यभाववज्जलवद्वृत्तिजलाभावात्मकविशेषाभाववत्ताबुद्धेः प्रतिबन्धकतायास्साध्यवत्ताबुद्धिप्रतिबन्धकत्वाव्यापकत्वेऽपि वह्न्यभाववज्जलवद्वृत्तिजलवान्धूमाभाववांस्तादृशजलवांश्च ह्रद इत्याकारकज्ञानीयहेतुमत्ताबुद्धिप्रतिबन्धकत्वव्यापकत्वेन तादृशविशिष्टविषयकनिश्चयस्य तादृशाव्यापकप्रतिबन्धकताशून्यत्वादिति वाच्यम् व्यापकतासम्बन्धेन स्वविशिष्टान्यप्रतिबन्धकताशून्यज्ञानीययद्रूपावच्छिन्नविषयताव्यापकं स्वं तद्रूपवत्त्वस्य विवक्षितत्वात् । तत्र स्वपदं अनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतापरम् । तथा चोक्तविशिष्टविषयकनिश्चयस्य हेतुमत्ताज्ञानप्रतिबन्धकताविशिष्टान्यप्रतिबन्धकताशून्यत्वेऽपि तादृशप्रतिबन्धकताया उक्तविशिष्टविषयत्वाव्यापकत्वान्नातिव्याप्तिः । एतेन मेयत्ववाच्यत्वोभयवद्धूमाभाववद्वृत्तित्वाभाववद्वह्निपक्षकधूमसाध्यकवह्निहेतुकस्थले मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तादृशव्यभिचारनिश्चयवृत्तिप्रतिबन्धकतामात्रस्यैवाश्रयासिद्धिप्रतिबन्धकताव्यापकत्वात् । एवं ह्रदो वह्निमान् वह्न्यभाववज्जलवद्वृत्तिमेयत्वविशिष्टजलाभावादित्यत्र वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः तादृशह्रदविषयकनिश्चयनिष्ठप्रतिबन्धकतामात्रस्यैव स्वरूपासिद्धिप्रतिबन्धकताव्यापकत्वात् अतः नोक्तकल्पः साधीयानित्यपि परास्तम् । न च धूमव्यभिचारिवह्निमदादावतिव्याप्तिः तज्ज्ञानस्य निर्धर्मितावच्छेदकतया तत्र व्याप्तिज्ञानप्रतिबन्धकत्वाव्यापकप्रतिबन्धकत्वविरहादिति वाच्यम् तत्रापि वह्निरवृत्तिरित्याकारकज्ञानप्रतिबन्धकतायास्तादृशप्रतिबन्धकत्वाव्यापिकायाः सत्त्वेनातिव्याप्तिविरहादिति ।

मैवम् द्रव्यं समवेतादित्यादौ द्रव्यत्वाभाववद्वृत्तिसमवेतवदादौ अतिव्याप्त्यापत्तेः । द्रव्यत्वाभाववद्वृत्तिसमवेतवादित्या-

कारकज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वाव्यापकीभूतप्रतिबन्धकताशून्यत्वात्। समवेतमवृत्तीत्यादिज्ञानस्याप्याहार्यत्वेनाप्रतिबध्यत्वात्। (यद्यपि समवायसम्बन्धावच्छिन्नत्वस्य समवेतत्वघटकतया तदवच्छिन्नेऽवृत्तित्वज्ञानं प्रति समवेतवानिति ज्ञानस्य विरोधित्वान्नातिव्याप्तिरिति उच्यते, तदापि यन्मतेऽसमानप्रकारकज्ञानस्य विरोधित्वं नास्ति तन्मते गगनादिधर्मिकावृत्तित्वज्ञानं प्रति गगनवत्ताबुद्धेरप्रतिबन्धकतया व्यभिचारवदादावतिव्याप्तेर्दुर्वारत्वात्। अनुमितिपरामर्शकार्यकारणभावग्रन्थेऽवृत्तित्वग्रहस्य वृत्तिमत्त्वग्रहं प्रति ग्राह्याभावावगाहितया विरोधित्वात् तादृशपरामर्शं प्रति विरोधित्वेमानाभावादित्युक्तम् संगच्छते इति ध्येयम्) न च द्रव्यत्वाभाववद्वृत्तिसमवेतवदिति ज्ञानं जायतामित्याकारकेच्छाप्रतिबन्धकत्वमादाय न तत्रातिव्याप्तिरिति वाच्यम्। इच्छात्वावच्छिन्नप्रतिबध्यत्वानिरूपितप्रतिबन्धकताया एव निवेश्यत्वात्, अन्यथा बाधादिविषयकतत्तज्ज्ञानं जायतामित्याकारकेच्छाप्रतिबन्धकतामादायासम्भवापत्तेरिति ध्येयम्।

केचित्तु व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तत्राव्याप्तिः तज्ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकत्वाव्यापकीभूतप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणहेत्वभावरूपविशेषाभाववत्ताज्ञानप्रतिबन्धकताशून्यत्वाभावात् इत्याहुः(१)।

नव्यास्तु सर्वत्वावच्छिन्नविशेष्यकगगनप्रकारकबुद्धेः किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितगगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वमिति सव्यभिचारे भट्टाचार्येण दर्शितमते सर्वं गगनवद्वाच्यत्वादित्यादौ गगनाभाववद्घटादेरपि बाधतया तत्राव्याप्तिः प्रकृतानुमितिप्रतिबन्धकत्वाव्यापकीभूतस्य घटो गगनवानित्यादिज्ञानीयघटत्वावच्छिन्नविशेष्यकगगनाभाव-

---

(१) निरवच्छिन्नस्वरूपसम्बन्धेन वह्न्यभाववद्ध्रदस्य बाधत्वमते प्रतिबन्धकत्वं च केवलस्वरूपसम्बन्धेनेति तत्रातिव्याप्त्यापत्तेः तादृशप्रतिबन्धकत्वाव्यापकं यन्निरवच्छिन्नस्वरूपेण वह्न्यभावाभाववत्ताबुद्धिं प्रति प्रतिबंधकत्वन्तच्छून्यत्वाभावादिति ध्येयम्॥

त्वावच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वस्य तादृशबाधनिश्चये सत्त्वादित्याहुः ॥ १२ ॥

प्रथमविशिष्टान्तराघटितत्वकल्पे स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नत्वमिति तु समुदितार्थः। अत्र स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशेऽभाववान् वह्न्यभाववान् अभाववांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकतावच्छेदकविषयिताकविशिष्टान्तरेण अभाववद्ध्रदादिना घटितत्वाद्बाधादावव्याप्तिः,(१)एवमसाधारण्यज्ञानीयप्रतिबन्धकतावच्छेदकविषयिताकहेतुमत्पक्षघटितवन्ह्यभाववज्जलवद्ध्रदात्मकबाधेऽव्याप्तिश्चातो अनतिरिक्तवृत्तित्वनिवेशः। मेयत्वविशिष्टव्यभिचारत्वाद्याश्रयाविषयकस्य व्यभिचारत्वावच्छिन्नविषयकप्रतीतावसत्त्वान्मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिरतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्वनिवेश इति भट्टाचार्येणोक्तम्। तन्न संगच्छते व्यभिचारत्वेन घटाद्यवगाहिप्रतीतेरेव मेयत्वविशिष्टव्यभिचारत्वाद्यश्रयाविषयकत्वेन तदीयविषयतावच्छेदकत्वस्य व्यभिचारत्वे सत्त्वात्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य मेयत्वविशिष्टव्यभिचारत्वादावसत्त्वादिति।

केचित् उक्तरीत्याऽसम्भवभयेन स्वाश्रयाविषयकप्रतीतिविषयवृत्ति-अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितावच्छेदकधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमेव निविष्टं तन्निवेशेनैव चातिव्याप्तिः सङ्गच्छते स्वस्य स्वाश्रयाविषयकप्रतीतिविषयवृत्तित्वाभावादित्याहुः।

परे तु व्यभिचारत्वेन घटाद्यवगाहिप्रतीतावपि स्वाश्रयाविषयकत्वं नास्ति सामानाधिकरण्यसम्बन्धेन साध्याभाववद्वृत्तित्वविशिष्टहेतुतावच्छेदकस्यैव व्यभिचारपदार्थतया सामानाधिकरण्यघटकत्वेन तादृशप्रतीतौ स्वाश्रयभानात् तथाच यथाश्रुतमेव सम्यग्-

---

(१) असाधारण्यविषयत्वानवच्छिन्नत्वज्ञानवैशिष्ट्यावच्छिन्नत्वोभयाभाववत्त्वस्य प्रतिबन्धकतायां निवेशेऽप्याह एवमिति।

त्याहुः(१) । न च स्वाश्रयाविषयकत्वनिवेशे प्रमेयं गगनवदित्यादौ स्वाश्रयाविषयकप्रतीत्यप्रसिध्या गगनाभाववत्प्रमेयात्मकबाधादावव्याप्तिसंभवेऽतिव्याप्तिदानमसङ्गतमिति वाच्यम्, प्रमेयनिष्ठगगनाभावादेरेव तत्र दोषत्वात् स्वाश्रयाविषयकप्रतीतिविषयतावच्छेदकं यत्तादृशं तदवच्छिन्नघटितत्वावच्छेदकं यद्यत्त्वं तदन्यत्वरूपे प्रतियोगिनि स्वत्वमन्तर्भाव्य विशिष्टान्तराघटितत्वं निवेश्याप्यव्याप्तिवारणसम्भवाच्च । नचैवं स्वपदार्थाप्रसिद्धिर्मेयत्वविशिष्टव्यभिचारादेरपि स्वपदेनोपादातुमशक्यत्वादिति वाच्यम् । धूमव्यभिचारिवह्निकालीनघटत्वादेरेव स्वपदेनोपादातुं शक्यत्वादिति ध्येयम् ॥१४॥

स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यदनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयतावच्छेदकं तदाश्रयाविषयकप्रतीतिविषयतावच्छेदकत्वनिवेशे प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्गगनाभाववन्मेयत्वादि तदाश्रयाविषयकप्रतीत्यप्रसिध्या अव्याप्तिरिति भट्टाचार्येणोक्तम् ।

अथ स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्साध्याभाववव्याप्यवृत्तित्वप्रभृतावच्छेदकं साध्याभाववद्वृत्तित्वव्याप्यहेतुतावच्छेदकं च तदाश्रयाविषयकप्रतीतिविपयतावच्छेदकत्वस्य स्वस्मिन्नसत्त्वात् सर्वत्रासम्भवसम्भवे अव्याप्तिदानमसङ्गतमिति चेत्,

अत्राहुः—घटो गगनवानित्यादौ गगनाभाववद्घटरूपबाधे लक्षणगमनात्रासम्भवः तत्र साध्याभाववद्वृत्तित्वरूपव्याप्तेः सत्प्रतिप-

---

(१) अत्र तदवच्छिन्नाविषयकप्रतीतिविषयवृत्तित्वनिवेशे प्रमेयमितिप्रतीतिमादाय मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिर्दत्ता भट्टाचार्येण । अत्रेयमाशङ्का—ननु प्रथमोपात्तस्वावच्छिन्नाविषयकेत्यस्य व्यावृत्तिमपहाय चरमव्यावृत्त्यनुसरणं सन्दर्भविरुद्धमिति चेन्न चरमावच्छेदकत्वनिवेशसत्त्व एव प्रथमा स्वावच्छिन्नेत्यस्य व्यावृत्तिः सम्भवति अन्यथा तन्निवेशेऽपि प्रमेयमिति-प्रतीतिविषयवृत्तित्वमादायातिव्याप्त्यापत्तेर्दुर्वारत्वात् । नहि प्रथमस्वावच्छिन्नत्वसत्त्व एव चरमावच्छेदकत्वं सार्थकं येन तदसत्त्वेऽपि व्यभिचारकालीनघटेऽतिव्याप्तिवारकतया सार्थकमिति ध्येयम् ।

क्षघटकत्वमते सत्प्रतिपक्षाभावात् पक्षावृत्तिसाध्यपक्षनिष्ठसाध्याभावादिकमादाय दोषस्यापि तदाश्रयनिष्ठमुख्यविशेष्यताशून्यत्वनिवेशेनैव वारणसम्भवात् । नचैवमपि पक्षनिष्ठसाध्याभावकालीनप्रमेयत्वादेरपि तादृशविशिष्टान्तरतया तदाश्रयनिष्ठमुख्यविशेष्यताशून्यत्वनिवेशेनैव प्रतीत्यप्रसिध्याऽसम्भवो दुर्वार एवेति वाच्यम् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यदनुमितिप्रतिबन्धकताया अनतिरिक्तवृत्तित्वे सति स्वरूपसम्बन्धरूपावच्छेदकताश्रयविषयतावच्छेदकं तदवच्छिन्नाघटितत्वस्य विवक्षितत्वात्(१) व्यापकसामानाधिकरण्यरूपसाध्याभावव्याप्तिविशिष्टधर्मादिकमादाय दोषस्य ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयित्वानवच्छिन्नत्वोभयाभाववत्प्रतिबन्धकतानिवेशेनापि वारणसम्भवात् । न चैवं प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिस्तत्र तादृशविशिष्टान्तरं यद्व्यभिचारादिकं तन्निष्ठमुख्यविशेष्यताशून्यमेयत्वविशिष्टधूमाभाववद्वृत्तिवह्निमानित्याकारकप्रतीतिविषयतावच्छेदकत्वादिति वाच्यम तदाश्रयनिष्ठमुख्यविशेष्यताशून्यज्ञानीयमुख्यविशेष्यतावच्छेदकत्वस्य विवक्षितत्वादिति ध्येयम् ।

अथवा अप्रसिद्धिनिबन्धनासंभवो न संभवतीति तदुपेक्षितमित्याहुः ७ ।

अथ स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकमनुमित्यवृत्तिविषयतावच्छेदकं यत्तदवच्छिन्नाघटितत्वेनैव सामञ्जस्ये कृतं प्रतिबन्धकतानतिरिक्तवृत्तित्वनिवेशनेनेति चेन्न पर्वतो वह्न्यभावव्याप्यवान्

(१) अत्र प्रकृतानुमित्यव्यवहितपूर्वक्षणज्ञानावृत्तिविषयितानिवेशे उक्तदोषवारणेपि जलाभाववद्वह्निमत्कालीनतत्पर्वतो पर्वतीयवह्न्यभाववान् जलादित्यादिस्थलीयपर्वतीयवह्निमत्तत्पर्वतरूपबाधेऽव्याप्तिः ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशक्षणज्ञानावृत्तिविषयिताकवह्निमत्पर्वतघटितत्वादिति । वस्तुतस्तु मेयत्वविशिष्टवह्न्यभावव्याप्यवद्ध्रदादावतिव्याप्तिः । तादृशविशिष्टान्तरं यः सत्प्रतिपक्षस्तस्य प्रकृतानुमितिवृत्तित्वात् सत्प्रतिपक्षनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्धकताया अस्वीकारादिति । एतच्च सत्प्रतिपक्षग्रन्थे "यदि चायं वह्निमान् वह्न्यभावव्याप्यवांश्चेत्यनुमितिः प्रामाणिकी" इत्यादिना दीधितिकृतोक्तत्वादिति ध्येयम् ।

पर्वतीयवह्न्यभावा दित्यादौ—

पर्वतीयवह्निमत्पर्वतरूपासिद्धावव्याप्यापत्तेः तत्र तादृशानुमित्यवृत्तिविषयताकतादृशविशिष्टान्तरेण वह्निमत्पर्वतेन घटितत्वादिति।(१)॥१५।

अथ यद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वकल्पे स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकरूपस्याप्रसिध्याऽसंभवं दत्वा भट्टाचार्येण दूषितम्।

अत्रावच्छेदकत्वद्वयम् अनतिरिक्तवृत्तित्वरूपं ग्राह्यम् अन्यथा प्रथमावच्छेदकत्वं यदि स्वरूपसम्बन्धरूपं तदा अभाववान् वन्ह्यभाववान् अभाववांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकताया अपि वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गततया तादृशप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयतावच्छेदकाप्रसिध्याऽसम्भवापत्तेः। एवं वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापकस्य प्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकताश्रयविषयतावच्छेदकीभूतविशिष्टान्तरं यत् ह्रदत्वादिकं तद्घटितत्वादुक्तदोषतादवस्थ्यम् अतो द्वितीयावच्छेदकत्वमप्यनतिरिक्तवृत्तित्वरूपं ग्राह्यम् । न च स्वावच्छिन्नविषयिताव्यापकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकतावद् यद्रूपावच्छिन्नविषयितासामान्यं तादृशविशिष्टान्तरविरक्षणे ह्रदत्वादिकमादाय न दोष इति वाच्यम् एवमपि धूमव्यभिचारिवह्निमान् धूमवान्वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचा-

---

(१) अत्र प्रकृतानुमित्यवहितपूर्वक्षणज्ञानावृत्तिविषयतानिवेशे उक्तदोषवारणेपि जलाभाववद्वह्निमत्कालीनतत्पर्वतो पर्वतीयवन्ह्यभाववान् जलादित्यादिस्थलीयपर्वतीयवह्निमत्तत्पर्वतरूपबाधेऽव्याप्तिः ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशक्षणवृत्तिज्ञानावृत्तिविषयिताकवह्निमत्तत्पर्वतघटितत्वादिति । वस्तुतस्तु मेयत्वविशिष्टवह्न्यभावव्याप्यवद्ध्रदादावतिव्याप्तिः । तादृशविशिष्टान्तरं यः सत्प्रतिपक्षस्तस्य प्रकृतानुमितिवृत्तित्वात् सत्प्रतिपक्षनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्धकताया अस्वीकारादिति । एतच्च सत्प्रतिपक्षग्रन्थे यदि चायं वह्निमान् वन्ह्यभावव्याप्यवांश्चेत्यनुमितिः प्रामाणिकी इत्यादिना दीधितिकृतोक्तत्वादिति ध्येयम् ।

...त्मकबाधाव्याप्तिः, तादृशबाधविषयिताव्यापकप्रतिबन्धक... सामान्यस्य स्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितासामान्य... प्रसिद्ध्या ह्रदो वह्निमान् वन्ह्यभावाभाववन्निरूपितत्वाभाववद्... कालीनधूमादित्यादौ हेतुविशेषणासिद्धिघटितसत्प्रतिपक्षा... प्रसङ्गाच्च । न च स्वावच्छिन्नविषयितानिष्ठस्वरूपसम्ब... रूपावच्छेदकताकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धरूपा... च्छेदकतावद् यद्रूपावच्छिन्नविषयितासामान्यं तादृशविशिष्टान्त... घटितत्वमित्युक्तौ नोक्तदोष इति वाच्यम् एवमपि धूमव्यभि... चारिवह्निमान्धूमवान्वन्हेरित्यादौ घटकालीनधूमव्यभिचारिवह्नि... त्मकेऽतिव्याप्तिः घटकालीनधूमव्यभिचारिवह्निमान्धूमाभावव... तिवाध्यज्ञानीयघटकालीनधूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयि... निष्ठावच्छेदकताकप्रतिबन्धकतासामान्यस्य स्वरूपसम्बन्धा... वच्छेदकतावद्विषयितासामान्यकं विशिष्टान्तरं यद्धूमा... भाववद्धूमव्यभिचारिवह्निमद्धदादि तद्घटितत्वस्य तत्र सत्त्वात् ।

वस्तुतस्तु वह्न्यभाववद्ध्रदवान् धूमाभाववान् तादृशह्रदवान्ह्रद... इत्यादिज्ञानीयप्रतिबन्धकताया अपि बाधविषयित्वावच्छिन्नप्रतिब... न्धकतासामान्यान्तर्गततया बाधविषयित्वावच्छिन्नप्रतिबन्धकता... सामान्यावच्छेदकविषयितासामान्यकरूपाप्रसिद्धेरेव सत्त्वादिति ध्येयम् ।

यदि च स्वावच्छिन्नविषयितासामान्यावच्छिन्नत्वानिवेशेनैवोक्तदो... षवारणसम्भवेऽनतिरिक्तवृत्तित्वप्रवेशो व्यर्थ इति मन्यते तदा... व्यापकसामानाधिकरण्यव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तत्राव्याप्तिः... निरुक्तविशिष्टान्तरं यज्जलह्रदादि तद्घटितत्वादिति तद्वारणायान... तिरिक्तवृत्तित्वनिवेश इति ध्येयम् ॥ १६ ॥

(वक्ष्यमाणयुक्त्या यदि स्वावच्छिन्नविषयित्वाव्यापकविषयिता... ज्ञानीयत्वं यद्रूपावच्छिन्नविषयित्वे निवश्यते तदा नोक्तदोषः... किन्तु घटो गगनाभाववदभाववत्कालीनगगनवानित्यादौ गगनाभा... ववदभाववत्कालीनगगनाभाववद्घटरूपबाधाव्याप्तिः तत्र तादृशबु... द्धीनविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया तादृशबाधत्वावच्छिन्नवि... षयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितासामान्यक... गगनाभाववद्घटत्वादिकं तद्घटितत्वात्, एवं व्यापकसामानाधिक... रण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षत्वे तत्र चाव्याप्तिः निरुक्तविशिष्ट...

न्तरं जलवद्ध्रदादि तद्घटितत्वादिति, तद्वारणायानतिरिक्तवृत्तित्व-निवेशः । )

अथ स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकत्वस्वावच्छिन्नविषयकप्रतीतिविषयतानिरूपकतावच्छेदकत्वोभयाभावकेवलान्वयि यत्स्वं तद्वत्त्वं हेत्वाभासत्वमित्युक्तावेनत्कल्पस्य निर्दोषत्वे कथं तत्परित्यक्तमिति । न च जातिमान्वन्ह्यभाववानित्यादिज्ञानवारणार्थं स्वावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितायां च स्वावच्छिन्नविषयत्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशस्यावश्यकत्वेन बाधविशिष्टव्यभिचारादावतिव्याप्तिः तत्र बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयतादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितावच्छेदकत्वघटितनिरुक्तोभयाभावस्य केवलान्वयित्वादिति वाच्यम् तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वमनिवेश्य यद्रूपावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशेनापि जातिमान्वन्ह्यभाववानित्यादिज्ञानवारणसंभवेन यद्रूपावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयद्रूपावच्छिन्नविषयकत्वं तादृशप्रतिबन्धकतासामान्यावच्छेदकं तत्त्व-स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वैतदुभयाभावस्य व्यभिचारविशिष्टबाधत्वादावसत्वात् केवलान्वयित्वविरहेण बाधविशिष्टव्यभिचारादावतिव्याप्त्यनवकाशादिति चेन्न । ह्रदे वन्ह्यभावः वन्ह्यभाववान् ह्रद इति ज्ञानद्वयसाधारणैकरूपेण प्रतिबन्धकत्वमते तादृशोभयाभावस्य ह्रदवृत्तिवन्ह्यभावत्वादावसत्त्वेन केवलान्वयित्वाभावादसंभवापत्तेः । न च ज्ञानद्वयसाधारणैकतादृशरूपस्य प्रतिबन्धकतामताश्रयणे भट्टाचार्योक्तयथाश्रुतकल्पे तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकस्य ह्रदवृत्तिवन्ह्यभावत्वादेरेव तादृशरूपस्य प्रसिद्धत्वात् वन्ह्यभाववद्ध्रदादावसंभवदानमसङ्गतमिति वाच्यम् । भट्टाचार्योक्तकल्पे तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वनिवेशस्य

वावश्यकत्वेन ह्रदवृत्तिवन्ह्यभावत्वादेस्तादृशविशिष्टान्तररूपत्वा-भावात् अन्यथा बाधविशिष्टव्यभिचाराद्यावतिव्याप्त्यापत्तेः। व्यभि-चारविशिष्टबाधत्वादेरेव तादृशरूपत्वेन प्रसिद्धत्वात् तदवच्छिन्ना-विषयकप्रतीतिविषयत्वस्य च तत्र सत्त्वात्।

अत एव भट्टाचार्योक्तकल्पे स्वावच्छिन्नविषयित्वावच्छिन्नप्रति-बन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकस्वपर्याप्त्य-वच्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयतावच्छेदकस्य तादृशविशिष्टान्तरपदेन विवक्षणे मेयत्वविशिष्टव्यभिचारादेरेव तादृशत्वेन तदवच्छिन्नाघटितत्वस्य व्यभिचारादौ सत्त्वा-दसंभवदानमसंगतमिति परास्तम्, तादृशप्रतिबन्धकतासामान्या-वच्छेदकविषयितायामुक्तयुक्त्या स्वावच्छिन्नविषयित्वाव्यापकीभू-तविषयताशून्यज्ञानीयत्वानिवेशस्यावश्यकत्वेन मेयत्वविशिष्टव्यभि-चारत्वादेरपि तादृशत्वाभावात्।

एतेन स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्याव-च्छेदकविषयितावच्छेदकस्वानवच्छिन्नप्रकारतावच्छेदकस्य विशि-ष्टान्तरपदेन विवक्षणे वन्ह्यभाववद्ध्रदकालीनघटत्वादेरेव तादृ-शत्वादसम्भवदानमसङ्गतमित्यपि परास्तम् ॥ १७ ॥

स्वावच्छिन्नाविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदक-विषयितानिरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयकप्रती-तिविषयतावच्छेदको यस्य एवंभूतं यत्स्वं मेयत्वविशिष्टव्यभि-चारत्वादि तदवच्छिन्नाघटितत्वमित्यत्रापि प्रतिबन्धकतावच्छेदक-त्वद्वयमनतिरिक्तवृत्तित्वरूपं ग्राह्यम्, अन्यथा उभयत्र स्वरूप-सम्बन्धरूपावच्छेदकत्वनिवेशे ह्रदो वन्हिमान्धूमादित्यादौ मेयत्ववि-शिष्टवन्ह्यभाववान् धूमाभाववान् तादृशवह्न्यभाववांश्च ह्रद इत्या-दिज्ञानीयप्रतिबन्धकताया अपि मेयत्वविशिष्टवन्ह्यभाववद्ध्रदत्वा-वच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यान्तर्गततया ता-दृशप्रतिबन्धकतावच्छेदकत्वस्य शुद्धवन्ह्यभाववद्ध्रदत्वावच्छिन्न-विषयतायामसत्त्वात् स्वपदार्थाप्रसिद्धिः स्यादतः प्रथमावच्छे-दकत्वमनतिरिक्तवृत्तित्वरूपम्। एवञ्च यत्र संयोगसम्बन्धावच्छिन्न-प्रतियोगित्वसंसर्गावच्छिन्नप्रतियोगिताकवन्ह्यभाववदभावस्य पक्ष-त्वं संयोगेन च वन्हेर्हेतुत्वं धूमादेः साध्यत्वं तत्र संयोगसम्बन्धाव-

च्छिन्नप्रतियोगितासम्बन्धेन वह्निविशिष्टाभावरूपाश्रयासिद्धिघटि-
तवन्ह्यभाववदभावरूपासिध्यादावव्याप्तिः तद्धटकवन्हिविशिष्टाभा-
वत्वस्य तादृशस्वरूपासिद्धिविषयताव्यापकप्रतिबन्धकतासामान्या-
वच्छेदकीभूततादृशस्वरूपासिद्धिज्ञानीयविषयतावच्छेदकत्वेन त-
स्या अपि स्वपदेन धर्तुं शक्यत्वात् । तादृशप्रतिबन्धकतावच्छेदक-
विषयतासामान्यकत्वविवक्षणे च अत्रैव मेयत्वविशिष्टस्वरूपासि-
द्ध्यादावतिव्याप्तिः मेयत्वविशिष्टतादृशासिद्धिविषयताव्यापकप्र-
तिबन्धकतासामान्यकत्वस्याप्रसिध्या स्वपदेन मेयत्वविशिष्टता-
दृशासिद्धं धर्तुमशक्यत्वात् ।

अथवा पर्वतत्वावच्छेदेन वन्ह्यभावस्य साध्यत्वे नीलत्वाभावस्य हे-
तुत्वे एकत्र द्वयमिति रीत्या वन्हिमन्नीलपर्वतेऽतिव्याप्तिः तत्र तादृशप्र-
तिबन्धकतासामान्यान्तर्गताया बाधप्रतिबन्धकतायाः स्वरूपासिद्धि-
प्रतिबन्धकतायाश्चावच्छेदकविषयितासामान्यकतादृशरूपाप्रसिध्या
स्वपदेन वह्निमन्नीलपर्वतत्वस्य धर्तुमशक्यत्वात् । वस्तुतो ह्रदो वह्नि-
मज्जलवत्कालीनवन्हिमान् जलाभावादित्यादौ वन्ह्यभाववज्जलवद्ध्र-
दात्मके साध्यविशेषणासिद्धस्वरूपासिद्धिघटितबाधेऽतिव्याप्तिः तत्र
तादृशप्रतिबन्धकतासामान्यावच्छेदकविषयितासामान्यकरूपाप्रसि-
ध्या स्वपदेन तस्य धर्तुमशक्यत्वात् । एवं गगनाभाववदभाववत्का-
लीनघटो गगनवानित्यादौ बाधाव्याप्तिश्च ।

नव्यास्तु विषयितासमसंख्याकप्रतिबन्धकतायाः अवच्छेदकता-
वच्छेदकसाधारणावच्छेदकत्वानभ्युपगमेन स्वावच्छिन्नाविषयकप्र-
तीतिविषयतावच्छेदकस्वावच्छिन्नाविषयकत्वव्यापकप्रतिबन्धकता-
सामान्यावच्छेदकाविषयतानिरूपकतावच्छेदकाऽप्रसिध्याऽसम्भवः ।
अतो द्वितीयावच्छेदकत्वमप्यनतिरिक्तवृत्तित्वरूपम् (१) ।

अथवा घटत्वावच्छेदेनाभाववदन्यत्ववैशिष्ट्येन प्रतियोगि-
तासम्बन्धेन वह्निमदन्यत्ववैशिष्ट्येन च घटितपक्षतावच्छेदकका-

---

(१) एवं प्रथमं स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशे वन्ह्यभाव-
वद्ह्रदकालीनघटेऽतिव्याप्तिः स्वपदेन तादृशकालीनघटत्वस्य धर्तुं-
मशक्यत्वात् । तादृशञ्च मेयत्वविशिष्टवन्ह्यभाववद्ध्रदत्वादिकं तद-
न्यत्वस्य सत्त्वात् । अनतिरिक्तत्वविशिष्टस्वरूपसम्बन्धरूपावच्छे-
दकत्वनिवेशे पूर्वोक्तस्थलद्वय एवाव्याप्तिरिति ध्येयम् ।

भावववदन्यघटकालीनपर्वतो द्रव्यवानित्यादिस्थले आश्रयासिद्धिप्र-घटिते वन्ह्यभाववद्घटेऽतिव्याप्तिः तादृशविशिष्टविषयित्वव्यापकप्र-तिबन्धकतासामान्यावच्छेदकत्वस्य विशिष्टविषयिताया एवासत्त्वेन स्वपदेन तादृशविशिष्टस्य धर्तुमशक्यत्वात्। एवं यत्र पर्वतत्वसा-मानाधिकरण्येन नीलत्वस्य वह्नेश्च प्रत्येकं दोषत्वं, तथा नीलत्वसा-मानाधिकरण्येनापि वह्नेर्दोषत्वं तत्र वह्निमन्नीलपर्वतादावतिव्याप्तिः अतो द्वितीयावच्छेदकत्वमप्यनतिरिक्तवृत्तित्वरूपं वाच्यम्॥ १८॥

स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकी-भूतयत्किञ्चिद्विषयित्वं यादृशयादृशधर्मावच्छिन्नानिरूपितं तादृशता-दृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्धर्मा-वच्छिन्नत्वम्, अथवा यद्धर्मावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धक-तासामान्यावच्छेदकीभूतविषयिताकाविशिष्टानिरूपितविषयितात्वं य-द्धर्मावच्छिन्ननिरूपितत्वव्याप्यं तद्धर्मावच्छिन्नत्वमेव समुदितार्थः इति कल्पद्वये बाधविशिष्टव्यभिचारेऽतिव्याप्तिर्दत्ता भट्टाचार्येण।

न च प्रथमलक्षणे वन्ह्यभाववद्ह्रदत्वावच्छिन्नविषयितायां वन्हि-त्वाद्यवच्छिन्नत्वनिरूपितत्वसत्वात्तदवच्छिन्नाविषयकप्रतीतिविषय-तावच्छेदकत्वस्य वन्ह्यभाववद्ह्रदत्वादावसत्वादसंभव इति वा-च्यम्। तादृशतादृशधर्मावच्छिन्नमुख्यविशेष्यताशून्यज्ञानीयमुख्य-विशेष्यतावच्छेदकत्वस्य विवक्षितत्वात्। यादृशयादृशधर्मावच्छि-न्नानिरूपितमित्यत्र यादृशयादृशधर्मघटितधर्मावच्छिन्नानिरूपितत्व-मेव वा निवेशनीयम्।

अत्र कल्पद्वये एव स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धक-तेत्यत्र अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं ग्राह्यम्। प्रतिबन्धक-तावच्छेदकेत्यत्रापि तथा, अन्यथा उभयत्र स्वरूपसम्बन्धरूपावच्छे-दकत्वे पर्वतो वह्निमान्धूमादित्यत्र पाषाणमयत्वविशिष्टपर्वतेऽति-व्याप्तिः। न च तथापि प्रतिबन्धकतावच्छेदकेत्यत्रानतिरिक्तवृत्तित्व-निवेश्यतां स्वावच्छिन्नविषयकत्वावच्छिन्नम् इत्यत्र तु स्वरूपमे-वास्तु, तथाच पाषाणमयत्वविशिष्टपर्वतत्वावच्छिन्नविषयकत्वाव-च्छिन्नप्रतिबन्धकताया अनतिरिक्तवृत्तिविषयतानिरूपकतावच्छे-दकरूपाप्रसिद्ध्या पाषाणमयत्ववत्पर्वते नातिव्याप्तिरिति वा-च्यम्। ह्रदो वह्निमान्धूमादित्यादौ जलवद्ह्रदेऽतिव्याप्त्यापत्तेः

जलवान्वन्ह्यभाववान् जलवांश्च ह्रद इत्यादिज्ञानीयजलवद्ध्रदत्वावच्छिन्नाविषयकत्वाद्यवच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतवन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयितायाः जलवद्ध्रदत्वावच्छिन्नानिरूपितत्वासत्त्वेन उदासीनयादृशधर्मावच्छिन्नानिरूपितत्वं तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य जलवद्ध्रदे सत्त्वात् । एवमभाववान् वन्ह्यभाववानभाववांश्च ह्रद इत्यादिज्ञानीयप्रतिबन्धकताया अपि तादृशप्रतिबन्धकतासामान्यान्तर्गतत्वेन तदनतिरिक्तवृत्तिविषयतावच्छेदकरूपाप्रसिध्या वन्ह्यभाववद्ध्रदादावव्याप्तेश्च । न चोक्तदोषभिया प्रथमावच्छेदकत्वमेवानतिरिक्तवृत्तित्वरूपं विवक्ष्यतां द्वितीयन्तु स्वरूपसम्बन्धरूपमेवेति वाच्यम् । धूमाभाववद्धूमव्यभिचारिवह्निमदादावव्याप्त्यापत्तेः तत्र धूमभाववद्धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयताव्यापकप्रतिबन्धकतासामान्यावच्छेदकं यद्रूपावच्छिन्नविषयतासामान्यं तद्रूपाप्रसिद्धेः(१) ॥ १९ ॥

अथ बाधविशिष्टव्यभिचारविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं न बाधत्वादिप्रत्येकधर्मावच्छिन्नविषयित्वमपि तु बाधविशिष्टव्यभिचारित्वावच्छिन्नविषयित्वमेवेति तत्र बाधविशिष्टव्यभिचारत्वावच्छिन्नानिरूपितामिति बाधविशिष्टव्यभिचारादावतिव्याप्तिरुक्ता भट्टाचार्येण ।

---

(१) अत्र कल्पचतुष्टये एवोभयत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे गुणः कपिसंयोगवानित्यादौ केवलस्वरूपसम्बन्धेन कपिसंयोगाभाववद्गुणेऽतिव्याप्तिः । तत्र च प्रतिबन्धकत्वं केवलस्वरूपसम्बन्धेन । दोषत्वञ्च निरवच्छिन्नस्वरूपसम्बन्धेनातोऽलक्ष्य... तत्र स्वावच्छिन्नविषयित्वावच्छिन्नेत्यत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे प्रथमकल्पे तत्रैव मेयत्वविशिष्टकपिसंयोगाभाववद्गुणे, द्वितीयकल्पे बाधादिकालीनघटादौ, तृतीयचतुर्थकल्पे तत्रैव कपिसंयोगाभाववद्गुणेऽतिव्याप्तिरिति । प्रतिबन्धकतावच्छेदकत्वं इत्यत्र स्वरूपसम्बन्धरूपावच्छेदकत्वानिवेशकल्पचतुष्टय एव निरुक्तकपिसंयोगाभावद्गुणेऽतिव्याप्तिरिति ध्येयम् । तादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वमित्यत्र तदनवच्छिन्नाविषयतावच्छेदकत्वनिवेशेनैवोपपत्तौ तावद्दूरानुधावनं व्यर्थमिति चिन्त्यम् ।

बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव-
सा न संगच्छते-बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वाव-
च्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतं यद्व्यभिचारविशिष्टबा-
धत्वावच्छिन्नविषयित्वं तत्र बाधविशिष्टव्यभिचारत्वावच्छिन्ना-
निरूपितत्वेन बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयकप्रतीतिवि-
षयतावच्छेदकत्वस्य बाधविशिष्टव्यभिचारत्वावच्छिन्नेऽसत्त्वात् ।
न च ह्रदे वन्ह्यभावः वन्ह्यभाववान् ह्रद इति
ज्ञानद्वयसाधारणैकप्रतिबन्धकत्वे वन्ह्यभाववद्ध्रदादावसंभवः
वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामा-
न्यावच्छेदकीभूतायाः ह्रदे वन्ह्यभाव इति-ज्ञानीयह्र-
दनिष्ठवन्ह्यभावत्वावच्छिन्नविषयितायां वन्ह्यभाववद्ध्रदत्वाव-
च्छिन्नानिरूपितत्वादिति तदसंभववारणाय तादृशप्रतिबन्धकतासा-
मान्यावच्छेदकयत्किञ्चिद्विषयत्वे स्वावच्छिन्नविषयकत्वसमानाधि-
करणाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नविषयितात्वं तद्रू-
पावच्छिन्नविषयिताशून्यज्ञानवृत्तित्वं स्वावच्छिन्नविषयित्वावच्छि-
न्नप्रतिबन्धकतासामान्यावच्छेदकविषयिताकविशिष्टे स्वावच्छिन्न-
निरूपितविषयताकत्वं वा विशेषणं देयमेवेति बाधविशिष्टव्यभि-
चारादावतिव्याप्तिरप्रत्यूहैवेति वाच्यम् कालिकादिसम्बन्धेन
वन्ह्यभाववत्ताज्ञानस्याप्रतिबन्धकतया स्वरूपसम्बन्धनिवेशस्याव-
श्यकतया स्वरूपसम्बन्धस्वरूपसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्ध-
मादायैकप्रतिबन्धकतायाः दुर्वचत्वाच्च । न च सप्तम्युल्लेखिप्रती-
तिस्थले स्वरूपसम्बन्धावच्छिन्नाधारतानिरूपिताधेयता भासते
प्रथमोल्लेखिप्रतीतिस्थले च स्वरूपसंबन्धावच्छिन्नाधेयतानिरूपित-
धारतेति ह्रदत्वावच्छिन्नविषयतानिरूपिताधारत्वविषयितानिरू-
पितनिरूपितत्वविषयतानिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्ववि-
षयितानिरूपितवन्ह्यभावत्वावच्छिन्नविषयताकैकनिश्चयत्वेनैकरूपेण
प्रतिबन्धकत्वस्य सुवचतया असंभववारणाय स्वावच्छिन्नवि-
षयत्वाव्यापकीभूतविषयिताशून्यत्वानिवेशनमावश्यकमित्यतिव्याप्ति-
संगतिरिति वाच्यम् । अप्रामाण्यज्ञानानामननुगमेन निश्चयत्वाननुग-
मेन च एकप्रतिबन्धकताया वक्तुमशक्यत्वात् । कथंचिदप्रामाण्या-
द्यनुगमेऽपि एतद्ग्रन्थस्यैकप्रतिबन्धकत्वमताभिप्रायकत्वे व्यभिचा-
रादिघटितबाधादिसंग्राहकयद्रूपावच्छिन्नविषयकत्वं स्वावच्छिन्नवि-

षयत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं तादृशरूपान्तराघटितत्वमिति प्रथमकल्पे ह्रदवृत्तिवन्ह्यभावत्वादेरेव तादृशरूपान्तरत्वसंभवेनासंभवानवकाशात्तद्ग्रन्थस्योन्मत्तप्रलापापत्तेः । यदि च तत्कल्पे बाधविशिष्टव्यभिचारादावतिव्याप्तिवारणाय स्वावच्छिन्नविषयकत्वाव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्य यद्रूपावच्छिन्नविषयितायां निवेशे सत्यसम्भवदानं सङ्गतमेवेत्युच्यते, तदपि स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकः कश्चित्स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदको यस्य एवंभूतं यद्यत्त्वं मेयत्वविशिष्टव्यभिचारत्वादि तदवच्छिन्नाघटितत्वकल्पेऽसंभवप्रसक्तौ धूमव्यभिचारिवह्निमत्त्वमादायाव्याप्तिदानस्य सन्दर्भविरोधो वक्ष्यमाण एवेति । द्वितीयकल्पे बाधविशिष्टव्यभिचारत्वावच्छिन्नेऽतिव्याप्तिभिया स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वानिवेशायोगादिति ।

(अथवा पर्वतत्वावच्छेदेन वह्न्यभावस्य साध्यत्वे वन्ह्यभाववन्नीलत्ववत्कालीनस्सन् नीलत्वाभाववत्पर्वतत्ववत्कालीनधूमस्य हेतुतायां वन्हिमन्नीलपर्वतरूपहेतुविशेषणासिद्धिद्वयघटितबाधेऽतिव्याप्तेर्दुर्वारत्वात् ) ।

यत्तु ह्रदे पक्षे महानसीयवह्नेः साध्यत्वे महासीयवह्न्यभाववद्ध्रदो वह्न्यभाववद्ध्रदश्च द्वयमेव बाध इति तत्र महानसीयवह्निमत्तावुद्धिं प्रति महानसीयत्वनिष्ठावच्छेदकताभिन्नत्वे सति वह्नित्वनिष्ठावच्छेदकताभिन्नं यदवच्छेदकत्वं तदनिरूपकप्रतियोगिताकाभावनिश्चयत्वेनैकप्रतिबन्धकतया महानसीयवह्न्यभाववद्ध्रदेऽव्याप्तिः महानसीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदिकाया वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताया महानसीयवह्न्यभाववद्ध्रदत्वावच्छिन्नानिरूपितत्वादिति तद्वारणाय तादृशाव्यापकीभूतविषयताशून्यत्वनिवेशनमावश्यकमिति बाधविशिष्टव्यभिचारेऽतिव्याप्तिसंगतिरिति ।

तन्न वह्निसामान्याभावबुद्धेः वह्निमत्ताबुद्धित्वावच्छिन्नप्रतिप्रतिबन्धकताया क्लृप्तत्वेन तेनैवोपपत्तौ तत्साधारणैकप्रतिबन्धकतायां मानाभावात् । नच साक्षात्परम्परासाधारणैकवह्न्यनिरूपितत्वस्यापि स्वयं दूषितत्वाद्बाधादावसंभवः,

भावन्नद्‌ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्याव-च्छेदकीभूतवह्न्यभाववद्ध्रदवत्प्रमेयत्वाविशिष्टविषयितायां साक्षा-द्वह्न्यभाववद्ध्रदत्वावच्छिन्नानिरूपितत्वेन तदवच्छिन्नाविशेष्यकप्र-तीतिविशेष्यतावच्छेदकत्वस्यापि वह्न्यभाववद्ध्रदत्वादाव सत्त्वा-दिति तद्वारणाय तादृशाव्यापकविषयिताशून्यज्ञानवृत्तित्वं विशे-षणं यत्किञ्चिद्विषयित्वे आवश्यकमित्यतो बाधाविशिष्टव्यभिचारे-ऽतिव्याप्तिरिति वाच्यम् साक्षात्परम्परासाधारणैकनिरूपितत्वाभा-वेऽपि यादृशधर्मावच्छिन्नानिरूपितमित्यत्र यादृशरूपावच्छिन्नघ-टितानिरूपितत्वनिवेशेनैवासम्भववारणसम्भवे तादृशाव्यापकीभूत-विषयिताशून्यत्वनिवेशस्यानावश्यकत्वात् ।

यदपि ह्रदो वह्न्यभाववानिति–ज्ञानीयवह्न्यभावत्वावच्छिन्नविष-यिताया वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धक-तावच्छेदकीभूताया वह्न्यभाववद्ध्रदाद्यानिरूपितत्वेनासम्भव इति यद्रूपावच्छिन्नविषयित्वावच्छिन्नं प्रति स्वावच्छिन्नविषयित्वाव-च्छिन्नप्रतिबन्धकतासामान्यस्य व्यापकत्वं तद्रूपावच्छिन्नविषयित्वं यादृशधर्मावच्छिन्नानिरूपितमित्येव वाच्यम्, तथाच जाति-मान्वह्न्यभाववानिति–ज्ञानसाधारणवह्न्यभाववद्ध्रदत्वावच्छिन्नवि-षयित्वावच्छिन्नं प्रति तादृशप्रतिबन्धकतासामान्यस्य व्याप-कताभङ्गेन स्वावच्छिन्नविषयित्वाव्यापकाविषयताशून्यज्ञानवृत्तियद्रू-पावच्छिन्नविषयत्वाव्यापकत्वं वाच्यमिति बाधविशिष्टव्यभिचारे-ऽतिव्याप्तिरिति ।

तत्तुच्छम् यद्रूपावच्छिन्नविषयित्वाव्यापकीभूतविषयिताशून्यत्व-निवेशेनैव जातिमान्वह्न्यभाववानिति–ज्ञानवारणसंभवे दोष-तावच्छेदकावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वस्यानिवेशात् अतिव्याप्तिवारकासम्भववारकविशेषणसत्त्वे अतिव्याप्तिसंपादकास-म्भववारकविशेषणदानस्यानौचित्यात् । दोषतावच्छेदकावच्छि-न्नविषयित्वाव्यापकविषयिताशून्यत्वानिवेशो वह्न्यभाववज्जा-तिमत्कालीनत्वाविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तेश्च–वह्न्यभा-वज्जातिमत्कालीनत्वविशिष्टवह्न्यभाववद्ध्रदत्वरूपदोषतावच्छेदक-त्वाभिमतधर्मावच्छिन्नविषयित्वाव्यापकं न–वह्न्यभाववज्जाति-मत्त्वावच्छिन्नविषयित्वं किन्त्वन्यदिति तद्रूपावच्छिन्नविषयि-

ताशून्यत्वस्य जातिमान्वह्न्यभाववानितिज्ञाने सत्त्वेन वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वं न तादृशप्रतिबन्धकतासामान्यावच्छेदकयत्किञ्चिद्विषयतान्तर्गतं किन्तु वह्न्यभाववज्जातिमत्कालीनवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वमेवेति । तच्च यादृशधर्मावच्छिन्नानिरूपितं तादृशधर्मावच्छिन्नाघटितत्वस्य तत्र सत्त्वादिति ।

अथ बाधाभावविशिष्ट व्यभिचारबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताया अपि तादृशप्रतिबन्धकतासामान्यान्तर्गतत्वेन व्यभिचारविशिष्टबाधत्वावच्छिन्नविषयिता न तादृशप्रतिबन्धकतासामान्यावच्छेदिकेति नासङ्गतिरिति चेन्न मेयत्वविशिष्टव्यभिचारादौ तादृशरीत्या मेयत्वाभाववुद्धेः प्रतिबन्धकतामादाय शुद्धव्यभिचारत्वावच्छिन्नविषयित्वमपि न तादृशयत्किञ्चिद्विषयतान्तर्गतमपि तु मेयत्वविशिष्टव्यभिचारविषयित्वमेवेत्यतिव्याप्तिभिया प्रकृतानुमितिप्रतिबन्धकतासामान्यस्य निवेशनीयत्वात् । न च द्रव्यत्वं वह्निमत् द्रव्यत्वाभाववच्छैवालादित्यादिस्थलीयवह्न्यभाववद्द्रव्यत्वरूपबाधविशिष्टवह्न्यभाववद्वृत्तिशैवालरूपव्यभिचारेऽतिव्याप्तिः तत्र व्यभिचारविशिष्टबाधविषयितायास्तादृशानुमितिप्रतिबन्धकतासामान्यान्तर्गतविशिष्टसाधनग्रहप्रतिबन्धकतानवच्छेदकत्वेन तादृशप्रतिबन्धकतासामान्यानवच्छेदकत्वादिति वाच्यम् तत्र द्रव्यत्ववद्वह्न्यभाववद्वृत्तिशैवालविशिष्टवह्न्यभाववद्द्रव्यत्वरूपबाधविषयिताया अपि यत्किञ्चिद्विषयतान्तर्गततया तत्र स्वावच्छिन्नानिरूपितत्वसत्त्वेनातिव्याप्तिविरहादिति चेन्न वह्न्यभाववज्जलाभाववद्वह्निव्यभिचारि जलं वह्निमज्जलादित्यादिस्थलीयवह्न्यभाववज्जलरूपबाधविशिष्टवह्न्यभाववद्वृत्तिजलरूपव्यभिचारादावतिव्याप्तिः तत्र व्यभिचारविशिष्टबाधविषयितायास्तादृशप्रतिबन्धकतासामान्यान्तर्गततया विशिष्टपक्षग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितवह्निव्यभिचारिजलत्वावच्छिन्नधर्मिकवह्न्यभाववज्जलत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताया अवच्छेदकत्वाभावात् । न च तत्र जलत्वविशिष्टे वह्नितदभावावगाहिज्ञानस्याहार्यत्वमिति वाच्यम् जलत्वसामानाधिकरण्येन वह्नितदभावयोरवगाहित्वात् । न च तादृशविशिष्टग्रहस्य विशिष्टपक्षग्रहविरोधितया लक्ष्यत्वमिति वाच्यम् जलत्व

व्यापकप्रतियोगिकत्वविशिष्टस्वरूपसम्बन्धेन वह्न्यभाववज्जलरूप-बाधविशिष्टव्यभिचारस्य शुद्धस्वरूपसम्बन्धेन वह्न्यभाववज्जल-विशिष्टव्यभिचारात्मकाश्रयासिद्ध्यन्तरघटितत्वेनालक्ष्यत्वादिति के-चित्समादधिरे।

तत्र साधीयान् शुद्धस्वरूपसम्बन्धेन वह्न्यभाववज्जलविशिष्टं यद्वह्निव्यभिचारिजलं तद्विशिष्टं यज्जलत्वव्यापकप्रतियोगिकस्व-रूपसम्बन्धेन वह्न्यभावघटितबाधस्वरूपं तादृशविशिष्टविष-यिताया अपि स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासा-मान्यावच्छेदकतया तत्र बाधविशिष्टव्यभिचारानिरूपितत्वेनो-क्ताति व्याप्त्यभावात् स्वरूपसम्बन्धेन वह्न्यभाववज्जलाभावबुद्धिं प्रति स्वरूपसम्बन्धेन वह्न्यभावघटितवह्न्यभाववज्जलवत्ताज्ञानप्रति-बन्धकतायां जलत्वव्यापकप्रतियोगिकत्वविशिष्टस्वरूपशुद्धस्वरूप-साधारणस्वरूपत्वेनैव स्वरूपस्य निवेशात् प्रतिबन्धकताया ऐक्या-त् अन्यथा शैवालधर्मिकद्रव्यत्ववत्ताज्ञानवह्न्यभाववद्द्रव्यत्ववत्ता-ज्ञानयोरपि प्रतिबन्धकत्वद्वयापत्त्या पूर्वस्थलपरित्यागानौचित्यात्।

परे तु प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्प-क्षरूपसत्प्रतिपक्षमताभिप्रायकमिदम्। तथाच तादृशसत्प्रतिपक्षवि-षयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकत्वस्य प्रतिहेतुव्याप-कसाध्याभावकालीनतद्धेतुमत्पक्षविषयितायामपि सत्त्वेन तत्र स्वा-वच्छिन्ननिरूपितत्वाभावात्तादृशसत्प्रतिपक्षेऽव्याप्तिः॥ अथवा प्रागु-क्तगगनाभाववदभाववत्कालीनगगनाभाववद्घटेऽव्याप्तिस्तादृशबाध-विषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकत्वस्य गगनाभाव-वदभाववद्वृत्तिगगनाभाववद्घटत्वावच्छिन्नविषयतायामपि सत्त्वेन तत्र स्वावच्छिन्ननिरूपितत्वाभावादतस्तद्वारणाय स्वावच्छिन्नविष-यत्वाव्यापकविषयितांशशून्यज्ञानवृत्तित्वस्यापि तादृशयत्किञ्चिद्विष-यित्वे विवक्षणीयतया व्यभिचारविशिष्टबाधत्वावच्छिन्नविषयता-या धर्तुमशक्यत्वादतिव्याप्तिसङ्गतिः। अतएव वह्न्यभाववज्जल-वद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिनिवारणाय विशिष्टद्वयाघटितत्वनिवेशो-ऽपि सफलः अन्यथा जलवद्ध्रदकालीनवह्न्यभाववज्जलवत्त्वाव-च्छिन्नविषयिताया अपि तादृशप्रतिबन्धकतावच्छेदकतया तत्र स्वावच्छिन्ननिरूपितत्वात्तादृशविशेषणमनर्थकं स्यात्, परन्तु ता-

व्याभाववद्वृत्तित्वरूपव्याप्तिविशिष्टस्य सत्प्रतिपक्षमते एताद्दशरीतिर्न सम्भवति, विशिष्टद्वयाघटितत्वनिवेशोऽपि निष्फलः बाधविशिष्टव्यभिचारादावतिव्याप्तिश्च न सन्दर्भशुद्धेति प्राहुः।

वस्तुतस्तु स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतेत्यत्रावच्छेदकत्वं स्वरूपसम्बन्धरूपमनतिरिक्तवृत्तित्वरूपञ्च। प्रतिबन्धकतासामान्यावच्छेदक इत्यत्र तु स्वरूपसम्बन्धरूपमेव। प्रथमे स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशात् धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्निमदात्मकबाधे नाव्याप्तिः अन्यथा ताद्दशबाधविषयिताव्यापकप्रतिबन्धकतासामान्यावच्छेदकविषयित्वाप्रसिद्ध्या अव्याप्तिः स्यात्। एवञ्च बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वावच्छिन्नं व्याप्तिज्ञानप्रतिबन्धकत्वमेव न तु साध्यवत्ताज्ञानप्रतिबन्धकत्वं ताद्दशप्रातिबन्धकत्वे बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयतानिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकत्वाभावात्। तथा च बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयित्वावच्छिन्नव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकं न व्यभिचारविशिष्टबाधविषयित्वं किन्तु बाधविशिष्टव्यभिचारविषयत्वमेवेति तत्रोदासीनबाधघटत्वावच्छिन्नानिरूपितत्वं ताद्दशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधविशिष्टव्यभिचारत्वे सत्त्वादतिव्याप्तिः। न च ताद्दशधूमाभाववद्ध्रदविशिष्टधूमव्यभिचारिवह्नित्वावच्छिन्नविषयित्वावच्छिन्नव्याप्तिज्ञानप्रतिबन्धकतावच्छेदिकाया व्यभिचारत्वावच्छिन्नविषयिताया बाधत्वावच्छिन्नानिरूपितत्वेन ताद्दशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बाधविशिष्टत्वे व्यभिचारत्वेऽसत्त्वान्न तत्रातिव्याप्तिसङ्गतिरिति वाच्यम् वह्निर्धूमव्यभिचारत्वेऽसत्त्वान्न तत्रातिव्याप्तिसङ्गतिरिति वाच्यम् वह्निर्धूमधान् वह्नेरित्यादौ एकत्र द्वयमिति रीत्या धूमाभाववद्धूमाभाववद्वृत्तित्ववह्नित्वविशिष्टबाधात्मकव्यभिचारेऽतिव्याप्तेर्ग्रन्थकृतेरामिप्रेतत्वादिति ध्येयम्।

एतेन उभयत्रैव स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽपि ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयतानवच्छिन्नत्वोभयाभाववत्त्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यविवक्षयैव ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय जलवद्ध्रदादौ प्रागुक्तदोषस्य वारणसम्भवे एतत्कल्पस्य निर्दोषत्वमिति प्रलपितमप्यपास्तम्। न

च प्रथमावच्छेदकत्वं स्वरूपसम्बन्धात्मकं द्वितीयं त्वनतिरिक्तवृत्तित्वरूपम्, ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय वह्न्यभाववद्ध्रदादावव्याप्तिस्तत्प्रतिबन्धकतायां निरुक्तोभयाभाववत्त्वस्य विवक्षैव वारणीया तथाच वह्निर्धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिधूमाभाववद्वह्निकालीनधूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयतायां स्वावच्छिन्नानिरूपितत्वसत्त्वादुक्तातिव्याप्त्यनवकाशेनैतत्कल्पस्य निर्दोषत्वमिति वाच्यम्। तथासति वह्निव्यापकीभूताभावप्रतियोगित्वाभाववज्जलं वह्निमज्जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगित्ववज्जलाभाववत्ताद्दशप्रतियोगित्ववज्जलमित्यादिज्ञानीयप्रतिबन्धकताया निरुक्तोभयाभाववत्त्वेन सामान्यान्तर्गततया ताद्दशप्रतिबन्धकतासामान्यानतिरिक्तवृत्तिविषयतावच्छेदकाप्रसिद्ध्या वह्निव्यापकीभूताभावप्रतियोगिजलरूपाश्रयासिद्ध्यादावव्याप्त्यापत्तेरिति ध्येयम्॥ २१॥

एतेन स्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयताकविशिष्टानिरूपितविषयिताव्यापकस्वावच्छिन्ननिरूप्यताकत्वमिति समुदितार्थ इति भट्टाचार्येणोक्तम्।

अत्र स्वावच्छिन्नविषयकत्वावच्छिन्नेत्यत्रावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम् अन्यथा जलवद्ध्रदादावतिव्याप्त्यापत्तेः जलवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतविषयिताकवह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वविशिष्टानिरूपितविषयितात्वव्यापकत्वस्य जलवद्ध्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वात्(१) एवं यत्किञ्चित्प्रतिबन्धकतावच्छेदकेत्यत्रापि अनतिरिक्तवृत्तित्वरूपं ग्राह्यम्

---

(१) वस्तुतो ह्रदः कपिसंयोगवानित्यादौ केवलस्वरूपसंबन्धेन कपिसंयोगाभाववद्ध्रदेऽतिव्याप्तिस्ताद्दशप्रतिबन्धकतावच्छेदकविषयित्वं निरवच्छिन्नस्वरूपेण वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वमेव ताद्दशविषयितात्वव्यापकत्वस्य स्वावच्छिन्ननिरूप्यतायां सत्त्वात्। एतेन प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्व-असाधारणविषयतानवच्छिन्नत्वोभयाभावनिवेशादेव जलवद्ध्रदादौ नातिव्याप्तिरिति कथमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशनामिति निरस्तम्। न

अन्यथा वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयिताकह्रदत्वादिविशिष्टनिरूपितविषयितात्वव्यापकत्वस्य वह्न्यभाववत्ध्रदत्वावच्छिन्ननिरूप्यतायामसत्त्वादसम्भवापत्तेः। यदि यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयताकेत्यत्र प्रतिबन्धकतावच्छेदकविषयितासामान्यं विवक्ष्यते तदा द्वितीयानतिरिक्तवृत्तित्वप्रयोजनं चिन्तनीयम्।

अथ यत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकत्वमित्यस्यैव सम्यक्त्वे प्रतिबन्धकतायां स्वावच्छिन्नविषयिताकत्वनिवेशो व्यर्थ इति। न च ह्रदो वह्निमान् धूमादित्यादौ केवलह्रदादावतिव्याप्तिस्तादृशप्रतिबन्धकतावच्छेदकवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वव्यापकत्वस्य ह्रदत्वावच्छिन्ननिरूप्यतायां सत्त्वादिति वाच्यम् स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य तादृशप्रतिबन्धकतावच्छेदकविषयितायां निवेशावश्यकत्वेन तेनैवोक्तातिव्याप्तिव्युदासादिति चेन्न दोषतावच्छेदकावच्छिन्नविषयत्वाव्यापकविषयताशून्यत्वानिवेशे प्रागुक्तरीत्या जातिमद्वह्न्यभाववद्ध्रदादावतिव्याप्ति-

---

च प्रतिबन्धकतावच्छेदकविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वनिवेशान्नातिव्याप्तिरिति वाच्यम्। वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिवारणाय विशिष्टव्याघटितत्वानिवेशापत्त्या गौरवापत्तेरतः स्वावच्छिन्नविषयत्वव्यापकत्वनिवेशः। व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्पक्षस्यालक्ष्यत्वाद्गगनाभाववदभाववत्कालीनगगनसाध्यकस्थले गगनाभाववद्धटस्यैव लक्ष्यत्वान्नाव्याप्तिरिति। प्रतिबन्धकतावच्छेदक इत्यत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशो तत्रैव निरवच्छिन्नस्वरूपेण कपिसंयोगाभाववद्ध्रदेऽव्याप्त्यापत्तेः तादृशविषयित्वं यत्केवलस्वरूपेण कपिसंयोगाभाववद्ध्रदत्वावच्छिन्नविषयित्वं तत्र स्वावच्छिन्ननिरूप्यताकत्वविरहात् तत्र च प्रतिबन्धकत्वं केवलस्वरूपेण बाधत्वं च निरवच्छिन्नस्वरूपेणेति बाधग्रन्थे भट्टाचार्येणोक्तमिति ध्येयम्। एतेन यत्किञ्चित्प्रतिबन्धकतायां स्वावच्छिन्नविषयिताव्यापकत्वनिवेशो व्यर्थ इति निरस्तम्। सर्वत्रैकदेशेऽतिव्याप्त्यापत्तेरिति ध्येयम्।

रतो यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वनिवेशावश्य-कतया केवलहृदादावतिव्याप्तितादवस्थ्यमिति। न च यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यत्वमित्युक्तातिव्याप्तिभिया स्वावच्छिन्नविषयित्वाव्यापकविषयताशून्यत्वमपि निवेशनीयम् तावतापि व्यापकत्वनिवेशापेक्षया लाघवादिति वाच्यम् तथासति वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्त्यापत्तेः। न च विशिष्टद्वयाघटितत्वनिवेशान्न तत्रातिव्याप्तिरिति वाच्यम्। व्यापकत्वनिवेशापेक्षया विशिष्टद्वयाघटितत्वनिवेशस्यैव गुरुत्वात् एतत्कल्पे विशिष्टद्वयाघटितत्वस्यानिवेशादिति ध्येयम्(१)॥ २२॥

स्वसजातीयविशिष्टान्तराघटितत्वकल्पे विशेष्यदले विरोधिविषयताप्रयुक्तत्वदलस्य वैयर्थ्यमुक्तं भट्टाचार्येण।

तन्न संगच्छते–घटादेरपि स्वपदेन धर्तुं शक्यत्वात् तथाहि यद्विषयकनिश्चयोत्तरानुमितिसामान्ये प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावस्तत्त्वं बाधत्वम्। एवंरीत्या व्यभिचारादिकं निवेश्य निर्वचनीयम्। तथाहि निर्वह्निर्वह्निमानित्यादौ घटविषयकनिश्चयोत्तरानुमितौ पक्षे साध्यवैशिष्ट्यावगाहित्वाभावसत्त्वाद्घटादावपि स्ववृत्तिहेत्वाभासविभाजकबाधत्वसत्त्वेन तद्वारणायैव तद्दलसार्थक्यमिति। न च वह्निमत्पर्वतरूपतादृशाश्रयासिध्यसङ्ग्रहः तत्र तादृशवह्न्यादिघटितत्वाद्वह्न्यादेराश्रयासिद्धित्वादिना साजात्यविरहेऽपि निरुक्तबाधत्वादिना साजात्यसत्त्वादिति वाच्यम् आश्रयासिद्धित्वमादायैव तत्र लक्षणसमन्वयात्। स्ववृत्तिहेत्वाभासविभाजकीभूतयत्किञ्चिद्धर्मवत्विशिष्टान्तराघटितत्वस्य विवक्षितत्वात्, अन्यथा विशेषगुणवद्घटादेरसङ्ग्रहापत्तेः। गुणवद्घटादेराश्रयासिद्धित्वादिना साजात्यविरहेऽपि

---

(१)अथात्र यत्किञ्चित्त्वनिवेशेऽपि विशेषगुणवद्घटेऽव्याप्तितादवस्थ्यम्। यत्किञ्चित्पदेन बाधज्ञानीयप्रतिबन्धकताया धर्तुं शक्यत्वात्। अतोऽनुगमः क्रियते। तादृशसमूहालम्बनानुमितिप्रतिबन्धकताविशिष्टरूपवत्त्वं दोषत्वम्। वैशिष्ट्यञ्च स्ववृत्तित्व–स्ववृत्तित्वोपलक्षितरूपावच्छिन्नविषयितात्वव्यापकत्वोभयसम्बन्धेन। वृत्तिताद्वयञ्च स्वावच्छिन्नविषयिताव्यापकत्वसम्बन्धेन। विषयिताव्यापकत्वन्तु स्वावच्छिन्ननिरूपितत्वसम्बन्धेनेति ध्येयम्।

बाधत्वादिना तत्संत्त्वात्। यत्किञ्चिन्निवेशे चाश्रयासिद्धित्वमादायैव तत्र लक्षणसमन्वयः। अथ वह्न्यभाववान् ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदात्मकबाधेऽव्याप्तिस्तत्र निरुक्तविशिष्टान्तरवह्न्यभावघटितत्वादतस्तद्वारणाय यद्विषयनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्तः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावस्तत्त्वमेव बाधत्वमित्यादिरीत्या हेत्वाभासविभाजको निर्वाच्यः, एवञ्च घटादिवारणाय विरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यम घटादेर्विरोधिविषयताप्रयुक्तत्वघटितसाजात्यविरहेण स्वपदेनोपादातुमशक्यत्वादिति चेन्न तथासति विशेष्यदलसमुदायस्यैव वैयर्थ्यसम्भवे विरोधिविषयताप्रयुक्तत्वदलमात्रस्यैव वैयर्थ्याभिधानानौचित्यात्। न च सिद्धिविषयवारणाय विशेष्यदलसार्थक्यम् साजात्यघटकविरोधिविषयताप्रयुक्तेत्यत्र विषयतायां विरोधित्वस्यानुपादेयत्वात् यथासन्निवेशे वैयर्थ्याभावादिति वाच्यम् तथासति विशेष्यदले विरोधिविषयताप्रयुक्तत्वदलस्यापि सिद्धिविषयवारणायैव सार्थक्यसंभवे तद्वैयर्थ्याभिधानसंगत्यापत्तेरिति।

अत्र केचित् उक्तरीत्या बाधत्वादिनिर्वचने तादृशबाधत्वादेः प्रतिदोषभिन्नत्वात् स्ववृत्तिहेत्वाभासविभाजकरूपस्वान्यत्रासत्त्वेन स्वसजातीयाप्रसिध्यासंभवापत्तिरतः स्वविषयताप्रयुक्तोभयाभावप्रयोजकयत्किञ्चिद्भावाधिकरणतायां ज्ञानवैशिष्ट्याप्रयोज्यत्वे सति स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयद्धर्मावच्छिन्नविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वं तद्धर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्वत्त्वमिति स्वसजातीयविशिष्टान्तराघटितत्वदलनिष्कर्षो वाच्यः। तथाच वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयताप्रयोज्यं यद्वन्ह्यभाववद्ध्रदविषयकसमूहालंबनात्मकसत्प्रतिपक्षह्रदवृत्तिवन्ह्यभावादिनिश्चयोत्तरानुमितिसामान्यनिष्ठतादृशसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणत्वं तत्र ह्रदवृत्तिवन्ह्यभावसत्प्रतिपक्षविषयताप्रयोज्यत्वमप्यस्तीति सत्प्रतिपक्षादिकमेव तादृशविशिष्टान्तरं तदघटितत्वं वन्ह्यभाववद्ध्रदत्वावच्छिन्नेऽस्तीति तत्र लक्षणसमन्वयः। ज्ञानवैशिष्ट्याप्रयोज्यत्वनिवेशनं च अभाववान् वन्ह्यभाववानिति—निश्चयकालीननिश्चयीयाभाववद्ध्रदत्वावच्छिन्नविषयताप्रयुक्तत्वमादाय दोषवारणाय। एक-

व्यापकत्वपर्यन्तनिवेशः। देशविषयतामादायासम्भववारणाय यत्किञ्चित्त्वनिवेशः। तथाचैकदेशः विशेषगुणवद्घटादिसङ्ग्रहाय विशेष्यदलसार्थक्यम्। परन्तु घटादिविषयताप्रयोज्य-वारणाय ताहशाधिकरणत्वाप्रसिध्या- स्वपदेन घटादेर्धर्तुमशक्यत्वात् त-द्वारकविरोधिविषयताप्रयुक्तत्वदलवैयर्थ्यमिति प्रतियोगिनि स्वत्वा-न्तर्भावः। धूमव्यभिचारिवन्हिमान् धूमवान् वन्हेरित्यादिस्थलो-यबाधविषयताप्रयोज्यायां प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहि-त्वाभावाधिकरणतायां व्यभिचारविषयतात्वव्यापकरूपावच्छिन्ना-प्रयोज्यत्वान्न तादृशविशिष्टान्तरं व्यभिचारत्वावच्छिन्नमिति तत्र नाव्याप्तिः। न चैवं व्यभिचारविशिष्टमेयत्वादावतिव्याप्तिरिति वाच्यम्। स्वविषयतापदेन स्वविषयतान्तःपातिविषयताविव-क्षणात् तथाच व्यभिचारविशिष्टमेयत्वविषयतायाः तादृशाधिक-रणत्वाप्रयोजकत्वेऽपि तदन्तः पातिव्यभिचारविषयतायास्तथा-त्वात् स्वपदेन व्यभिचारविशिष्टमेयत्वादेरपि धर्तुं शक्यत्वेऽपि न व्यभिचारविशिष्टमेयत्वादिकमपि तत्सजातीयविशिष्टान्तरघ-टितमेवेति नातिप्रसङ्गः। एवं चैतत्कल्पे व्यभिचारघटितबाधे-ऽव्याप्तिदानमप्यग्रे सङ्गच्छते बाधविषयान्तःपातिव्यभिचारविष-यताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणतायां व्यभि-चारविषयताप्रयोज्यत्वसत्त्वात् स्वपदेन बाधादेरपि सङ्ग्रहः। स्व-वृत्तियावद्धेत्वाभासविभाजक इत्यादेरपि स्वविषयान्तःपातिविष-यताप्रयोज्यं निरुक्तोभयाभावप्रयोजकीभूतं यद्यदभावाधिकरणत्वं तत्तदभावाधिकरणत्व विशिष्टान्तरयद्धर्मावच्छिन्नविषयताप्रयोज्यं तद्धर्मावच्छिन्नाघटितमित्यर्थो वाच्यः। न च व्यभिचारविशिष्ट-मेयत्वादावतिव्याप्तिवारणायान्तःपातिविषयतामनिवेश्य विशे-ष्यदले विरोधिविषयताप्रयुक्तत्वमित्यत्र स्वीयविरोधिविषयताप्रयु-क्तत्वमित्यर्थो वाच्यः, तथाच न व्यभिचारघटितबाधादावव्या-प्तिरिति वाच्यम् धूमवान् अवृत्तिवन्हेरित्यादिस्थलीयसाधना-प्रसिद्धिघटितव्यभिचारात्मकधूमाभाववद्वृत्तिवन्हौ तावताप्यव्या-प्तिरित्याहुः।

तच्चिन्त्यम्। उक्तरीत्या घटादावतिव्याप्तिवारकतया विरोधिवि-षयताप्रयुक्तत्वदलसार्थक्यासम्भवेऽपि आहार्यस्थले एकदेशे-

प्रतिव्याप्तिवारकत्वेनैव सार्थक्यसम्भवेन तद्वैयर्थ्याभिधानासङ्गतितादवस्थ्यादिति ॥ २३ ॥

यद्विषयकनिश्चयोत्तरानुमितौ प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वस्य प्रकृतपक्षे प्रकृतसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वमित्युभयाभावघटितहेत्वाभाससामान्यलक्षणं दीधितिकृता कृतम्। तत्र मेयत्वविशिष्टव्यभिचारवारणाय निवेशितस्य विशिष्टान्तराघटितत्वविशेषणस्य विशिष्टान्तरविषयित्वाप्रयोज्यत्वविषयताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वमित्यर्थो भट्टाचार्येण कृतः।

अत्र धूमाभाववद्धूमव्यभिचारिवह्निमदात्मकबाधविषयताप्रयोज्यायां तादृशसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां तादृशबाधविषयान्तःपातिव्यभिचारविषयताप्रयोज्यत्वसत्त्वात्तादृशबाधादावव्याप्तिरतो विशिष्टान्तरविषयित्वाप्रयोज्यत्वपदेन यत्किञ्चिद्विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वं विवक्षितम्। न च सर्वत्रैव एकदेशीयविषयतामादायासम्भवसम्भवे व्यभिचारघटितबाधादावव्याप्तिदानं संदर्भविरुद्धमिति वाच्यम् प्रकृतलक्षणाश्रयीभूतविशिष्टान्तरविषयित्वाप्रयोज्यत्वविवक्षयापि एकदेशविषयतामादाय दोषवारणसम्भवेनाव्याप्तिदानस्यैवोचितत्वादिति। अथ व्यभिचारादिविषयतानिष्ठस्य प्रयोजकतावच्छेदकीभूतस्य निरवच्छिन्नवह्नित्वादिनिष्ठावच्छेदकतानिरूपकतादृशविषयतात्वस्य जातिमान् धूमव्यभिचारीत्यादिज्ञानीयविषयितासाधारणव्यभिचारादिरूपविशिष्टान्तरविषयितात्वाव्यापकतया मेयत्वविशिष्टव्यभिचारादावति(१)व्याप्तिरतस्तद्वारणाय यत्किञ्चिद्विशिष्टान्तरविषयितात्वाव्यापकीभूतविषयिताशून्यज्ञानीयविशिष्टान्तरविषयितात्वव्यापकत्वमेव वाच्यम् एवं च तादृशविशिष्टान्तरविषयित्वाव्यापकीभूतविषयिताशून्यज्ञानीयविषयित्वाप्रयोज्यत्वानिवेशेनैव बाधविषयतान्तःपातिव्यभिचारादिविषयतामादाय व्यभिचारादावव्याप्तिवारणसम्भवे

[१] ननु तादृशविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकत्वाप्रसिद्ध्याऽसम्भवसम्भवेऽतिव्याप्तिदानमसंगतमिति चेन्न व्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतासम्बन्धेन तादृशरूपाभावस्य विवक्षितत्वादिति।

विशिष्टान्तरविषयितात्वव्यापकत्वनिवेशो व्यर्थ इति । न च जाति-
मान् धूमव्यभिचारीत्यादिज्ञानवारणाय तादृशोभयाभावप्रयोजकय-
त्किञ्चिद्विशिष्टान्तराविषयितात्वाव्यापकत्वमेव निवेशनीयमिति वाच्य-
म् तथासति जात्यवच्छेदेन धूमव्याप्त्यवगाहिधूमव्याप्यजातिमद्वान्
धूमवान् वह्नेरित्यत्र मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्न्यात्मकव्यभिचा-
रेऽतिव्याप्तेः—तत्र वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताघटिततादृश-
विषयितात्वस्य उभयाभावप्रयोजकजातिमान् धूमव्यभिचारीतिज्ञा-
नीयविषयतासाधारणविशिष्टान्तराविषयितात्वाव्यापकत्वादिति चे-
न्न अव्यापकीभूतविषयिताशून्यत्वनिवेशे व्यभिचारघटितबाधादाव-
व्याप्तिवारणसम्भवेऽपि मेयत्वविशिष्टव्यभिचारविषयकज्ञानस्य व्य-
भिचारात्मकविशिष्टान्तरविषयत्वाव्यापकविषयिताशून्यत्वविरहेण
केवलव्यभिचारविषयकज्ञानस्यैव तादृशतया तज्ज्ञानीयविषयत्वा-
प्रयोज्यत्वस्य केवलव्यभिचारविषयकज्ञानाकालीनमेयत्वविशिष्ट-
व्यभिचारविषयकज्ञानोत्तरज्ञानवृत्तिव्याप्त्यवगाहित्वाभावाधिकरण-
तायाः सत्त्वात् मेयत्वविशिष्टव्यभिचारवारणायैव विशिष्टान्तर-
विषयताव्यापकरूपावच्छिन्नत्वपर्यन्तस्य सार्थकत्वात् । एतेन
स्वावच्छिन्नाविषयकज्ञानीयविषयत्वाप्रयोज्यत्वनिवेशेनैवोपपत्तौ वि-
शिष्टान्तरविषयताव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशो व्यर्थ
इत्यपि प्रत्युक्तम् । उक्तरीत्या मेयत्वविशिष्टव्यभिचारादावति-
प्रसङ्गात् ।

वस्तुतः धूमव्यभिचारिवह्नित्वेन अभावाद्यवगाहिधूमव्यभिचा-
रिवह्निमान् धूमाभाववानित्यादिबाधभ्रमस्यापि विशिष्टान्तरवि-
षयित्वाव्यापकीभूतविषयताशून्यतया तद्विषयत्वाप्रयोज्यत्व-
स्य साध्यावगाहित्वाभावाधिकरणतायामसत्त्वेनाव्याप्तिरतो
व्यापकत्वनिवेशः । एतेन विशिष्टान्तराविषयित्वाव्यापकीभू-
तविषयताशून्यज्ञानीयविषयतावृत्तिरूपावच्छिन्नाप्रयोज्यत्वनिवेशन-
मपि हेयम् । न च स्वविषयताप्रयोज्यत्वनिवेशनं व्यर्थमिति
वाच्यम् स्वपूर्ववर्तिज्ञानीयप्रतिबन्धकतावच्छेदकविषयताया एव
स्वनिष्ठप्रतिबध्यतावच्छेदकाभावाधिकरणताप्रयोजकत्वात् साम-
न्यभावमात्रप्रयुक्ततादृशोभयाभावप्रयोजकसाध्यावगाहित्वाभावाध-
धिकरणतायां विशिष्टान्तरविषयत्वाप्रयोज्यत्वसत्त्वेन मेयत्व-

विशिष्टव्यभिचारादावतिव्याप्तिवारकतयैव तत्सार्थक्यात्। न च तथापि विषयताप्रयोज्यत्वमेव निवेश्यतां किं विषयतायां स्वीयत्वनिवेशनेनेति वाच्यम् तावतापि पर्वतो धूमाभाववानित्याकारकभ्रमात्मकबाधज्ञानीयप्रतिबन्धकतावच्छेदकीभूतविषयताप्रयोज्यायां निरुक्तोभयाभावप्रयोजकसाध्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वसत्त्वेन मेयत्वविशिष्टव्यभिचारादावतिव्याप्त्यापत्तेः धूमाभाववत्पर्वतप्रसिद्ध्या विशिष्टान्तरपदेन बाधस्य धर्तुमशक्यत्वात्। न च तथापि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नयत्किञ्चिद्विशिष्टनिरूपितविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशापेक्षया स्वावच्छिन्नविषयताशून्यप्रतीतिविषयतावृत्तिरूपावच्छिन्नाप्रयोज्यत्वनिवेशेनैव व्यभिचारघटितबाधादिसङ्ग्रहसम्भवे व्यापकत्वपर्यन्तनिवेशनप्रयोजनाभाव इति वाच्यम् तथासत्यसम्भवापत्तेः—व्यभिचारत्वाद्यवच्छिन्नविषयताशून्यभ्रमात्मकव्यभिचारादिप्रतीतिविषयतावृत्तिरूपावच्छिन्नप्रयोज्यत्वस्य तादृशाधिकरणतायां सत्त्वात्। एतेन स्वावच्छिन्नाविषयकप्रतीतिविषयितावृत्तिरूपानवच्छिन्नप्रयोजकताकत्वनिवेशेनैव सामञ्जस्ये व्यापकत्वनिवेशो व्यर्थ इति परास्तम्। न च तथापि यत्किञ्चिद्विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नाप्रयोज्यत्वमनिवेश्य यत्किञ्चिद्विशिष्टान्तरविषयतावृत्तिरूपानवच्छिन्नप्रयोजकताकत्वमेव निवेश्यतां व्यापकत्वानिवेशेन लाघवात् व्यभिचारादिघटितबाधादिविषयतानिष्ठप्रयोजकतायाः शुद्धव्यभिचारादिवृत्तिरूपानवच्छिन्नतया तादृशबाधाद्यव्याप्तिवारणसम्भवादिति वाच्यम्। धूमव्यभिचारी वह्निर्धूमवान् वह्नेरित्यादिस्थलीयबाधाव्याप्तिप्रसङ्गात् तादृशबाधविषयतानिष्ठप्रयोजकतायाः व्यभिचारात्मकविशिष्टविषयतावृत्तितादृशबाधविषयतात्वेनावच्छिन्नत्वात्। किञ्च सर्वत्रैव बाधादिविषयतानिष्ठप्रयोजकतायाः शुद्धह्रदादिरूपविशिष्टान्तरविषयतावृत्तिरूपावच्छेद्यतया असम्भवापत्तेश्च।

इदं त्ववधेयम्। विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नस्वविषयतानिष्ठप्रयोजकताकत्वमेव निवेशयितुमुचितम्। विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नत्वस्य व्यभिचारघटितबा-

सत्त्वेन उभयाभाव-
घविषयतानिष्ठोभयाभावप्रयोजकतायामेव
धिकरणतायां विशिष्टान्तराविषयतात्वव्यापकरूपानवच्छिन्नस्व-
विषयतानिष्ठप्रयोजकताकत्वानिवेशेनैव सामञ्जस्यादुभयाभावप्रयो-
जकाभावाधिकरणतापर्यन्तानिवेशकृतलाघवाच्चेति ध्येयम्(१)।
न च विशेष्यदलप्रविष्टविरोधिविषयताप्रयुक्तोभयाभावाधिकरण-
ताया विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशे-
नैव सामञ्जस्ये पृथक्विशिष्टान्तराघटितत्वानिवेशो व्यर्थ इति वा-
च्यम्। तथासति सर्वत्रैवासंभवापत्तेः ह्रदो वह्न्यभाववान् वह्न्यभा-
वव्याप्यवांश्चेत्यादि-समूहालंबनबाधादिविषयकनिश्चयोत्तरानुमितेः
विशिष्टान्तरविषयत्वाप्रयोज्यविरोधिविषयताप्रयुक्तोभयाभाववत्त्वा-

---

(१) अत्र केचित्। सर्वं गगनद्वाच्यत्वादित्यादौ सर्वत्वावच्छि-
न्नगगनवत्ताबुद्धिम्प्रति गगनाभावत्वावच्छिन्नप्रकारताकाकिञ्चिद-
च्छिन्नविषयताशालिज्ञानत्वेन गगनाभाववत्सर्वं गगनाभाववान् वा
इत ज्ञानसाधारणैकरूपेण प्रतिबन्धकतायाः सव्यभिचारे शिरोमणि-
नोक्तत्वात् [अतो] गगनाभाववत्सर्वरूपबाधादाव्याप्तिः गगनाभाव-
वत्सर्वत्वावच्छिन्नविषयतानिष्ठप्रयोजकतायां गगनाभाववद्घटरूपवि-
शिष्टान्तरविषयतात्वव्यापकं यत् गगनाभावत्वावच्छिन्नप्रकारतानि-
रूपिताकिञ्चिदवच्छिन्नविषयतात्वं तदवच्छिन्नत्वात्। नच भवन्मते
तादृशबाधादावव्याप्तिर्दुर्वारैव विशिष्टान्तरविषयतात्वव्यापकरूपाव-
च्छिन्नप्रयोजकत्वस्य सत्त्वादिति वाच्यम् मन्मते विशिष्टान्तरविष-
यतात्वव्यापकरूपावच्छिन्नविशिष्टान्तरविषयतानिष्ठप्रयोजकतानिरू-
पितप्रयोज्यत्वाभावस्य वक्तव्यत्वात्। नच तथापि उक्तरूपावच्छिन्न-
विशिष्टान्तरविषयतानिष्ठप्रयोजकताभिन्नत्वस्य स्वविषयतानिष्ठप्र-
योजकतायां निवेशान्नोक्तदोष इति वाच्यम् प्रयोजकत्वस्यैक्यमते उ-
क्तबाधेऽव्याप्तेर्वारयितुमशक्यत्वात्। स्वविषयतानिष्ठप्रयोजकता-
यां विशिष्टान्तरविषयतावृत्तिप्रयोजकत्वाभिन्नत्वात्। स्वमते तु
स्वावच्छिन्नविषयताप्रयोज्यस्वावच्छिन्नाविषयकप्रतीतिविषयताव-
च्छेदकधर्मविशिष्टान्यउभयाभावप्रयोजकाभावाधिकरणताकत्वनिवे-
शान्नोक्तदोषावकाशः। वैशिष्ट्यं च स्वावच्छिन्नविषयतात्वव्यापक-
रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वस्वावच्छिन्नविषयताशालि-
निश्चयाव्यवहितोत्तरज्ञानवृत्तित्वोभयसम्बन्धेनेति प्राहुः।

सत्वात् उक्तसमूहालम्बनविषयकनिश्चयोत्तरानुमितिनिष्ठतादृशोभयाभावाधिकरणतायां विनिगमकासद्भावात्सत्प्रतिपक्षविषयताया अपि प्रयोजकत्वात् । एतेन यद्रूपविषयकनिश्चयोत्तरानुमितित्वव्यापकविशिष्टान्तरविषयत्वाप्रयोज्यविरोधिविषयताप्रयोज्योभयाभावाधिकरणताकत्वमित्यस्यैव सम्यक्त्वे स्वतन्त्रविशिष्टान्तराघटितत्वप्रवेशो व्यर्थ इत्यपि प्रत्युक्तम् । उक्तरीत्याऽसम्भवापत्तेः । अत्र यत्किञ्चिदधिकरणतानिवेशे नासम्भव इति ध्येयम् । न च धूमव्यभिचारिवह्निमान् धूमवान्वह्नेरित्यादौ बाधघटकीभूतधूमव्यभिचारिवह्निमत्त्वातिव्याप्तिः बाधविषयतान्तःपातितदीयविषयताप्रयोज्यायां तादृशोभयाभावप्रयोजकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वादिति वाच्यम्। स्वविषयताप्रयोज्यपदेनापि स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वस्य विवक्षणीयत्वात् । अथोक्तरीत्या विशिष्टान्तराघटितत्वनिवेशे तेनैवैकदेशवारणसम्भवे विशेष्यदलमनर्थकम् । एकदेशीयविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वाप्रसिद्ध्यैव स्वपदेन एकदेशस्य धर्तुमशक्यत्वेन विशिष्टान्तराघटितत्वासत्त्वादेव एकदेशेऽतिव्याप्त्यसम्भवादिति । न चाननुगमसम्भवेन विशिष्टान्तरविषयताप्रयोज्यस्वविषयताप्रयोज्यतादृशोभयाभावाधिकरणताकं यद्यत्तद्रूपविशिष्टान्तराघटितत्वनिवेशान्न विशेष्यदलवैयर्थ्यमिति वाच्यम् तथासति बाधादेरसम्भवापत्तेः—बाधादेरपि स्वविषयताप्रयोज्यविशिष्टान्तरविषयताप्रयोज्यबाधसत्प्रतिपक्षोभयविषयकसमूहालम्बननिश्चयोत्तरज्ञाननिष्ठतादृशोभयाभावप्रयोजकसाध्यावगाहित्वाभावाधिकरणताकत्वादिति चेन्न विशिष्टान्तरविषयताप्रयोज्यस्वविषयताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणतासामान्यं यद्यत्तदन्यत्वस्य विशिष्टान्तराघटितत्वपदेन विवक्षयैवासम्भवासम्भवेन विशेष्यदलसार्थक्यात् । न चैवं व्यभिचारविशिष्टमयत्वादावतिव्याप्तिरिति वाच्यम् विरोधिविषयतायां स्वीयत्वनिवेशेनैव तत्रातिव्याप्तिवारणसम्भवादिति ध्येयम् ।

परे तु विशेष्यदलानुक्तौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः पाषाणमयो न वह्निमानिति-ज्ञानकालीनपर्वतः पाषाणमय इति ज्ञानस्याप्यनुमितिप्रतिबन्धकतया पाषाणमयत्ववत्पर्वतविषयताया अपि पा-

षाणमयत्वविशिष्टपर्वतविषयतात्वव्यापकरूपावच्छिन्नताद्दशाभावा-धिकरणताप्रयोजकत्वात्। न च पाषाणमयत्वविशिष्टपर्वतविषयता-प्रयोज्यताद्दशाधिकरणताया वह्न्यभाववत्पाषाणमयत्वविशिष्टात्म-कविशिष्टान्तरप्रयोज्यत्वान्नोक्तातिव्याप्तिरिति वाच्यम्। पाषाणमय-त्वावच्छेदेन वह्न्यभावघटितवह्न्यभाववत्पाषाणमयत्वविशिष्टस्या-प्रसिद्धत्वात्। न च विशेष्यदलोक्तावपि निर्वह्निः पर्वतो वह्निमानि-त्यादौ पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः तत्र विशेष्यदलस्यापि सत्त्वा-त्, यदि च तत्र विरोधिविषयत्वाभावान्नातिव्याप्तिरित्युच्यते तदा-पि निर्वह्निः पर्वतो वह्निमान् नीलपर्वतादित्यत्र नीलत्वाभाववान् वह्निमान् नीलत्वाभाववान् पर्वत इति ज्ञानीयविषयतामादाय नील-त्वाभाववत्पर्वतेऽतिव्याप्तिः साध्यवत्पक्षविषयताबहिर्भूतविषयता-रूपाद्वितीयकल्पोक्तविरोधिविषयतायाः पाषाणमयत्ववत्पर्वतादावपि सत्त्वात् तत्रातिव्याप्तिश्चेति वाच्यम्। पाषाणमयो न वह्निमानिति ज्ञानाकालीनपाषाणमयत्ववत्पर्वतज्ञानोत्तरज्ञानवृत्तिताद्दशाधिकरण-तायां विरोधिविषयताप्रयुक्तत्वानभ्युपगमेन पाषाणमयत्ववत्पर्वत-विषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्तोभयाभा-वासत्त्वेन विशेष्यदलाभावादेवोक्तातिव्याप्त्यसम्भवादिति प्राहुः।

वस्तुतस्तु स्वातन्त्र्येण ताद्दशविशिष्टान्तराघटितत्वनिवेशापेक्ष-या लाघवेन दीधितिकारोक्तविशेष्यदलप्रविष्टोभयाभावाधिकरणता-यामेव विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नविरोधिविषय-तानिष्ठप्रयोजकताकत्वनिवेशान्न विशेष्यदलव्यावृत्त्यसङ्गतिः। अत एव पूर्वमुक्तं भट्टाचार्येण स्वातन्त्र्येण ताद्दशविशेषणं यत्पदार्थे सनि-वेश्य निश्चय एव ताद्दशविशिष्टान्तराविषयकत्वं निवेश्यमिति स्वर-सादत्र निष्कृष्टकल्पे उभयाभावाधिकरणताप्रयोजकतायां ताद्दशवि-शेषणमिति ध्येयम्।

यत्तु गगनमभावाप्रतियोगि गगनादित्यत्राभावाप्रतियोगित्व-व्यापकीभूताभावप्रतियोगिपगगनरूपासाधारणे बाधघटितेऽव्याप्ति-स्तज्ज्ञानोत्तरज्ञाननिष्ठताद्दशसाध्यावगाहित्वाभावाधिकरणतायां बा-धरूपविशिष्टान्तरविषयित्वप्रयोज्यत्वात्।

तत्तुच्छम्। साध्यवत्ताबुद्धौ अभावप्रतियोगिगगननिश्चयत्वेन प्रतिबन्धकतयैवोपपत्तौ तत्र ज्ञानविशिष्टज्ञानत्वेन बाधज्ञानस्य प्र-

तिबन्धकत्वान्तराभावेन तस्यालक्ष्यत्वात् स्वातन्त्र्येण प्रतिबन्धकत्वाभावेन दोषत्वायुक्तत्वात् व्यभिचारादिघटितबाधादेश्च स्वातन्त्र्येण दूषकत्वात् तत्सङ्ग्रहप्रकारस्यावश्यकत्वात् ॥ २५ ॥

व्यभिचारादिघटितबाधादिविषयताप्रयोज्याया दीधितिकारोक्तोभयाभावाधिकरणताया व्याप्त्यादिविरहप्रयोज्यत्वेन यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नबाधादिविषयताप्रयोज्यत्वनियमात् तत्सङ्ग्रहाय तादृशोभयाभावप्रयोजकाभावपर्यन्तनिवेश इति भट्टाचार्येणोक्तम् । न च विशिष्टान्तरविषयत्वाप्रयोज्यस्वविषयताप्रयोज्यतादृशोभयाभावप्रयोजकाधिकरणताकत्वमित्युक्तावेव व्यभिचारघटितबाधे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताव्यक्तिमादाय लक्षणसमन्वयसंभवे उभयाभावप्रयोजकाभावाधिकरणतायामभावीयत्वनिवेशो व्यर्थ इति वाच्यम् । जन्यतावच्छेदकविषयताया जनकतावच्छेदकविषयताप्रयोज्यत्वेन मेयत्वविशिष्टव्यभिचारविषयकसंस्कारोत्तरवृत्तितज्जन्यस्मृतौ या मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नाविषयता तदधिकरणतामादाय मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारकतायां तत्सार्थक्यात्, स्मृतिनिष्ठतादृशाधिकरणतयां तादृशस्मृत्युत्तरानाहार्यज्ञाननिष्ठतादृशोभयाभावप्रयोजकत्वस्य संस्कारीयमेयत्वाविशिष्टव्यभिचारविषयत्वप्रयोज्यत्वस्य च सत्त्वात् । न च स्मृतिनिष्ठतादृशाधिकरणतायां व्यभिचारात्मकविशिष्टान्तरविषयत्वप्रयोज्यत्वात् नोक्तातिव्याप्तिरिति वाच्यम् । जनकतावच्छेदकतावच्छेदकरूपेण जन्यतावच्छेदकविषयताप्रयोजकत्वेन शुद्धव्यभिचारविषयतात्वेन तत्राप्रयोजकत्वादिति ध्येयम् ।

यत्तु तादृशाधिकरणतायामभावीयत्वानिवेशे मेयत्वविशिष्टव्यभिचारव्याप्यवत्यातिव्याप्तिस्तादृशव्याप्यत्वावच्छिन्नविषयताप्रयोज्यमेयत्वविशिष्टव्यभिचारविषयकानुमितिनिष्ठविषयताधिकरणतायामुभयाभावप्रयोजकत्वस्य विशिष्टान्तराविषयत्वाप्रयोज्यत्वस्य च सत्त्वादिति ।

तत्तुच्छम् । अभावीयत्वनिवेशेऽपि व्याप्त्यवगाहित्वाभावाधिकरणतामादाय विशिष्टान्तराघटितत्वस्य तत्र सत्त्वेनोक्तातिव्याप्तेर्दुर्वारत्वादिति ।

अथ पर्वतो धूमवान्वह्नेरित्यत्र धूमाभाववद्धूमव्यभिचारिवह्निमद्-

दावतिव्याप्तिः धूमव्यभिचारिवह्निमान् धूमाभाववान् धूमव्यभिचारिवह्निमांश्च पर्वत इत्यादिज्ञानीयधूमाभाववद् धूमव्यभिचारिवह्निमत्त्वावच्छिन्नविषयतायाः साध्यावगाहित्वाभावाधिकरणताप्रयोजकत्वेन स्वाविषयताप्रयोज्यतादृशसाध्यावगाहित्वाभावाधिकरणतायां विशिष्टान्तराविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वसत्त्वेन विशिष्टान्तराघटितत्वस्य स्वस्वव्यभिचारघटिततया विशेष्यदलस्य च सत्त्वात्। न च स्वविषयताप्रयोज्यतादृशाधिकरणतायां धूमव्यभिचारिवह्निमत्पर्वत रूपविशिष्टान्तरविषयताप्रयोज्यत्वात्कथं तत्राव्याप्तिरिति वाच्यम् धूमव्यभिचारिवह्निमत्पर्वतरूपविशिष्टस्याप्रसिद्ध्या विशिष्टान्तरपदेन तस्योपादातुमशक्यत्वात्।

मैवम्, विशेष्यदलघटकविरोधिविषयतानिष्ठप्रयोजकत्वस्य विशिष्टान्तराघटितत्वदलघटकस्वविषयतानिष्ठप्रयोजकत्वस्य च द्वयोरेकरूपावच्छिन्नत्वविवक्षया यद्विषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयतानिष्ठयद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावदुभयाभाववत्त्वं स्वविषयतानिष्ठतद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यताद्विशिष्टान्तरविषयित्वाप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वमित्यर्थस्य पर्यवसितत्वेन प्रागुक्तातिव्याप्तिवारणानवकाशादिति। एवं च धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यत्र धूमव्यभिचारिवह्निमति प्रागुक्तातिव्याप्तिवारणाय विशिष्टान्तराघटितत्वशरीरे स्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोज्यत्वमपि निवेशनीयं प्रयोजकताद्वयोरैक्यविवक्षयैव तत्रातिव्याप्तिवारणसम्भवादिति ध्येयम्। प्रयोजकतायां स्वविषयतानिष्ठत्वं प्रयोजकतायाः ऐक्यलाभायैवेति ध्येयम्।

एवं प्रतिबन्धकताघटितलक्षणेऽपि विषयतानिष्ठयद्रूपावच्छिन्नावच्छेदकताकप्रतिबन्धकताकत्वं विशेष्यदलघटकं स्वाविषयतानिष्ठतद्रूपावच्छिन्नप्रयोजकत्वमेव विशिष्टान्तराघटितत्वशरीरेऽपि निवेशनीयम् नातस्तल्लक्षणे उक्तदोषसम्भवः ॥२६॥

विरोधिविषयतापदेन तादृशोभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नांशे तद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरावगाहित्वं सिद्धिविषयेऽतिव्याप्तिवारणाय विवक्षितं भट्टाचार्येण।

न च उभयाभावप्रतियोगितावच्छेदककोटौ यद्रूपावच्छिन्नवै-

शिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयता-विवक्षणेनैव सामञ्जस्ये तद्रूपावच्छिन्नांश इत्यस्य वैयर्थ्यमिति वाच्यम् व ह्न्यभाववद्ध्रदकालीनपर्वतो वह्निमानित्यादौ सिद्धिविषयेऽतिव्याप्तिवारणाय तदुपादानादिति तु विभावनीयम्।

अथ विरोधिविषयताशरीरे तद्रूपावच्छिन्नाभावत्वेन तद्रूपावच्छिन्नाभावविषयत्वं वस्तुगत्या तद्रूपावच्छिन्नाभावविषयत्वं वा निवेशनीयम्। आद्ये पर्वतो वह्न्यभाववानित्यत्र वह्निमत्पर्वतरूपबाधेऽव्याप्तिः। द्वितीये पर्वतो वह्निमान् द्रव्याभावादित्यादौ वह्निमत्पर्वतात्मकासिद्धिविषयेऽतिव्याप्तिः वस्तुगत्या वह्नेरपि द्रव्याभावाभावत्वादिति। न च यद्रूपावच्छिन्नांशे यदवगाहिता तत्स्वरूपाभावप्रतियोगितावच्छेदकरूपेण तदभावविषयत्वं विवक्षणीयम् तथाच वह्नित्वस्य पर्वतो वह्न्यभाववानित्यत्र तत्स्वरूपाभावप्रतियोगितावच्छेदकत्वात्, पर्वतो वह्निमान् द्रव्याभावादित्यत्र च तादृशप्रतियोगितानवच्छेदकत्वान्न प्रागुक्ताव्याप्त्यतिव्याप्त्यवकाश इति वाच्यम्। एवमपि ह्रदो वह्न्यभाववान् द्रव्यात् गुणो द्रव्याभाववान् वह्नेरित्यादौ साध्यवत्पक्षेऽतिव्याप्तिर्द्रव्यस्वरूपाभावप्रतियोगितावच्छेदकत्वस्य वह्न्यभावत्वे वह्निस्वरूपाभावप्रतियोगितावच्छेदकत्वस्य च द्रव्यत्वाभावत्वे सत्त्वात्। न च यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नावगाहिता निविष्टा तद्रूपसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकरूपेण तद्रूपावच्छिन्नाभावविषयतानिवेशान्न प्रागुक्तदोषः वह्न्यभावत्वादौ द्रव्यत्वादिसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वाभावादिति वाच्यम्। एवमपि यत्र समवायावच्छिन्नप्रतियोगिताकवह्न्यभावस्य साध्यत्वं संयोगेन वह्नेर्हेतुत्वं तत्र साध्यवत्पक्षेऽतिव्याप्त्यापत्तेर्वह्नित्वसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वस्य समवायसम्बन्धावच्छिन्नवह्न्यभावत्वादेरपि सत्त्वात्। न च यदंशे यद्रूपघटितयद्रूपावच्छिन्नसंसर्गताकयद्रूपावच्छिन्नावगाहित्वं निविष्टं तद्रूपावच्छिन्नसंसर्गताकयद्रूपावच्छिन्नप्रतियोगिताकाभाववृत्तितद्रूपसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकधर्मेण तद्रूपावच्छिन्नाभावविषयतानिवेशान्न कोऽपि दोषः समवायावच्छिन्नवह्न्यभावत्वस्य संयोगत्वावच्छिन्नसंसर्गताकप्रतियोगिताकाभाववृत्तित्वाभावेनातिव्या-

त्तिर्यद्रूपघटितरूपावच्छिन्नेत्युपादानात्, पर्वतत्वावच्छेदेन ध-ह्रस्साध्यतास्थले विशिष्टसंसर्गतावच्छेदकाप्रसिद्धावपि न क्षतिः संसर्गतावच्छेदककोटिप्रविष्टसंयोगत्वमादायैव प्रसिद्धिसम्भवादिति वाच्यम्। तावतापि ह्रदो धूमजनकतेजोभाववान् वह्नेरित्यादौ साध्यवत्पक्षेऽतिव्याप्तेर्दुर्वारत्वात् वह्नित्वसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वस्य वह्नित्वावच्छिन्नाभाववद्वृत्तित्वस्य च धूमजनकतेजोभावत्वे सत्त्वादिति। यदि च धूमजनकतेजोऽभावो न वह्न्यभावस्वरूपः समनियताभावानामैक्यानभ्युपगमादित्युच्यते तदा कथञ्चिदुक्तातिव्याप्तिवारणं सम्भवतीति सुधीभिर्विभावनीयम् (१)।

न चोक्तरीत्या विरोधिविषयतानिर्वचने विरोधियद्विषयतासामान्यप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्यस्यैव सम्यक्त्वे शेषवैयर्थ्यमिति वाच्यम्। तथा सति पर्वतो वह्निमान् नीलपर्वतादित्यत्र नीलत्वाभाववत्पर्वतेऽतिव्याप्त्यापत्तेः नीलत्वाभाववान् वह्न्यभाववान् नीलत्वाभाववांश्च पर्वत इत्याकारकज्ञानोत्तरानुमितिनिष्ठसाध्यावगाहित्वाभावाधिकरणतायां नीलत्वाभाववत्पर्वतनिरूपितविरोधिविषयतासामान्यप्रयोज्यत्वादिति ध्येयम् ॥ २७ ॥

अथ पक्षवृत्तित्वाघटितसाध्यव्यापकीभूताभावप्रतियोगिहेतुरूपासाधारण्येऽव्याप्तिः पक्षवृत्तित्वाघटितासाधारण्ये निरुक्तविरोधिविषयित्वाभावात्। तादृशासाधारण्यविषयकनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावासत्त्वेन विशेष्यदलानाक्रान्तत्वात् स्वविषयताप्रयोज्यतादृशोभयाभावप्रयोजकसाध्यावगाहित्वाभावाधिकरणतायां हेतुमत्पक्षरूपविशिष्टान्तरविषयताप्रयोज्यत्वेन विशिष्टान्तराघटितत्वस्यासत्त्वाच्च। न च विशेष्यदलरक्षणाय यद्विषयकनिश्चये पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वं विशेषणं देयमिति वाच्यम् त-

(१) परे तु तद्रूपावच्छिन्नाभावनिष्ठत्वमनिवेश्य तद्रूपावच्छिन्नघटकतानवच्छेदकं तद्रूपावच्छिन्नाभावत्वावच्छिन्नविषयित्वाव्यापकं यद्विषयत्वं तच्छून्यप्रतीतिविषयतावच्छेदकत्वस्य निरुक्तानुयोगितानिरूपितप्रतियोगितावच्छेदकतायां निवेशान्नोक्तदोषः। विषयतायां घटकतानवच्छेदकत्वनिवेशात् धूमजनकतेजोऽभावकालीनवह्निहेतुकधूमजनकतेजोऽभावसाध्यकस्थले न साध्यवत्पक्षेऽतिव्याप्तिरित्याहुः।

थासति यद्विषयकनिश्चये हेतुमत्तानिश्चये च अनाहार्यत्वनिवेशस्याऽवश्यकत्वेन स्वरूपासिद्धावव्याप्त्यापत्तेः। यत्तु यद्विषयकनिश्चयोत्तरोत्पन्न इति प्रकृतलक्षणे तृतीयक्षणव्यावृत्ताव्यवहितोत्तरत्वमेव निवेशनीयम् तथाचासाधारण्यनिश्चयोत्तरं पक्षे हेतुसाध्यावगाह्यनाहार्यज्ञानांनुत्पत्त्या तादृशनिश्चयोत्तरानुमितिसामान्ये एव निरुक्तोभयाभावसत्त्वाद्विशेष्यदलमक्षतमेवेति। तत्तुच्छम्। द्वितीयक्षणमात्रपर्यवसायिअव्यवहितोत्तरत्वनिवेशे काञ्चनमयः पर्वतो वह्निमान्धूमादित्यत्र काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिधूमत्वरूपस्यासाधारण्यानात्मकस्यालक्ष्यतया तत्रातिव्याप्त्यापत्तेः, ह्रदो वन्हिमान् जलादित्यत्र जलावच्छेदेन वन्ह्यभावघटितवन्ह्यभावज्जलवद्‌दात्मकेऽतिव्याप्तेश्च—तन्निश्चयद्वितीयक्षणे निरुक्तोभयाभावावगाहि—अनाहार्यज्ञानानुत्पादात्, एवमसाधारण्यविषयकनिश्चयोत्तरानुमितिसामान्ये निरुक्तोभयाभावसत्त्वेऽपि उक्तविरोधिविषयताप्रयुक्तत्वाविशिष्टतादृशोभयाभावासत्त्वात् असाधारणेऽव्याप्तितादवस्थ्याच्च। न च विशेष्यदलरक्षणाय हेतुमत्पक्षज्ञानाकालीनत्वासाधारण्यविषयकत्वैतदुभयाभाववैशिष्ट्यम् असाधारण्यज्ञाने विरोधिविषयतासम्पादनाय च मुख्यविशेष्यताद्वयशून्यत्वं यद्विषयकनिश्चये निवेशनीयम्, तथाच साध्यव्यापकीभूताभावप्रतियोगिहेतुमान्पक्ष इत्याकारकविशिष्टविषयताशालिज्ञानमादायैवासाधारणे लक्षणसमन्वय इति वाच्यम् हेतुमत्पक्षाविषयकहेतुमत्पक्षज्ञानकालीनासाधारण्यज्ञानेऽपि निरुक्तोभयाभाववत्त्वस्य मुख्यविशेष्यताद्वयशून्यत्वस्य च सत्त्वात्तत्र च निरुक्तविरोधिविषयत्वाभावात्तदुत्तरानुमितौ विरोधिविषयताप्रयुक्तोभयाभावासत्त्वादसाधारण्येऽव्याप्तितादवस्थ्यात् जातिमान् वन्ह्यभाववानित्यादिज्ञानमादायासम्भववारणायाव्यापकीभूतविषयताशून्यत्वनिवेशस्यावश्यकतया विशिष्टविषयताशालिज्ञानमादाय लक्षणसमन्वयासम्भवाच्च। एतेन हेतुमत्पक्षज्ञानाकालीनत्वं परित्यज्य हेतुमत्पक्षविषयताघटितोभयाभावनिवेशे विशिष्टविषयताशालिज्ञानमादायैवासाधारण्यसङ्ग्रह इत्यपि परास्तम्। न च यदंशे यदवगाहित्वं तदंशे तदवगाहिग्रहप्रतिबन्धकतावच्छेदकयद्रूपावच्छिन्नविषयत्वं तद्रूपावच्छिन्नविषयतैव विरोधिविषयतापदेन वाच्या य-

द्विषयकनिश्चये हेतुमत्पक्षज्ञानाकालीनत्वघटितोभयाभाववत्त्वमेव निवेशनीयम् तथाच हेतुमत्पक्षज्ञानाकालीनहेतुत्पक्षाविषयकासाधारण्यज्ञानमादायैव लक्षणसमन्वय इति वाच्यम् विरोधिविषयतापदस्य उक्तार्थकत्वे पर्वतो वह्निमान्धूमादित्यादौ साध्यवत्पक्षेऽतिव्याप्त्यापत्तेः वह्निमान् धूमाभाववान् वह्निमांश्च पर्वत इत्यादिज्ञानीयप्रतिबन्धकतावच्छेदकत्वस्य वह्निमत्पर्वतविषयतायामपि सत्त्वात् इति चेत् ।

अत्र केचित्-विरोधिविषयतापदेन यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नावगाहिता निविष्टा तद्रूपावच्छिन्नविशेष्यताभिन्नविशेष्यतानिरूपितद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयता(१) वाच्या यद्विषयकनिश्चये प्रागुक्तोभयाभाववत्त्वं निवेशनीयम् तथाच हेतुमत्पक्षज्ञानाकालीनतादृशपक्षाविषयकासाधारण्यसङ्ग्रह इत्याहुः ।

तदप्यसत् । उक्तक्रमेण विरोधिविषयतानिर्वचने पर्वतो वह्निमान् वह्निमत्पर्वताभावादित्यत्र साध्यवत्पक्षेऽतिव्याप्त्यापत्तेः ।

नव्यास्तु साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्त्वानिश्चयान्यत्वासाधारण्यविषयकत्वोभयाभाववत्त्वं यद्विषयकनिश्चये निवेशनीयम् तथाच साध्यव्यापकीभूताभावप्रतियोगिहेतुमान्पक्ष इत्याकारकज्ञानमादायैवासाधारणे लक्षणसमन्वयः । न चोक्तज्ञानस्याव्यापकीभूताभावप्रतियोगिविषयताशून्यत्वाभावात् कथं तदादाय लक्षणसमन्वय इति वाच्यम् अव्यापकीभूतविषयताशून्यत्वपदेनापि साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षविषयतानन्तःपात्यव्यापकीभूतविषयताशून्यत्वस्य अव्यापकीभूतविषयतावत्त्वसाध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षविषयतानन्तःपातिविषयतावत्त्वोभयाभावस्य विवक्षितत्वादिति प्राहुः ।

एतेन विशेष्यदलप्रविष्टविरोधिविषयतानिष्ठप्रयोजकतायां विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नत्वनिवेशेनैव सामञ्जस्ये पृथक् विशिष्टान्तराघटितत्वनिवेशो विफलः । न च विशिष्टान्तराघटितत्वानिवेशे ह्रदत्वावच्छेदेन वन्हेस्साध्यतास्थले तदवच्छेदेन वन्ह्यभाववद्ध्रदादावतिव्याप्तिः ह्रदत्वावच्छेदेन वन्ह्यभावविषयता-

(१) विषयतात्वेन निवेशाद्वन्ह्यव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नविशेष्यतामादाय लक्षणगमनादिति ध्येयम् ॥

त्वावच्छेदेन तादृशोभयाभावप्रयोजकतायाः विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नत्वात्। स्वमते तु तादृशोभयाभावप्रयोजकीभूतायां ह्रदत्वावच्छेदेन साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां सामानाधिकरण्येन वह्न्यभाववद्ध्रदात्मकविशिष्टान्तरविषयताप्रयोज्यत्वाभावादव्याप्तिरिति वाच्यम् तस्य लक्ष्यत्वात्। अन्यथा सामानाधिकरण्येन साध्यावगाहित्वाभावाधिकरणतामादाय तन्निवेशेऽप्यप्रतीकारादिति पूर्वपक्षो निरस्तः। साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षविषयत्वस्यैव निरुक्तविरोधिविषयतारूपत्वात् तन्निष्ठप्रयोजकतायां हेतुमत्पक्षरूपविशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नतयाऽसाधारणेऽव्याप्तिप्रसङ्गादिति ध्येयम्।

अत्रोक्तरीत्याऽसाधारण्ये विशेष्यदलसत्त्वसंपादनेऽपि हेतुमत्पक्षरूपविशिष्टान्तरघटितत्वात्कथं तत्संग्रहः। न च विशिष्टान्तरपदेन प्रकृतलक्षणाक्रान्तविशिष्टान्तरं वक्तव्यम् हेतुमत्पक्षादिकं च न तथेति वाच्यम् तथापि जलाभाववद्ध्रदकालीनवह्नेस्साध्यतास्थले जलवद्ध्रदात्मकहेतुमत्पक्षस्य तादृशतया तत्रासाधारणेऽव्याप्तेरपरिहारात्। न च विशिष्टान्तराघटितत्वशरीरे ज्ञानवैशिष्ट्याप्रयोज्यत्वे सति यद्विशिष्टान्तरविषयताप्रयोज्यत्वं तदभावनिवेशान्नासाधारण्यासङ्ग्रह इति वाच्यम् तथा सति मेयत्वविशिष्टासाधारण्येऽतिव्याप्त्यापत्तेः। अथासाधारण्यविषयतात्वावच्छिन्नप्रयोजकत्वानिरूपितस्वज्ञानवैशिष्ट्यप्रयोज्याधिकरणतावृत्तित्वोभयाभावस्य विशिष्टान्तरविषयताप्रयोज्यतायां निवेशे हेतुमत्पक्षरूपविशिष्टान्तरमादाय नासाधारण्यासङ्ग्रह इति। न चैवं असाधारण्यज्ञानकालीनमेयत्वविशिष्टाद्यज्ञानोत्तरानुमितिनिष्ठमेयत्वविशिष्टबाधविषयताप्रयोज्यसाध्यावगाहित्वाभावाधिकरणतायां बाधात्मकविशिष्टान्तरविषयताप्रयोज्यत्वसत्त्वेऽपि तत्प्रयोज्यतायां निरुक्तोभयाभावासत्त्वान्मेयत्वविशिष्टबाधेऽतिव्याप्तिरिति वाच्यम्। स्वविषयताप्रयोज्यतायामपि निरुक्तोभयाभावनिवेशात्।

अथ तादृशाधिकरणतानिष्ठहेतुमत्पक्षविषयताप्रयोज्यत्वं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणघटकैर्यावद्भिर्निरूपितमेकमेव न तु नानेति कथं विशिष्टान्तरविषयताप्रयोज्यतायां तादृशोभयाभावनिवेशेऽप्यसाधारण्यसंग्रह इति चेत्, तर्हि तादृशप्रयोज्यत्वस्यैक्येऽपि

तादृशप्रयोज्यतानिरूपितहेतुमत्पक्षविषयतानिष्ठप्रयोजकता नानैवाव-च्छेदकभेदात्तासां भिन्नानामपि तत्प्रयोज्यतानिरूपितप्रयोजकतात्वेन व्यासज्यवृत्तितया महानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्तेरैक्येन तद्भेदेन न प्रयोजकताभेदः । एवं च ज्ञानवैशिष्ट्यप्रयोज्यतानिरूपितत्वासाधारण्यविषयतात्वानवच्छिन्नत्वोभयाभाववती या विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकता तन्निरूपितप्रयोज्यत्वाभावस्य विशिष्टान्तरविषयत्वाप्रयोज्य इत्यनेन विवक्षितत्वात् हेतुमत्पक्षविषयतानिष्ठतादृशप्रयोजकतायां तादृशोभयवत्त्वेनासाधारण्यसङ्ग्रहादिति चेन्न । ह्रदो वह्निमान् वह्निमद्वृत्तिजलादित्यादौ साधनाप्रसिध्यात्मकवह्निमद्वृत्तिजले मेयत्वविशिष्टेऽतिव्याप्तिः । वह्निमद्वृत्तिजलं मेयं जलवांश्च ह्रद इति ज्ञानोत्तरघटाद्यनुमितिनिष्ठमेयत्वविशिष्टवह्निमद्वृत्तिजलाविषयताप्रयोज्यसाध्यावगाहित्वाभावाधिकरणतायां तद्घटकीभूतवह्निमद्वृत्तिजलविषयताप्रयोज्यत्वेऽपि तत्प्रयोज्यतानिरूपिततादृशजलाविषयतानिष्ठप्रयोजकतायां तादृशोभयाभावविरहेण तादृशोभयाभाववद्विशिष्टान्तरविषयतानिष्ठप्रयोजकतानिरूपितप्रयोज्यत्वाभावस्य तादृशाधिकरणतायामक्षतत्वेन तामादाय विशिष्टान्तराघटितत्वस्य सत्त्वात्, एवं ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलवद्भ्रदेऽतिव्याप्त्यापत्तेश्च—तद्घटकीभूतवह्न्यभाववज्जलवदादिरूपविशिष्टान्तरविषयतानिष्ठतादृशाधिकरणताप्रयोजकतायां तादृशोभयवत्त्वात् । न चासाधारण्याविषयताप्रयोज्याधिकरणताप्रयोजकत्वासाधारण्यविषयत्वान्यत्व-एतदुभयाभावो विशिष्टान्तराविषयतायामेव निवेशनीयः नतु तन्निष्ठप्रयोजकतायामुक्तोभयाभावः तथा च नोक्तातिव्याप्तिद्वयावकाश इति वाच्यम् । तथा सति ह्रदो वह्निमान्धूमादित्यादौ मेयत्वविशिष्टबाधेऽतिव्याप्त्यापत्तेः वह्न्यभाववान् ह्रदः प्रमेयः वह्निव्यापकीभूताभावप्रतियोगी धूमः धूमवान् ह्रद इति ज्ञानोत्तरघटाद्यनुमितिनिष्ठपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण बाधासाधारण्यविषयितयोर्द्वयोरेव प्रयोजकतया बाधविषयतायां तादृशोभयाभावासत्त्वेन विशिष्टान्तरपदेन वाधस्य धर्तुमशक्यत्वादिति चेत् ।

अत्र केचित्–असाधारण्यविषयताप्रयोज्यत्वनिरूपितत्वासाधा-

रण्यविषयतात्वानवच्छिन्नत्वोभयाभाववती या विशिष्टान्तरविषयतानिष्ठप्रयोजकता तन्निरूपितप्रयोज्यत्वाभावस्य विशिष्टान्तराविषयत्वाप्रयोज्येत्यनेन विवक्षणान्नोक्तदोष इत्याहुः ।

तन्न, धूमाभाववत्पर्वतकालीनपर्वतो वह्निमान् धूमादित्यादौ आश्रयासिद्ध्यात्मकमेयत्वविशिष्टधूमवत्पर्वतेऽतिव्याप्तिः वह्निव्यापकीभूताभावप्रतियोगी धूमः धूमवान् पर्वतः प्रमेय इति ज्ञानोत्तरघटाद्यनुमितिनिष्ठप्रमेयत्वविशिष्टधूमवत्पर्वतविषयताप्रयोज्यपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय विशिष्टान्तराघटितत्वसत्त्वात् । धूमवत्पर्वतरूपविशिष्टान्तरविषयतानिष्ठतादृशाधिकरणताप्रयोजकतायामसाधारण्यविषयतात्वानवच्छिन्नत्वासाधारण्यविषयताप्रयोज्यतानिरूपितत्वोभयसत्त्वात् धूमवत्पर्वतरूपविशिष्टान्तरविषयतानिष्ठप्रयोजकत्वे स्वविषयतानिष्ठप्रयोजकत्वे उभयत्रैव तादृशोभयाभावं निवेश्य विशिष्टान्तरविषयतानिष्ठतादृशोभयाभावप्रयोजकाधिकरणताकत्वमित्युच्यते तदा न कोऽपि दोषः । एवञ्च ज्ञानवैशिष्ट्यप्रयोज्यतानिरूपितत्वघटितप्रागुपदर्शितोभयाभावस्य उभयप्रयोजकतानिवेशोऽपि साधीयानिति ।

अथैवं प्रागुक्तदोषवारणाय स्वविषयतानिष्ठप्रयोजकतायां विशिष्टान्तरविषयतानिष्ठप्रयोजकतायां च ज्ञानवैशिष्ट्यप्रयोज्यतानिरूपितत्वासाधारण्यविषयतानवच्छिन्नत्वोभयाभावनिवेशध्रौव्ये निरुक्तोभयाभाववद्विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभाववन्निरुक्तोभयाभावविशिष्टस्वविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावदुभयाभावप्रयोजकाभावाधिकरणताकत्वमित्यस्यैव सम्यक्त्वे विशेष्यदलनिवेशो विफल इति चेन्न कपिसंयोगाभाववद्वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्त्यापत्तेः । न च यद्विषयकनिश्चये अव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वनिवेशस्यावश्यकतया अव्याप्यवृत्तित्वज्ञानानास्कन्दितकपिसंयोगाभाववद्वृक्षविषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावसत्त्वात् तन्निवेशेऽपि तत्रातिव्याप्तिरिति वाच्यम् अव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वं यद्विषयकनिश्चये इत्येव विशेष्यदले निवेश्यतया तत्राव्याप्यवृत्तित्वभ्रमानास्कन्दिततन्निश्चयोत्तरानुमितिसामान्ये ता-

द्वयोभयाभाववत्त्वविरहादिति ध्येयम् ।

वस्तुतो विशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नस्वविषयतानिष्ठप्रयोजकताकप्रयोज्यतावच्चादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वमेव विशिष्टान्तराघटितत्वं वाच्यमतो नोक्तदोषः असाधारण्यविषयतानिष्ठप्रयोजकतायां हेतुमत्पक्षरूपविशिष्टान्तरविषयतात्वव्यापकरूपानवच्छिन्नत्वसत्त्वात्तत्राव्याप्तिविरहात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयतानिष्ठप्रयोजकतायां च जलवद्ध्रदात्मकविशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नत्वेन तत्रातिव्याप्तिविरहाच्चेति युक्तमुत्पश्यामः ।

परे तु स्वघटकत्वेन यत्किञ्चिद्विशिष्टान्तरस्य विशेषणीयत्वान्नासाधारण्यसङ्ग्रहः, हेतुमत्पक्षरूपविशिष्टान्तरस्य स्वघटकत्वाभावात् वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादौ च नातिव्याप्तिः जलवद्ध्रदात्मकविशिष्टान्तरस्य स्वघटकत्वात् । न चैवं वह्न्यभाववद्ध्रदादावव्याप्तिस्तत्र स्वघटकविशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नतादृशप्रयोज्यत्वासिद्धेरिति वाच्यम् स्वघटकविशिष्टान्तरविषयताप्रयोज्यस्वविषयताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणतासामान्यकं यद्यत्तदन्यत्वस्य विवक्षितत्वात् । सामान्यपदोपादानात् विशेषगुणवद्घटादौ गुणवद्घटादिरूपविशिष्टान्तरविषयताप्रयोज्यस्वविषयताप्रयोज्यतादृशसाध्यावगाहित्वाभावाधिकरणताकत्वेऽपि नाव्याप्तिः । व्यभिचारविशिष्टमेयत्वादावतिव्याप्तिस्तु विरोधिविषयतायां स्वीयत्वनिवेशेन वारणीया । न च धूमव्यभिचारिवह्निर्धूमवान्वह्नेरित्यादौ धूमाभाववद्धूमव्यभिचारिवह्न्याद्यात्मकबाधादावव्याप्तिः व्यभिचारात्मकविशिष्टान्तरविषयताप्रयोज्यस्वविषयताप्रयोज्यतादृशाधिकरणतासामान्यकेनाभाववद्धूमव्यभिचारिवह्न्यादिना घटितत्वादिति वाच्यम् धूमव्यभिचारत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताया एव तादृशाधिकरणताप्रयोजकतया धूमव्यभिचारत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यतात्वावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितधूमव्यभिचारिवह्नित्वावच्छिन्नविशेष्यतायाः तादृशाधिकरणताप्रयोजकत्वेन स्वपदेनाभाववद्धूमव्यभिचारिवह्न्यादेर्धर्तुमशक्यत्वाद- व्याप्त्यनवकाशादित्याहुः ।

तद्भिन्नत्वम् ॥२८॥

साध्यवत्पक्षविषयतावहिर्भूतविषयत्वं विरोधिविषयतापदेन वि-
वक्षितम् भट्टाचार्येण।

अथैतत्कल्पे पर्वतो वह्निमान् वह्न्यभावादित्यादौ अव्याप्तिः
स्वरूपासिद्धिविषयतायाः साध्यवत्पक्षविषयतावहिर्भूतत्वाभावेन
तादृशस्वरूपासिद्धिविषयकनिश्चयोत्तरानुमितौ विरोधिविषयताप्र-
युक्तोभयाभावादिति। न च साध्यवत्पक्षविषयतावहिर्भूतविषयता-
पदेन साध्यवत्पक्षविषयतात्वहेतुवैशिष्ट्यावगाहित्वाभावाधिकरण-
त्वाप्रयोजकत्वोभयाभाववद्विषयताविवक्षणान्नोक्तदोष इति वाच्यम्
तथासति पर्वतो वह्निमान्धूमादित्यादौ साध्यवत्पक्षेऽतिव्याप्त्यापत्तेः
वह्निमान् धूमाभाववानितिज्ञानकालीनवह्निमत्पर्वतविषयकज्ञानस्यापि
हेतुमत्ताज्ञानप्रतिबन्धकतया विवक्षितत्वात् तथाच साध्यवत्पक्ष-
विषयताया अपि निरुक्तोभयाभाववत्त्वादिति चेन्न

विरोधिविषयतानिष्ठप्रयोजकतापदेन साध्यवत्पक्षविषयतावृत्ति-
त्वहेतुवैशिष्ट्यावगाहित्वाभावाधिकरणतानिष्ठप्रयोज्यत्वानिरूपितत्वो-
भयाभाववत्प्रयोजकताया विवक्षित्वात् तथाचोक्तस्थले हेतुवैशिष्ट्या-
वगाहित्वाभावाधिकरणताप्रयोजकताया एव तादृशोभयाभाववत्त्वेन
तामादायैव लक्षणसमन्वयः। न च पर्वतः प्रमेयवह्निमान् वह्न्यभावादि-
त्यत्र साध्यवत्पक्षेऽतिव्याप्तिस्तत्र हेतुवैशिष्ट्यावगाहित्वाभावाधिकर-
णताप्रयोजकतायां निरुक्तोभयाभाववत्त्वेन तामादाय विशेष्यदलस्य
साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय विशिष्टान्तराघटित-
त्वसत्त्वादिति वाच्यम् विशिष्टान्तराघटितत्वान्तर्गतस्वविषयतानिष्ठ-
प्रयोजकतायां साध्यवत्पक्षविषयतावृत्तित्व-निरुक्तोभयाभावप्रतियो-
गितावच्छेदककोटौ यदंशे यदवगाहित्वं साध्यवत्पक्षविषयतातिरिक्तं
तदंशे तदवगाहित्वाभावनिष्ठप्रयोज्यतानिरूपितप्रयोजकताभिन्नत्व-
एतदुभयाभाववत्त्वनिवेशेनैव उक्तातिव्याप्तिवारणसंभवात्।

वस्तुतस्तु प्रागुक्तयुक्त्या विरोधिविषयतानिष्ठप्रयोजकतावच्छे-
दकतावच्छेदकस्य स्वविषयतानिष्ठप्रयोजकतावच्छेदकस्य च द्वयो-
रैक्यविवक्षणस्यावश्यकतया तत्र च उक्तातिव्याप्तिवारणं सम्भ-
वतीति ध्येयम् ॥ २९ ॥

यत्तु पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहि-

निश्चयावृत्तिविषयतैव विरोधिविषयतापदार्थः तथाच यन्निरूपित-तादृशविषयताशालिनिश्चयोत्तरानुमितित्वव्यापकाभावप्रसक्तस्तत्त्व-मिति समुदायार्थः। निश्चयत्वं विशेषणविशेष्यतावच्छेदकभावाना-पन्नविरोधकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वमित्युक्तं भट्टाचार्येण।

अथ कोटिद्वये विशेषणविशेष्यतावच्छेकभावानापन्नत्वविशेष-णान्निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्या-दिवैशिष्ट्यावगाहिज्ञानस्यैकत्र विरोधिकोटिद्वयप्रकारकत्वनियमे-ऽपि न तादृशनिश्चयाप्रसिद्धिः। एकधर्मिविशेष्यकेत्युपादानात् ह्रदो वह्निमान् धूमान्यधूमादित्यत्र वह्न्यभाववद्घटादौ नाव्याप्तिः अन्यथा वह्न्यभाववद्घटाद्यविषयकस्य पक्षे साध्यादिनिश्चयस्यैव विशेषण-विशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकज्ञानान्यज्ञान-त्वेन वह्न्यभाववद्घटादिविषयतायास्तदवृत्तित्वेनातिव्याप्तिः स्यात्। न चैवं ह्रदो वह्निमान् वह्न्यभाववद्ह्रदकालीनधूमादित्यत्र निरुक्तज्ञा-नान्यस्य पक्षे साध्यादिवैशिष्ट्यावगाहिज्ञानस्याप्रसिद्ध्या अव्याप्तिरिति वाच्यम् स्वनिरूपकत्व–स्वविशिष्टप्रकारतानिरूपकत्वोभयसम्बन्धेन प्रकारताविशिष्टज्ञानान्यत्वस्य निरुक्तज्ञानान्यपदेन विवक्षितत्वात्। प्रकारतायां स्ववैशिष्ट्यं च—स्वनिरूपकज्ञाननिरूपितत्व–स्वावच्छेद-कधर्मावच्छिन्नविरोधितावच्छेदकावच्छिन्नत्व–स्वनिरूपितविशेष्य-तानिरूपितत्वैतत्त्रितयसम्बन्धेनेति। तथाचोक्तस्थले वह्निव्याप्यव-ह्न्यभाववद्ह्रदकालीनधूमवान्ह्रदो वह्निमानित्याकारकस्यैवोक्तप्रका-रतासम्बन्धेन विशिष्टज्ञानान्यज्ञानस्य प्रसिद्धत्वान्नाव्याप्तिरिति ध्येयम्।

अथ धूमवान्वह्नेरित्यादौ वह्निना धूमसाधने वह्निर्दुष्ट इत्यादि-व्यवहारादौ धूमत्वावच्छिन्नविधेयताकवह्नित्वावच्छिन्नलिङ्गकसमूहा-लम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्त-वृत्तिविषयतानिरूपकतावच्छेदकधर्मावच्छिन्नत्वस्यैव प्रत्येतव्यतया पर्वते धूमेन वह्निसाधने धूमो न दुष्ट इत्यादिनञ्समभिव्याहृतत्व-स्यानुपपत्तिः तत्र पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधू-मत्वावच्छिन्नलिङ्गताकसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानि-रूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मा-

वच्छिन्नवत्त्वरूपप्रतियोगिनोऽप्रसिद्ध्या योग्यताविरहात् नञा तदभावस्य बोधयितुमशक्यत्वादिति चेन्न वह्निना धूमसाधने वह्निर्दुष्ट इत्यादौ स्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपावच्छिन्नवत्त्वसम्बन्धेन धूमत्वावच्छिन्नविधेयताकवह्नित्वावच्छिन्नलिङ्गताकसमूहालम्बनानुमितित्ववत्त्वं प्रतीयते। सम्बन्धघटकवृत्तित्वं च-स्वावच्छिन्नविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन। तथाच पर्वते धूमेन वह्निसाधने धूमो न दुष्ट इत्यादौ नञ्समभिव्याहृतस्य अन्यत्र प्रसिद्धेन व्यधिकरणतादृशपरम्परासम्बन्धेन पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नविधेयताकधूमत्वावच्छिन्नलिङ्गताकसमूहालम्बनानुमितित्वाभाववत्त्वावगाहितयैवोपपत्तेरिति दिक्।

एतेन स्वावच्छिन्नविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयताकविशिष्टनिरूपितविषयितात्वव्यापकत्वमिति। अत्र कल्पे यत्किञ्चित्वनिवेशेऽपि विशेषगुणवद्भेदेऽव्याप्तितादवस्थ्यम् यत्किञ्चित्पदेन बाधज्ञानीयप्रतिबन्धकतायाः धर्तुं शक्यत्वादिति। तत्रानुगमः क्रियते–तत्पक्षकतत्साध्यकतल्लिङ्गकसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं दोषत्वम्। प्रतिबन्धकतावैशिष्ट्यं च-स्ववृत्तित्व–स्ववृत्तित्वोपलक्षितरूपावच्छिन्नविषयतात्वव्यापकत्वोभयसम्बन्धेन। स्ववृत्तित्वं च–स्वावच्छिन्नविषयताव्यापकत्वसम्बन्धेन। विषयतात्वव्यापकत्वन्तु–स्वावच्छिन्ननिरूपितत्वसम्बन्धेनेति ध्येयम् ॥ ३० ॥

इतिश्रीकालीशंकरसिद्धान्तवागीशविरचिता सामान्यनिरुक्त्यर्थप्रकाशिका कालीशङ्कर्याख्या पत्रिका समाप्ता॥ श्रीरमेशः प्रीयताम् ॥

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सटिप्पणं ([illegible])

# सव्यभिचारप्रकरणम् ।

फलीभूतसंशयधर्मितावच्छेदकता यादृशधर्मे पर्याप्ता तादृशधर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकतावच्छेदकं तद्रूपवत्त्वमिति विवक्षणे कोटिद्वयोपस्थापकत्वस्य वैयर्थ्यमुक्तं भट्टाचार्येण ।

अत्र फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यानिवेशे नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वेति संशयं प्रति तादृशसंशयधर्मितावच्छेदकताश्रय-इदन्त्वावच्छिन्नविशेष्यकानित्यत्ववदभावविषयकज्ञानत्वावच्छिन्नप्रकारताशालिज्ञानत्वेन जनकतया तद्रूपपदेन नित्यत्वतदभावविषयकज्ञानत्वमादाय नित्यत्वसाध्यकज्ञानादिहेतोः सव्यभिचारत्वापत्तिरतस्तन्निवेशः। अथात्र फलीभूतसंशयधर्मितावच्छेकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकतावच्छेदकतावदित्यत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषोऽनतिरिक्तवृत्तित्वं वा ? आद्ये धूमवत्पर्वतकालीनवह्निमान् धूमादित्यादौ धूमवत्पर्वतकालीनवह्निमान्न वेति संशयजनकतावच्छेदकीभूतायां धूमवत्पर्वतकालीनवह्नितदभावसहचरितधूमवानयमित्यादिज्ञानविषयत्वान्तःपातिपर्वतत्वावच्छिन्नविषयतानिरूपितधूमत्वावच्छिन्नविषयतायां फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितत्वसत्त्वात् उक्तसाध्यकधूमेऽतिव्याप्तिः । न च फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकतावच्छेदकतापर्याप्त्यधिकरणमिति विवक्षणे नोक्तातिव्याप्तिरिति वाच्यम् तथासत्यसंभवापत्तेः भ्रमप्रमासाधारणज्ञानस्य, जनकत्वानुरोधेन परस्परोपश्लेषावगाहिज्ञानत्वेनैव जनकता वाच्या अखण्डसाधारण्याद्यवच्छिन्नप्रकारताशालिज्ञानत्वस्य संशयजनकतानवच्छेदकत्वादिति। नापि

द्वितीयः—नित्यत्वतदभावविषयकज्ञानवानयं ज्ञानवानिति ज्ञानीयताद्दशधर्मावच्छिन्नविशेष्यतानिरूपितशुद्धज्ञानत्वावच्छिन्नप्रकारताया अपि नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वेति संशयजनकतानतिरिक्तवृत्तितयाऽयं नित्यो ज्ञानादित्यत्रातिव्याप्तेः ।

अत्रोच्यते—स्वरूपसम्बन्धरूपं जनकतावच्छेदकत्वं निवेशनीयम् धूमवत्पर्वतकालीनवह्निमान्धूमादित्यत्र प्रागुक्तातिव्याप्तिस्तु फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारतात्वस्य ताद्दशधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितद्रूपावच्छिन्नप्रकारतासामान्यस्य वा निवेशेनैव वारणीयेति ध्येयम् ॥ १ ॥

अथैवमपि नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावविषयकज्ञानवानिति—ज्ञानीयताद्दशधर्मावच्छिन्नविशेष्यतानिरूपितनित्यत्वतदभावविषयकज्ञानत्वावच्छिन्नप्रकारताया अपि इदन्त्वावच्छिन्नविशेष्यताकनिरूपितताद्दशज्ञानत्वावच्छिन्नप्रकारतात्वेन नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वेति संशयजनकतावच्छेदकतयाऽयं नित्यो ज्ञानादित्यत्राविव्याप्तिर्दुर्वारैव। न च फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकतानिरूप्यताविशिष्टयद्रूपावच्छिन्नप्रकारतात्वं संशयजनकतावच्छेदकतावच्छेदकं तद्रूपावच्छिन्नमिति विवक्षणे नायं दोषः । इदन्त्वमात्रावच्छिन्नविशेषतात्वावच्छिन्ननिरूपकताकनिरूप्यताघटितरूपस्यैव ताद्दशसंशयजनकतावच्छेदकतावच्छेदकतया नित्यत्वतदभावविषयकज्ञानवदिदंत्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकताकनिरूप्यतावत्ताद्दशज्ञानत्वावच्छिन्नप्रकारतात्वस्य ताद्दशजनकतावच्छेदकतानवच्छेदकत्वात् इति वाच्यम् । नित्यत्वतदभावविषयकज्ञानवदिदन्त्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकताकनिरूप्यतायाः एकव्यक्तितया इदन्त्वावच्छिन्ननिरूपकताकनिरूप्यताकत्वेन रूपेण ताद्दशजनकतावच्छेदकत्वात् ताद्दशप्रकारतात्वस्य जनकतावच्छेदकत्वाच्च विशिष्टस्य सुतरां जनकतावच्छेदकत्वेनातिव्याप्तितादवस्थ्यादिति । यदि ताद्दशविशिष्टप्रकारतात्वे जनकतावच्छेदकतायाः पर्याप्तिर्निवेश्यते, तदा ता-

ष्टाविशिष्टघटकज्ञानत्वावच्छिन्नांशस्य तादृशजनकतावच्छेदकको-टावनन्तर्भावेणोक्तातिव्याप्तिवारणेऽप्यसंभवः लाघवेन तद्धर्मावच्छिन्न-विशेष्यतानिरूपितप्रकारतात्वेन जनकतावच्छेदकत्वस्वीकारेणैवो-पपत्तावनवच्छेदकीभूतविशेष्यतात्वावच्छिन्नत्वांशान्तर्भावेण जनक-तावच्छेदकतावच्छेदकत्वस्य पर्याप्तेरसंभवात्, एतच्चानुमितिग्रन्थे प्रकारान्तरानुसरणे गौरवमित्यादिना भट्टाचार्येणैव स्फुटीकृतमिति। किञ्च भ्रमसाधारण्यानुरोधेन निरूप्यनिरूपकभावापन्नप्रकारतात्वे-नैव जनकताच्छेदकताया वक्तव्यत्वेन साधारण्यावच्छिन्नप्रकारतात्व-स्यापि जनकताच्छेदकतात्वपर्याप्त्यधिकरणत्वाभावेनासम्भवापत्त-श्चेति । एतेन फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरण-धर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारतात्वं संशयजन-कतावच्छेदकतावच्छेदकत्वपर्याप्त्यधिकरणं तद्रूपवत्त्वमित्युक्तावपि न निस्तार इति चेत्,

अत्राहुः-तद्धर्मपर्याप्तावच्छेदकताकविशेष्यताकसाध्यसंशयत्वा-वच्छिन्नजन्यतानिरूपितजनकतायास्तद्धर्मपर्याप्तावच्छेदकताकमु-ख्यविशेष्यतानिरूपितप्रकारतात्वेनावच्छेदिका या प्रकारता तद-वच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वमिति विवक्षणान्न कोऽपि दोषः। अनुगमस्तु—प्रकृतसाध्यसंशयीयकोटितानिरूपितविशेष्यताविशि-ष्टावच्छेदकतावत्प्रकारतावच्छेदकरूपवत्त्वम् । विशेष्यतावैशिष्ट्यं च-स्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्व-स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतानिरूपि-तत्वावच्छिन्नत्व-उभयसम्बन्धेन। अतएव नित्यत्वतदभावविषयक-ज्ञानवनायं नित्यो न वा अयं च नित्यो न वेति समूहालम्बनसंशय-जनकतामादाय नित्यो ज्ञानादित्यत्र नातिव्याप्तिः नित्यत्वतदभाव-विषयकज्ञानवानयं नित्यत्वतदभावविषयकज्ञानवानिति—ज्ञानी-यविशिष्टज्ञानत्वावच्छिन्नप्रकारतायामेतत्संशयीयइदन्त्वावच्छिन्नवि-शेष्यत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वा-भावात्, विशिष्टज्ञानवदिदन्त्वावच्छिन्नविशेष्यत्वघटितधर्मावच्छि-न्नजन्यतानिरूपितजनकतावच्छेदकत्वसत्त्वेऽपि तादृशावच्छेदकतायां विशिष्टज्ञानवदिदन्त्वपर्याप्तावच्छेदकताकविशेष्यतानिरूपितत्वावच्छि-न्नत्वाभावादिति ॥

वस्तुतस्तु फलीभूतसंशयीयसाध्यतावच्छेदकावच्छिन्नकोटितानिरूपितविशेष्यताविशिष्टा या आधेयत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितधर्मितावच्छेदकतानिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारतावच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वमेव विवक्षणीयम् ॥ तादृशकोटितानिरूपितविशेष्यतावैशिष्ट्यं च स्वावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्व—स्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वोभयसम्बन्धेन । समूहालम्बनसंशयीयविशिष्टज्ञानवदिदन्त्वावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वस्येदन्त्ववृत्तितादृशावच्छेदकतायां सत्त्वेऽपि विशिष्टज्ञानवदिदन्त्वावच्छिन्नविशेष्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वाभावात् तादृशसंशयीयशुद्धेदन्त्वावच्छिन्नविशेष्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वसत्त्वेऽपि च तादृशविशेष्यताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वाभावात् नोक्तसमूहालम्बनसंशयमादायातिव्याप्तिः । मुख्यविशेष्यतानिवेशाच्च धूमवत्पर्वतकालीनवह्निमान् धूमादित्यादौ न प्रागुक्तातिव्याप्तिः ।

केचित्तु—फलीभूतसंशयीयसाध्यतावच्छेदकावच्छिन्नकोटितानिरूपितविशेष्यतावच्छेदकता यादृशधर्मे पर्याप्ता तादृशधर्मावच्छिन्नमुख्यविशेष्यताविशिष्टा या तद्विशेष्यताशालिसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतप्रकारता तदवच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वमिति । निरुक्तमुख्यविशेष्यतावैशिष्ट्यञ्च स्वनिरूपितत्व—स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं च स्वनिरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नावच्छेदकताकत्वसम्बन्धेन, नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावविषयकज्ञानवान्—इति ज्ञानीयविशिष्टज्ञानत्वावच्छिन्नप्रकारता तु न निरुक्तमुख्यविशेष्यताविशिष्टेति नोक्ताऽतिव्याप्तिः । न च यत्त्वतत्त्वनिवेशादननुगमः, साध्यतावच्छेदकावच्छिन्नकोटितानिरूपितविशेष्यताविशिष्टप्रकारतावच्छेदकरूपवत्त्वे तात्पर्यात् । विशेष्यतावैशिष्ट्यं च स्वघटितसंशयत्वाव-

च्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतावत्त्वोभयसम्बन्धेन । उक्तसम्बन्धघटकमुख्यविशेष्यतावत्त्वं च प्रागुक्तोभयसम्बन्धेन । मुख्यविशेष्यताव्यावृत्तिस्तु पूर्ववदित्याहुः ।

यदि च वक्ष्यमाणयुक्त्या साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशऔव्ये प्रयोजनविरहेण संशयत्वस्य जन्यतानवच्छेदकतयाऽसंभव इत्युच्यते, तदा प्रागुक्तोभयसम्बन्धघटकीभूतस्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितत्वमपहाय स्वविशिष्टविशेष्यताशून्यसाध्यसंशयानिष्ठजन्यतानिरूपितजनकतानिरूपितत्वघटितोभयसम्बन्धेनैव विशेष्यतावैशिष्ट्यं विवक्षणीयम् ॥ उक्तसम्बन्धघटकस्ववैशिष्ट्यं च स्वभिन्नत्व-स्वानवच्छिन्नत्व-स्वनिरूपकज्ञानीयत्व-एतत्त्रितयसम्बन्धेन इति ध्येयम् ॥

केचित्त्वित्यादिकल्पेऽपि स्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वमपहाय उक्तत्रितयसम्बन्धेन स्वविशिष्टमुख्यविशेष्यताशून्यसाध्यसंशयानिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वं निवेशनीयमिति संक्षेपः ॥ २ ॥

जनकता च साध्यसंशयत्वावच्छिन्नजन्यतानिरूपिता ग्राह्या, अतः सम्बन्धान्तरज्ञानजन्यकोट्युपस्थितविशेषणज्ञानमुद्रया साध्यसंशयजनकत्वेऽपि न क्षतिः । यदि चासाधारणधर्मादिज्ञानजन्यसंशये व्यभिचारवारणाय साधारणादिज्ञानजन्योपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थित्यव्यवहितोत्तरत्वनिवेशस्यावश्यकतया साध्यसंशयत्वं तत्र प्रयोजनविरहेण न निवेश्यते, तदा साध्यसंशयत्वावच्छिन्नत्वं परित्यज्य साध्यसंशयत्वन्यूनवृत्तित्वमेव निवेशनीयम् । विशेषणज्ञानादिजन्यता च न तन्न्यूनवृत्तिरिति नातिप्रसङ्गः । न चैवमपि यत्र नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावसहचरितप्रमेयत्ववांश्चायमित्याकारकज्ञानाभ्यां नित्यत्वतदभावविषयिणी एकैवोपस्थितिर्जनिता तत्र तादृशोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वमादाय ज्ञानेऽतिव्याप्तिर्दुर्वारैव तादृशोपस्थितिव्यक्तेः साधारणादिधर्मवत्ताज्ञानजन्यतया साध्यसंशयत्वावच्छिन्नं प्रति जनकत्वादिति वाच्यम् । साध्यसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानियतजन्यतानिरूपकीभूतजनकताया एव पक्षधर्मता-

ज्ञानविशेषणत्वोपगमात्    नित्यत्वतदभावविषयकज्ञानवत्ताज्ञान-
जन्यता च न तादृशजनकतानियतेति भट्टाचार्येणोक्तम्।

अथात्रोक्तयुक्त्या साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्यावश्यकतया तादृशज्ञानजन्यत्वस्य साध्यसंशयाजनकतादृशज्ञानाव्यवहितोत्तरघटज्ञानादिसाधारणतया साध्यसंशयजनकताव्यभिचारित्वेनासंभवापत्तिरिति चेत्।

अत्राहुः—साध्यसंशयजनकतानियतत्वं न तादृशजनकताशू-
न्यावृत्तित्वं येनाऽसंभवः स्यादिति, किन्तु तादृशजनकताशून्य-
साध्यतदभावविषयकोपस्थित्यवृत्तित्वरूपमेव वाच्यम्। तथाच
साधारणादिधर्मवत्ताज्ञानजन्योपस्थितिमात्रस्यैव साध्यसंशय-
जनकतात्वेन तादृशजनकताशून्यत्वमसाधारणादिधर्मवत्ताज्ञानज-
न्योपस्थितावेवेति तादृशोपस्थित्यवृत्तित्वस्य साधारणधर्मवत्ता-
ज्ञानजन्यतायामक्षतत्वान्न दोषः॥ अथवा तादृशजनकतानियु-
तत्वं—स्वव्यापकतादृशजनकताकत्वम्। स्वपदं तादृशजनकतानिय-
तत्वाभिमतजन्यतापरम्। स्वव्यापकत्वं च स्वाधिकरणीभूतसाध्य-
तदभावविषयकोपस्थितिनिष्ठभेदप्रतियोगितानवच्छेदकत्वम्, तथाच
नित्यत्वतदभावविषयकज्ञानजन्यतायाः साध्यसंशयाजनकसाध्य-
तदभावविषयकोपस्थितावपि सत्वेन साध्यसंशयजनकतायां ताह-
शज्ञानवत्ताज्ञानजन्यताशालितदभावविषयकोपस्थितिनिष्ठभेदप्रति-
योगितानवच्छेदकत्वाभावान्नातिव्याप्तिः। साधारणादिधर्मवत्ताज्ञा-
नजन्यताशालिसाध्यतदभावविषयकोपस्थितिमात्र एव च साध्यसं-
शयजनकतासत्वात् नोक्ताऽसंभवः। एतेन पूर्वकल्पे विशेषण-
ज्ञानादिमुद्रया साध्यसंशयजनकताशून्यसाध्यतदभावविषयकोप-
स्थित्यप्रसिद्ध्यैव विशेषणज्ञानादिमुद्रया जनकतामादायातिप्रसङ्गा-
भावात् जन्यतायां(१) साध्यसंशयत्वावच्छिन्नत्वं-साध्यसंशयत्वन्यू-
नवृत्तित्वं वा व्यर्थमिति परास्तम्। एतत्कल्पे विशेषणज्ञानादिमुद्रया
जनकतायामपि निरुक्तस्य नित्यत्वतदभावविषयकज्ञानवत्ताज्ञान-
जन्यत्वव्यापकत्वस्य सत्वेनोक्तातिव्याप्तिवारणायैव तत्सार्थक्या-
दिति ध्येयम्॥

---

(१)यत्किञ्चिज्जनकतानियतजन्यतानिवेशेनासंभववारणसंभवात्।

विका तत्तद्धर्मावच्छिन्नविशेष्यकसमूहालम्बनानुमितिरेवेति तादृशानुमितित्वव्यापकत्वं प्रतिवध्यतायामक्षतमेव। अत्राप्युक्तबाधाद्यतिव्याप्तिवारणदिशाऽसम्भवसङ्गतिरिति प्राहुः॥

केचित्तु उक्तरीत्या प्रतिवध्यतायामनुमितित्वव्यापकत्वरक्षणाय सधर्मितावच्छेदकहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितित्वव्यापकस्वनिष्ठप्रतिबन्धकतानिरूपितप्रतिवध्यताकं तादृशविशिष्टत्वमिति लक्षणं व्याचक्षाणा उक्तबाधातिव्याप्तिं वारयन्तो हेतुमत्तानिश्चयसमानकालीनदोषविषयकनिश्चयस्य स्वसमानकालीनहेतुमत्तानिश्चयाप्रसिद्ध्याऽसम्भवःयादृशदोषविषयकनिश्चये न हेतुमत्ताज्ञाननैयत्यं तादृशदोषलक्षणसम्भवाभाव इत्येवासम्भवपदार्थ इति प्रलपन्ति॥

(अथात्र वह्निमद्ह्रदकालीनवह्निमान् जलवद्ध्रदकालीनह्रदत्वादित्यादौ वन्हिव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्याद्यनात्मकेऽतिव्याप्तिः हेतुमत्तानिश्चयकालीनस्य तन्निश्चयसामान्यस्यैव वह्निमद्ध्रदावगाहितादृशानुमितिसामान्यविरोधित्वात् इति चेन्न। ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्त्वस्य प्रतिबन्धकतायां निवेशेनैवोक्तातिव्याप्तिवारणसम्भवात्। न चैवमुक्तस्थले वन्ह्यभाववद्ध्रदादिविषयताया हेतुमत्तानिश्चयसमानधर्मितावच्छेदककप्रकृतसाध्यानुमितित्वव्यापकप्रतिवध्यतानिरूपिततादृशोभयाभाववत्प्रातिबन्धकतानातिरिक्तवृत्तितया वन्ह्यभाववद्ध्रदादावतिव्याप्तिरिति वाच्यम्। प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधित्वदलेनतद्वारणादिति ध्येयम्॥)

केचित्तु असाधारण्यविषयकत्वानवच्छिन्नं यत् प्रकृतानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकत्वं तदन्यत्वस्य लक्षणघटकप्रतिबन्धकतायामनुमितिसाधारण्यविरोधित्वमित्यनेन विवक्षणीयतयोक्तस्थले वह्निव्यापकीभूताभावप्रतियोगिजलविषयकत्वावच्छिन्नप्रतिबन्धकताया असाधारण्यविषयकत्वानवच्छिन्नत्वात् तादृशानुमितित्वव्यापकप्रतिवध्यतानिरूपितत्वाच्च नातिव्याप्तिरित्याहुः। तच्चिन्त्यम्॥

परंतु समूहालम्बनतादृशानुमितित्वव्यापकप्रतिबध्यतायां विशिष्टसाध्यग्रहत्वन्यूनवृत्तित्वनिवेशान्नोक्तातिव्याप्तिः। न चैवमुक्तस्थले वह्निव्यापकीभूताभावप्रतियोगिह्रदत्वरूपासाधारण्येऽव्याप्तिः केवलह्रदत्वधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनतादृशासाधारण्यनिश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गतत्वेन तत्समानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककह्रदत्वावच्छिन्नविशेष्यकानुमितित्वव्यापकप्रतिबध्यताया विशिष्टसाध्यग्रहत्वव्यापकत्वादिति वाच्यम्, विशिष्टसाध्यघटकधर्मनिष्ठधर्मितावच्छेदकताशून्यत्वेन सधर्मितावच्छेदककहेतुमत्तानिश्चयस्य विशेषणीयत्वेनोक्तस्थले ह्रदत्वधर्मितावच्छेदककहेतुमत्तानिश्चयस्य लक्षणघटकत्वादुक्तासाधारण्ये च घटत्वादिधर्मितावच्छेदककहेतुमत्तानिश्चयमादायैव लक्षणसमन्वयादिति ॥

अथवा—हेतुमत्तानिश्चये उक्तावच्छेदकताशून्यत्वनिवेशने उक्तन्यूनवृत्तित्वमनिवेश्य प्रतिबध्यतायां विशिष्टसाध्यघटकधर्मावच्छिन्नमुख्यविशेष्यत्वानवच्छिन्नत्वं निवेश्यापि उक्ताव्याप्तिर्वारयितुं शक्यते—इत्याहुः ।

(अथ साध्याभावतद्व्याप्यधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनदोषविषयकनिश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गततया तत्समानकालीनहेतुमत्ताधर्मितावच्छेदकीभूतसाध्याभावादिधर्मितावच्छेदककसाध्यानुमितेरप्रसिध्द्या असंभवः) न च धर्मितावच्छेदकतायां निरवच्छिन्नत्वस्य निवेशितत्वान्नासंभव इति वाच्यम् । तथापि द्रव्यभेदसाध्यकगुणवत्त्वहेतुकस्थले द्रव्यभेदव्यापकीभूताभावप्रतियोगिगुणरूपासाधारण्येऽव्याप्त्यापत्तेः । द्रव्यत्वनिष्ठनिरवच्छिन्नधर्मितावच्छेदकताकगुणवत्त्वरूपहेतुमत्तानिश्चयकालीनदोषविषयकनिश्चयसमानकालीनहेतुमत्तानिश्चयधर्मितावच्छेदकीभूतद्रव्यत्वधर्मितावच्छेदककद्रव्यभेदसाधारण्यानुमितेरप्रसिद्धेरिति चेन्न। अनाहार्यज्ञानीयसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतधर्मावच्छिन्नविशेष्यताकहेतुमत्तानिश्चयकालीनत्वस्य कालीनत्वान्तेन विवक्षितत्वादिति ध्येयम् ।)

अथ सधर्मितावच्छेदककहेतुमत्तानिश्चयीययादृशविशिष्टविषयकनिश्चयसामान्यमित्यत्र सामान्यपदस्य व्यापकात्मकतया तादृशनि

श्रयत्वव्यापकतालाभः। तथा च निश्चयस्याप्रक्रान्ततया स्वपदेन तस्य बोधयितुमशक्यत्वात् स्वपदेन तादृशनिश्चयत्वस्यैव धर्तव्यत्वेन तत्कालीनत्वस्याव्यावर्तकतया स्वाश्रयकालीनत्वमेव निवेशनीयम्, तथाच सति तादृशदोषविषयकनिश्चयकालीनत्वस्य तादृशदोषविषयकनिश्चयकालीनधर्मिका यावन्तो हेतुमत्तानिश्चयाः सम्भवन्ति तावत्स्वेव सत्त्वादसाधारण्याव्याप्त्यापत्तेः पूर्वोक्तरीत्या वारणेऽपि बाधाव्याप्तिर्दुर्वारैव तादृशनिश्चयत्वाश्रयकालीनहेतुमत्तानिश्चयधर्मितावच्छेदकादिरूपयत्किञ्चिद्धर्मस्य सर्वस्य सर्वत्र ग्रहीतुं शक्यत्वादिति। न च तदर्थेन तादृशनिश्चयव्यापकत्वमेव निवेशनीयं, तथा च स्वपदेन तत्तन्निश्चयमादाय सर्वत्र लक्षणं संगमनीयमतो नाव्याप्तिरिति वाच्यम्, व्याप्यदिश्यनुगतरूपेण तादृशनिश्चयत्वेन निश्चयनिवेशे व्यापकदिशि स्वत्वघटितधर्मनिवेशे व्याप्यव्यापकभावसम्भवात् स्वत्वस्याननुगततया तद्घटितधर्मस्य व्यापकतावच्छेदकत्वाभावादिति चेत्।

अत्र केचित्—प्रकृतसाध्यविषयकप्रकृतहेतुधर्मिकप्रकृतसाध्यनिरूपितव्याप्तिप्रकारतानुमितिविशिष्टान्यत्वानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकरूपवत्त्वघटितमेव लक्षणं वक्तव्यमतो नोक्तदोषः। तादृशानुमितिवैशिष्ट्यं च स्वनिष्ठभेदप्रतियोगितावच्छेदकत्व-स्वीयसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयकालीनत्वोभयसंबंधेन। भेदप्रतियोगितावच्छेदकत्वं च स्वनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वसंबंधेन। संबंधस्य व्यावृत्तिः स्वयमूह्येत्याहुः। तच्चिन्त्यम् ॥

वस्तुतस्तु सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकतावच्छेदकं ज्ञानत्वं तद्रूपपरत्वं लक्षणम्। व्यापकता च स्वतादात्म्य-स्वसमानकालीनहेतुमत्तानिश्चयीयधर्मितावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यविधेयकप्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्तिप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतावत्त्वोभयसंबंधेनेति ध्येयम्।

कश्चित्समाधत्ते-सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयद्रूपावच्छिन्नविषयकनिश्चयसामान्यं प्रकृतसाध्यप्रकारकप्रकृतहेतुधर्मि-

कप्रकृतसाध्यव्याप्तिप्रकारकानुमित्यवृत्ति तद्रूपत्वम् । तादृशानुमिति-
वृत्तित्वं च स्वसमानकालीननिश्चयीयहेतुतावच्छेदकावच्छिन्नप्रका-
रतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्य-
तावच्छेदकावच्छिन्नप्रकारताकत्व-स्वनिष्ठप्रतिबन्धकतानिरूपितप्र-
तिवध्याभाववत्त्वएतोभयसंबंधेन । एतत् पुनश्चिन्त्यम् ॥

नन्‌ वह्निमान् अवृत्तिजलादिरित्यादौ अनाहार्यहेतुमत्तानिश्चयाप्र-
सिद्ध्याऽव्याप्तिः अवृत्तिजलवानित्यादिनिश्चयस्य नियताहार्यत्वात् ।
न च हेतुतावच्छेदकतापर्याप्त्यनिवेशाद्धेतुतावच्छेदकीभूतशुद्धज-
लत्वावच्छिन्नवत्तानिश्चयस्यानाहार्यस्य प्रसिद्ध्या तत्कालीनवह्निव्याप-
कीभूताभावप्रतियोगिजलादिनिश्चयमादायैव तादृशजलादौ लक्षण-
समन्वय इति वाच्यम् । तथासति वह्निमान् काञ्चनमयजलाद्जलशै-
वालोभयस्मादित्यादौ काञ्चनमयवानित्यादिहेतुमत्तानिश्चयकालीन-
वह्निव्यापकीभूताभावप्रतियोगिजलमिति निश्चयस्यापि तादृशनिश्चय-
सामान्यान्तर्गततया तस्यानुमित्यप्रतिबन्धकत्वाद्वह्निव्यापकीभूताभा-
वप्रतियोगिजलात्मकासाधारण्येऽव्याप्तेरिति चेन्न ।

निश्चयविशिष्टान्यहेतुतावच्छेदकताश्रयधर्मावच्छिन्नप्रकारकसध-
र्मितावच्छेदककनिश्चयनिवेशेनैवोक्तदोषवारणसम्भवात् । निश्चयवैशि-
ष्ट्यं च स्वनिष्ठासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतानवच्छेद-
ककिञ्चिद्धर्मावच्छिन्नविषयितावत्त्व-स्वसमानकालीनत्व-स्वसामाना-
धिकरण्यैतत्त्रितयसम्बन्धेन । तथाचोक्तस्थले एवंभूतं हेतुम-
त्ताज्ञानं वह्निव्यापकीभूताभावप्रतियोगिजलज्ञानकालीनजलवान्
ह्रद इति ज्ञानमेवेति तत्कालीनासाधारण्यविषयकनिश्चयमादा-
यैव लक्षणसंगतिः ॥ प्रथमसम्बन्धानिवेशे निश्चयमात्रस्यैव वै-
शिष्ट्यसत्त्वात् निश्चयविशिष्टान्यनिश्चयस्यैवाप्रसिद्धिरतस्तन्निवे-
शः । जलशैवालोभयहेतुकस्थले वह्निव्यापकीभूताभावप्रतियो-
गिजलवह्निव्यापकीभूताभावप्रतियोगिशैवालोभयस्यैवासाधारण्यत-
यैकघटितासाधारण्यविषयकनिश्चयकालीनहेतुमत्तानिश्चयस्यान्यघ-
टितासाधारण्यविषयकनिश्चयविशिष्टत्वादव्याप्तिरतो द्वितीयस-
म्बन्धनिवेशः । तन्निवेशे चैकघटितासाधारण्येऽन्यघटितासा-
धारण्यविषयकनिश्चयासमानकालीनस्वघटकहेतुतावच्छेदकीभूतध-
र्मावच्छिन्नवत्तामादायैव लक्षणसमन्वयः । तृतीयस्य फलं पुरुषा-

न्तरीयनिश्चयमादायाव्याप्तिवारणम्।

यद्वा हेतुतावच्छेदकघटकयत्किञ्चिद्धर्मावच्छिन्नयत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यविरोधि तादृशत्वमेव लक्षणम्। उक्तस्थले च यत्किचिद्धर्मपदेन हेतुतावच्छेदकघटकजलत्वमादायैव लक्षणं संगमनीयम्। अतएव वह्निमान् वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकभूताभावत्वकालीनजलादित्यादाव भावत्वावच्छेदेन तादृशावच्छेदकत्वावगाहिप्रकृतहेतुमत्तानिश्चयकालीनस्य वह्निव्यापकीभूताभावप्रतियोगिअभावत्वकालीनजलरूपासाधारण्यविषयकनिश्चयस्य नियताहार्य्यतया तादृशासाधारण्याव्याप्तिरित्यपि निरस्तम्। यत्किञ्चित्पदेनोक्तहेतुतावच्छेदकघटकाभावत्वकालीनजलत्वमादायैव तत्र लक्षणसमन्वयादिति ध्येयम् ॥१४॥

सर्वमाकाशवत् प्रमेयत्वादित्यादिस्थलीयबाधप्रतिरोधयोरतिव्याप्तिः सर्वमाकाशाभाववदित्यादिनिश्चये सति क्वचिदप्याकाशाद्यनुमितेरनुदयात् अनुभवानुरोधेनासमानधर्मितावच्छेदककज्ञानेऽपि तत्प्रतिबन्धकत्वकल्पनात्तयोरनुमितिसामान्यविरोधित्वादतः सर्वं साध्याभाववत्तद्व्याप्यवद्वेत्यादिकन्तु साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधि, साध्यानुमितिसामान्याविरोधित्वं वा विशेषणमित्युक्तं दीधितिकृता। निर्धर्मितावच्छेदककज्ञानस्य बाधाद्यप्रतिबध्यत्वे सामानाधिकरण्यग्रहस्य साध्यांशे निर्धर्मितावच्छेदकतया तदविरोधित्वमुक्तबाधादेरक्षतमेवेति, इत्याशयेनाहानुमितिसामान्याविरोधित्वं वेति भट्टाचार्येणोक्तम्।

अथात्र विरोधवारकसाध्यसमानाधिकरण्यग्रहाविरोधित्वदले साध्यवत्त्वांशेऽधिकरणत्वस्य धर्मितावच्छेदकसामानाधिकरण्यग्रहाविरोधित्वनिवेशेनैव उक्तबाधेऽतिव्याप्तिवारणसम्भवे कृतमनुमितिसामान्याविरोधित्वरूपातिरिक्तविशेषणेनेति। न च अत्र गगनं साध्यमधिकरणत्वं हेतुस्तत्र गगनाभाववदधिकरणात्मके व्यभिचारेऽव्याप्तिभियाऽधिकरणत्वस्य धर्मितावच्छेदकत्वनिवेशासंभव इति वाच्यम्। अधिकरणत्वसामानाधिकरण्येन गगनाभावस्यैव तत्र व्यभिचारतयाऽधिकरणत्वसामानाधिकरण्येन साध्यसामानाधिकरण्यग्रहाविरोधित्वस्य तत्र सत्त्वेनाव्याप्त्यनवकाशात्। एवं यत्र

द्रव्यमभाववद्वृत्ति सत्त्वादित्यादौ द्रव्यत्वाभाववद्वृत्तिसत्तात्मकव्यभिचाराव्याप्तिभिया साध्यसाधनसामानाधिकरण्यग्रहत्वाव्यापकत्वस्य प्रतिबध्यतायां निवेश्यतया व्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतामादायैवोक्तव्यभिचारसंग्रहसंभवाच्चेति चेन्न। यत्र गगनस्य साध्यता गगनाभाववदधिकरणस्य हेतुता तत्र साध्यांशेऽधिकरणत्वधर्मितावच्छेदककस्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यज्ञानस्यानाहार्यस्याऽसम्भवेनाधिकरणत्वस्य धर्मितावच्छेदकत्वनिवेशायोगात्। एवं यत्राधिकरणत्वाभावस्य साध्यता तत्र साध्यांशेऽधिकरणत्वधर्मितावच्छेदककसाध्यसामानाधिकरण्यज्ञानस्य नियताहार्य्यतया तन्निवेशासम्भवाच्चेति ध्येयम्। न चैतावताधिकरणत्वस्य धर्मितावच्छेदकत्वानिवेशासम्भवेऽपि साध्यांशे सधर्मितावच्छेदककसाध्यसामानाधिकरण्यग्रहाविरोधित्वनिवेशेनैव सामाञ्जस्यामिति वाच्यम्, तस्यापि प्रकारान्तरत्वादिति ध्येयम्॥ १९॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सव्यभिचारक्रोडपत्रम्॥

॥ श्रीगणेशायनमः ॥

॥ श्री कालीशंकराभ्यां नमः ॥

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सटिप्पणं

# साधारणक्रोडपत्रम् । (त्रयोदश)

यादृशज्ञानान्तरविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकत्वं तादृशज्ञानान्तरसहिततादृशविशिष्टविषयकज्ञानानधिकरणक्षणवृत्तित्वविशिष्टतादृशविशिष्टपर्याप्तविषयताविरहवत्त्वे सति यादृशविशिष्टविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तादृशत्वमिति मिश्रमतं भट्टाचार्येणोक्तम्।

नन्वत्र तादृशज्ञानान्तरसहिततादृशविशिष्टविषयकज्ञानानधिकरणक्षणवृत्तित्वविशिष्टत्वयत्र अनधिकरणत्वं किं यादृशयत्किञ्चिदधिकरणत्वाभावः किंवा तादृशाधिकरणत्वसामान्याभावः तादृशाधिकरणत्वाभावकूटवत्त्वं वा ॥ नाद्यः तादृशज्ञानद्वयाधिकरणक्षणस्यापि तादृशज्ञानसहितस्य ज्ञानव्यक्त्यन्तरस्यानधिकरणत्वेन ज्ञानद्वयकालेऽप्ययोगोलकवृत्तिवन्ह्याद्यात्मकव्यभिचारादेरसंग्रहापत्तेः । नापि द्वितीयः यत्त्वतत्त्वयोरननुगमेन धूमाभाववदयोगोलकं अयोगोलकवृत्तिर्वन्हिरिति ज्ञानद्वयस्यायोगोलकवृत्तिर्वन्हिरयोगोलकवृत्तिर्धूमाभाव इति ज्ञानद्वयस्य धूमाभाववदयोगोलकं वन्हिमदयोगोलकमितिज्ञानद्वयस्य अयोगोलकवृत्तिर्धूमाभावः वन्हिमदयोगोलकमितिज्ञानद्वयस्य चाधिकरणसाधारणानुगतानतिप्रसक्तरूपाभावादसम्भवापत्तेः । नापि तृतीयः जलवान् वन्ह्यभाववान् जलवान् ह्रद इति ज्ञानद्वयकालेऽपि अयोगोलकवृत्तिवन्ह्यादेर्व्यभिचारितापत्तेः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतयावज्ज्ञानस्यैव यादृशज्ञानान्तरपदेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकविषयिताकयावद्विशिष्टस्यैव च यादृशविशिष्टपदेन प्रतिपाद्यतया जलवान् वन्ह्यभाववानिति ज्ञानसहितजलवद्ध्रदविषयकज्ञानाधिकरणत्वाभावस्यापि तादृशाधिकरणत्वाभावकूटान्तर्गततया जलवान् वन्ह्यभाववान् जलवान् ह्रद इत्यादिज्ञानशून्य-

कालस्यैव तादृशाधिकरणत्वाभावकूटवत्क्षणत्वेन तादृशक्षणवृत्तित्व-विशिष्टविषयिताविरहस्य तदानीमक्षतत्वादिति ।

अत्राहुः-एकैकविशिष्टमादाय यादृशयादृशज्ञानविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकत्वं तादृशतादृशज्ञानसहिततादृशविशिष्टविषयिताकज्ञानाधिकरणत्वाभावकूटवत्क्षणवृत्तित्वविशिष्टतादृशविशिष्टपर्याप्तविषयताविरहकूटवत्त्वमेव विवक्षणीयम् । तथा चायोगोलकवृत्तिवह्निरूपविशिष्टोपादाने तद्विषयकज्ञाननिष्ठप्रतिबन्धकतायामवच्छेदकं धूमाभाववदयोगोलकं अयोगोलकवृत्तिर्धूमाभाव इत्यादिज्ञानस्य वैशिष्ट्यमेव, न तु जलवान् वह्न्यभाववान् जलवान्-ह्रद इत्यादिज्ञानस्य वैशिष्ट्यमिति-जलवान् वह्न्यभाववान् इति ज्ञानकालेऽयोगोलकवृत्तिवह्न्यात्मकव्यभिचारे नातिव्याप्तिः । जलवान् वह्न्यभाववान् जलवान्-ह्रद इत्यादिज्ञानद्वयाधिकरणत्वाभावस्यायोगोलकवृत्तिवह्निरूपविशिष्टपर्याप्तविषयताविरहप्रतियोगिकोट्यप्रविष्टत्वादिति ॥

वस्तुतस्तु धर्मविशिष्टविषयताविरहवत्त्वमेव सत्यन्तदलार्थः । वैशिष्ट्यञ्च स्वपर्याप्तत्व-स्वनिरूपितविषयताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतज्ञानसहितस्वविषयताशालिज्ञानानधिकरणक्षणवृत्तित्वैतदुभयसम्बन्धेन, नातः पूर्वोक्तदोषाणामवकाशः ॥

न चायोगोलकवृत्तित्ववान् व्याप्यभाववानिति ज्ञानकालीनायोगोलकवृत्तिर्वह्निरिति ज्ञानकालेऽयोगोलकवृत्तिवह्नौ व्याप्यभाववदयोगोलकवृत्तित्ववति च तदानीं व्यभिचारात्मकेऽतिव्याप्तिः। एवं वह्निधूमवान्वह्निरित्यादौ धूमाभाववदयोगोलकवृत्तित्ववदयोगोलकवृत्तिवह्निरिति ज्ञानकाले चायोगोलकवृत्तिवह्न्यादावतिव्याप्तिः । अयोगोलकवृत्तित्ववद्धूमाभाववदित्यादिज्ञानस्यापि अयोगोलकवृत्तिवह्न्यात्मकविशिष्टविषयकज्ञाननिष्ठप्रतिबन्धकतावच्छेदकतयाऽयोगोलकवृत्तित्ववद्व्याप्यभाववदित्यादिज्ञानसहितायोगोलकवृत्तिवह्निविषयकज्ञानाधिकरणत्वाभावस्यापि अयोगोलकवृत्तिवह्निपर्याप्तिविषयताविरहप्रतियोगिकोटिप्रविष्टत्वादिति वाच्यम् । एतत्समाधानस्याग्रे वक्ष्यमाणत्वादिति ध्येयम् ॥

अत्र च तादृशज्ञानसहिततादृशविशिष्टविषयकज्ञानानाधिकरणक्षणवृत्तित्वेत्यत्र यदवच्छेदेन तादृशज्ञानानधिकरणत्वं तदवच्छेदेन

तादृशानधिकरणक्षणवृत्तित्वं विवक्षणीयम्। तादृशज्ञानाधिकरणत्वाभाववत्त्वमेव वा निरवच्छिन्नत्वं ग्राह्यमेतल्लाभार्थमेव क्षणपदोपादानम्, अन्यथा स्थूलकालस्यैव क्षणपदार्थतया पूर्वदण्डाद्यवच्छेदेन च ज्ञानद्वयाधिकरणस्थूलकालस्य तादृशाज्ञानाधिकरणत्वेन ज्ञानद्वयकालेऽपि सत्यन्तदलासत्त्वप्रसङ्गादिति ध्येयम्।

अथात्र पर्वतो वह्निमान् धूमादित्यादौ पाषाणमयो न वह्निमान् पर्वतश्च पाषाणमय इति ज्ञानद्वयकाले पाषाणमयत्ववत्पर्वतादावतिव्याप्तिः तदानीं तत्र सत्यन्तदलस्य विशेष्यदलस्य च सत्त्वात्, एवं ह्रदो वह्निमान् जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगि जलं जलवांश्च ह्रद इत्यादिज्ञानकाले जलवद्ध्रदादावतिव्याप्तेश्चेति चेन्न।

विशिष्टसाध्यसाधनसामानाधिकरण्यग्रहत्वाव्यापकप्रकृतहेतुधर्मिकप्रकृतसाध्यनिरूपितान्वयव्याप्तिग्रहत्वव्यापकप्रतिबध्यत्वानिरूपितत्व-ज्ञानैवशिष्टयावच्छिन्नत्व—असाधारण्यविषयित्वानवच्छिन्नत्वैतत्त्रित्वावच्छिन्नाभाववत्त्वेन विशेष्यदलघटकप्रतिबन्धकताविशेषणेनैवोक्तातिव्याप्तिवारणसंभवादिति ॥ धूमवान् वह्नेरित्यादौ अयोगोलकं धूमाभाववदयोगोलकवृत्तिर्वह्निरिति ज्ञानद्वयकाले व्याप्तिज्ञानप्रतिबंधकतामादायायोगोलकवृत्तिवन्ह्याद्यात्मकव्यभिचारे लक्षणगमनाय निरुक्तत्रितयाभावप्रतियोगिकोटौ अनिरूपितान्तनिवेशः। काञ्चनमयधूमवान् वह्नेरित्यादौ नीलत्ववान् काञ्चनमयत्वाभाववान् नीलत्ववांश्च धूम इत्यादिज्ञानीयप्रतिबन्धकतायां व्याप्तिग्रहत्वव्यापकप्रतिबध्यत्वानिरूपितत्वासत्त्वेन निरुक्तत्रितयाभावसत्त्वात्तामादायोक्तज्ञानद्वयकाले नीलत्ववद्धूमादावतिव्याप्तिवारणाय प्रतिबध्यतायां हेतुसाध्यकसामानाधिकरण्यग्रहत्वाव्यापकत्वनिवेशः॥ बाधादावसाधारण्ये चातिव्याप्तिवारणायान्तिमयोर्निवेशः।

न च तथापि वह्निर्धूमवान् वह्नेरित्यादावयोगोलकवृत्तित्ववद्धूमाभाववदयोगोलकवृत्तिर्वह्निरित्यादिज्ञानकालेऽयोगोलकवृत्तिवन्ह्यादावतिव्याप्तिः अयोगोलकवृत्तित्ववद्धूमाभाववदिति ज्ञानविशिष्टत्वेनायोगोलकवृत्तिर्वह्निरिति ज्ञानस्य साध्यवत्ताज्ञानप्रतिबन्धकत्वेन सत्यन्तस्य निरुक्तत्रित्वावच्छिन्नाभावाविशिष्टव्याप्तिज्ञानप्रतिबन्धकतामादाय विशेष्यदलस्य च तत्र सत्त्वादिति वाच्यम्। यादृशज्ञानान्तरविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकत्व-

मित्यत्रापि प्रतिबन्धकतायां विशिष्टसाध्यसाधनग्रहत्वाव्यापक-
व्याप्तिग्रहत्वव्यापकप्रतिबध्यत्वानिरूपितत्वासाधारण्यविषयित्वान-
वच्छिन्नत्वोभयाभावस्य निवेशनीयत्वात्, तथा चायोगोलकवृत्तित्वव-
द्धूमाभाववदितिज्ञानस्य यादृशज्ञानान्तरपदेन धर्तुमशक्यत्वेन धू-
माभाववदयोगोलकमितिज्ञानस्य धर्तव्यतया धूमाभाववदयोगोलक-
मित्यादिज्ञानशून्यकाले नोक्तातिव्याप्तिः । तादृशज्ञानकाले च
तस्य लक्ष्यत्वमेव । काञ्चनमयवह्निमान् वह्नेरित्यादौ-अयोगोलक-
वृत्तित्ववत्काञ्चनमयत्वाभाववत् अयोगोलकवृत्तिर्वह्निरिति ज्ञानद्व-
यकालेऽयोगोलकवृत्तिवह्न्यादावतिव्याप्तिवारणाय विशिष्टसाध्य-
साधनग्रहत्वाव्यापकेति । न च वाच्यं गगनादित्यादौ यादृशज्ञाना-
न्तरविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य निरुक्तोभयाभाववत्प्र-
तिबन्धकत्वं तादृशविशिष्टमेवाप्रसिद्धमिति वाच्यम् । वाच्यत्वव्याप-
कीभूताभावप्रतियोगिगगनात्मकासाधारण्यस्यैव प्रसिद्धत्वादिति
ध्येयम् ॥ न च तथाप्ययोगोलकवृत्तित्ववद्व्याप्त्यभाववत्अयोगोलक-
वृत्तिर्वह्निरिति ज्ञानकाले वृत्तिमद्धूमव्याप्त्यभाववद्वृत्तिर्वह्निरिति ज्ञा-
नकाले चायोगोलकवृत्तिवह्नौ वृत्तिवह्नौ च व्याप्त्यभावावच्छेदकत्वेन
गृहीतधर्मवत्ताज्ञानीयप्रतिबन्धकतायां निरुक्तोभयाभावसत्त्वात्ता-
मादायातिव्याप्तिरिति वाच्यम् । किञ्चिद्धर्मावच्छिन्नविशेष्यकसा-
मानाधिकरण्येन व्याप्तिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्र-
तिबध्यतावच्छेदकविषयताशालिज्ञानविशिष्टान्यज्ञानवृत्तित्वेनापि वि-
शेष्यदलसत्यन्तदलघटकप्रतिबन्धकतयोर्विशेषणीयत्वात् । नि-
रुक्तप्रतिबध्यतावच्छेदकविषयताशालिज्ञानवैशिष्ट्यञ्चैकक्षणाव-
च्छिन्नैकात्मवृत्तित्वसम्बन्धेन । तथा च व्याप्त्यभावावच्छेदकत्वेन
गृहीतधर्मवत्ताज्ञानीयप्रतिबन्धकतायां व्याप्त्यभावावच्छेदकत्वेन गृ-
हीतो यो धर्मस्तद्धर्मावच्छिन्नविशेष्यकसामानाधिकरण्येन व्याप्ति-
निश्चयप्रतिबध्यतावच्छेदकविषयताशालिज्ञानविशिष्टान्यज्ञानवृत्ति-
त्वाभावान्नोक्तातिव्याप्तिः । यदि च यत्र स्थले किञ्चिद्धर्मिकसामा-
नाधिकरण्येन व्याप्तिनिश्चयप्रतिबध्यतावच्छेदकविषयिताकविशि-
ष्टस्य धूमाभाववद्वृत्तिजलवद्ध्रदो धूमवान् वह्नेरित्यादिस्थलीयपक्षादे-
र्घटकता तत्रत्यबाधादावव्याप्तिरित्युच्यते । तदा ज्ञानवैशिष्ट्यावच्छि-
न्नत्व-निरुक्तप्रतिबध्यतावच्छेदकविषयिताशालिज्ञानविशिष्टान्यज्ञा-

नावृत्तित्वोभयाभाववत्त्वमेव प्रतिबन्धकतायां निवेश्यमिति ध्येयम्*।

ननु तथापि धूमवान् धूमव्याप्यभाववद्घटकालीनवह्नेरित्यादौ अयोगोलकवृत्तितादृशवह्निरूपव्यभिचारेऽव्याप्तिस्तत्र व्यभिचारज्ञान-प्रतिबन्धकताया घटधर्मिकव्याप्तिधीप्रतिबध्यतावच्छेदकविषयता-शालिज्ञानविशिष्टान्यज्ञानावृत्तित्वज्ञानवैशिष्ट्यावच्छिन्नत्वोभयसत्त्वे-न धर्तुमशक्यत्वादिति चेत्, न—किञ्चिद्धर्मावच्छिन्नधर्मिकव्या-प्तिज्ञानप्रतिबध्यतायां स्वावच्छिन्नविषयत्वाव्यापकत्वनिवेशात्। इत्थञ्चोभयाभावोपि न निवेश्यः-पूर्वोक्तनिवेशेनैव चरितार्थत्वा-दिति ध्येयम्॥

अथात्र धूमवान् वह्नेरित्यादौ धूमाभाववद्ध्रदाद्यात्मकबाधादौ ह्रदविशेष्यकवह्निप्रकारकज्ञानशून्यकालेऽव्याप्तिः निरुक्तबाधविषयक-ज्ञानस्यापि ह्रदो वह्निमानित्याकारकज्ञानान्तराविशिष्टत्वेनानुमितौ व्या-प्त्यंशे प्रतिबन्धकतया ह्रदो वह्निमानित्यादिज्ञानशून्यकाले तत्र स-त्त्यन्तदलविरहादिति। न च दशाविशेष एव बाधादेर्लक्ष्यत्वमिति वा-च्यम्। बाधादेर्नित्यदोषतायाः सर्ववादिसिद्धत्वादिति चेत्।

---

* परे तु पाषाणमयत्ववत्पर्वतादावतिव्याप्तिवारणाय लक्षणघ-टकप्रतिबन्धकतायां प्रकारताविशिष्टान्यत्वे सति प्रकारताविशिष्टा-न्यत्वं निवेशनीयं। प्रथमवैशिष्ट्यं च स्वनिरूपकज्ञानवैशिष्ट्याव-च्छिन्नत्व-स्वनिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतानिरूपित-विशेष्यत्वोभयसम्बन्धेन। प्रकारतायां विशेष्यतावच्छेदकतावैशि-ष्ट्यञ्च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन। स्वं ग्राह्याभावप्रका-रता। द्वितीयवैशिष्ट्यं च स्वनिरूपकज्ञानवैशिष्ट्यावच्छिन्नत्व-स्ववि-शिष्टावच्छेदकताकविशेष्यतानिरूपितप्रकारतावच्छिन्नत्वोभयसंब-न्धेन। अवच्छेदकतायां प्रकारतावैशिष्ट्यं च स्वानवच्छेदकानवच्छि-न्नत्वसम्बन्धेन। स्वं व्यावर्तकधर्मनिष्ठप्रकारता। न च वह्निमद्वृत्ति-जलं जलवान् पर्वत इति ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धक-तया वह्निमद्वृत्तिजले एवं वह्निव्यापको धूमः धूमाभाववानिति ज्ञान-काले धूमाभाववदयोगोलके चातिव्याप्तिः तत्प्रतिबन्धकतायां निरु-क्तप्रकारताविशिष्टान्यत्वादिति वाच्यम्। अगत्या तत्तत्प्रतिबन्धक-ताभेदस्य निवेश्यत्वादित्याहुः॥

अत्रोच्यते यादृशज्ञानान्तराविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकत्वमित्यत्र प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तिविषयिताकत्वेन यादृशविशिष्टं विशेषणीयम् , अतो यादृशविशिष्टपदेन बाधादेर्धर्तुमशक्यत्वान्नोक्ताव्याप्तिः। न चैवं महानसनिरूपितत्वाभाववदवृत्तिकालीनपर्वतो वह्निमान् धूमादित्यादौ महानसं वह्न्यभाववदित्यादिज्ञानशून्यकाले महानसवृत्तिधूमे निर्जलह्रदकालीनपर्वतो वह्निमान् सस्नेहजलादित्यादौ ह्रदो वह्न्यभाववानितिज्ञानशून्यकाले सस्नेहजलवद्ध्रदे एवमभावत्वावच्छेदेन वह्निमदन्यत्ववैशिष्ट्येन घटत्वावच्छेदेनाभाववदन्यत्ववैशिष्ट्येन प्रतियोगितासम्बन्धेन वह्नीयवदन्यत्ववैशिष्ट्येन च घटितपक्षतावच्छेदकवह्निमदन्याभावकालीनाभाववदन्यवह्नीयवदन्यघटकालीनपर्वतो वह्निमान् धूमादित्यादौ घटवृत्तिर्धूम इत्यादिज्ञानशून्यकाले आश्रयासिद्धित्रयघटितवह्न्यभाववद्घटात्मके चातिव्याप्तिः। तत्तद्विशिष्टविषयकज्ञानस्य ज्ञानद्वयकाले व्याप्त्यंशेऽनुमितिप्रतिबन्धकत्वेन विशेष्यदलस्य तत्तद्विशिष्टस्यानुमितिप्रतिबन्धकतातिरिक्तवृत्तिविषयिताकत्वाभावेन यादृशविशिष्टपदेन धर्तुमशक्यत्वेन सत्यन्तदलस्य च तत्र सत्त्वादिति। अत एव बाधादावुक्ताव्याप्तिवारणाय ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकविषयिताकत्वेन यादृशविशिष्टं विशेषणीयमित्यपि प्रत्युक्तम्। तथासत्युक्ताश्रयासिद्धिघटितविशिष्टानां ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकविषयिताकत्वाभावेनोक्तातिव्याप्तेर्दुर्वारत्वादिति वाच्यम्। यादृशविशिष्टविषयितासामान्यं यत्प्रतिबन्धकतावच्छेदकं तत्प्रतिबन्धकतातिरिक्तवृत्तिविषयिताकत्वेन सत्यन्तदलघटकयादृशविशिष्टस्य विशेषणादेव सर्वसामञ्जस्यात्। बाधादौ साध्यवत्ताज्ञानप्रतिबन्धकतामादायैव लक्षणसमन्वयात् ज्ञानद्वयकालेऽनित्यदोषस्थले च व्याप्तिज्ञानप्रतिबन्धकतामादायैव लक्षणसमन्वयात्। न च ज्ञानद्वयशून्यकालेऽपि पक्षज्ञानप्रतिबन्धकतामादायासिद्धिघटितोक्तातिव्याप्तिता दवस्थ्यमिति वाच्यम्। यत्प्रतिबन्धकतामादाय लक्षणं सङ्गमनीयं तत्प्रतिबन्धकत्वघटितस्यैव विशिष्टान्तराघटितस्य विवक्षणीयतया पक्षज्ञानप्रतिबन्धकताघटितविशिष्टान्तराघटितत्वविरहादेवोक्तातिव्याप्तिवारणसम्भवादिति ध्येयम् ॥०॥

परे तु यादृशज्ञानान्तरविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताविशिष्टान्यप्रतिबन्धकत्वं तादृशज्ञानसहिततादृशविशिष्टविषयकज्ञानाधिकरणत्वं विवक्षणीयम्। प्रतिबन्धकतावैशिष्ट्यं च व्यापकतासम्बन्धेन। व्याप्यव्यापकभावश्च स्वावच्छेदकत्वसम्बन्धेन। तथाच बाधविषयकज्ञानीयज्ञानवैशिष्ट्यानवच्छिन्नव्याप्तिज्ञानप्रतिबन्धकताया ज्ञानवैशिष्ट्यानवच्छिन्नसाध्यवत्ताज्ञानप्रतिबन्धकताविशिष्टत्वात् यादृशविशिष्टपदेन बाधादेर्धर्तुमशक्यत्वादेव नाव्याप्तिः। उक्ताश्रयासिद्धिघटितविशिष्टविषयकज्ञानीयव्याप्तिज्ञानप्रतिबन्धकतायाश्च पक्षज्ञानप्रतिबन्धकताविशिष्टत्वाभावादेवोक्तातिव्याप्तिः॥

अथवा यादृशविशिष्टविषयित्वाव्यापकीभूतविषयिताशून्ययादृशविशिष्टविषयकज्ञानसामान्ये ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वाभावः तादृशत्वेन सत्यन्तदलघटकयादृशविशिष्टं विशेषणीयम्। प्रतिबन्धकत्वाभावश्च स्वानवच्छेदकविषयिताशून्यत्वसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तथाच बाधादिविषयकज्ञानसामान्ये तादृशप्रतिबन्धकत्वाभावविरहादेव बाधादेर्यादृशविशिष्टपदेन धर्तुमशक्यत्वान्नाव्याप्तिः। उक्ताश्रयासिद्धिघटितविशिष्टविषयकज्ञानसामान्य एव च तादृशप्रतिबन्धकत्वाभावसत्त्वात् ज्ञानद्वयशून्यकाले नोक्तातिव्याप्तिः। अव्यापकीभूतविषयताशून्यत्वनिवेशात् ह्रदो वह्निमान् अभावादित्यादौ अभावद्भ्रदविषयकज्ञानसामान्यान्तर्गतवह्न्यभाववान् ह्रद इत्याकारकज्ञाने तादृशप्रतिबन्धकत्वाभावासत्त्वेऽपि ह्रदवृत्तिर्वह्न्यभाव इत्यादिज्ञानशून्यकालेऽभाववद्ध्रदाद्यात्मके तदानीं व्यभिचारात्मके नातिव्याप्तिः। न च तथापि जलाभाववज्जलकालीनह्रदो वह्निमान् जलादित्यादौ जलवज्जलं वह्न्यभाववत् जलवच्च जलवज्जलमिति ज्ञानद्वयशून्यकाले जलवज्जलेऽतिव्याप्तिः तादृशजलविषयकज्ञानसामान्ये निरुक्तप्रतिबन्धकत्वाभावविरहात् यादृशविशिष्टपदेन धर्तुमशक्यत्वादिति वाच्यम्। जलत्वावच्छिन्नप्रकारतानिरूपितजलवज्जलत्वावच्छिन्नविशेष्यतावच्छेदकतायाः पक्षज्ञानप्रतिबन्धकतानवच्छेदकत्वेन तादृशजलविषयकज्ञानसामान्येऽपि तादृशप्रतिबन्धकत्वाभावसत्त्वादित्याहुः॥

यादृशविशिष्टविषयितासामान्ये ज्ञानवैशिष्ट्यानवच्छिन्नप्रति-

वन्धकताविशिष्टान्यत्वं तादृशत्वेन सत्यन्तदलघटकयादृशविशिष्टस्य विशेषणान्नोक्तदोषः। प्रतिवन्धकतावैशिष्ट्यं च स्वानवच्छेदकविषयिताशून्यवृत्तित्वसम्बन्धेनेत्यपि वदन्ति । अथ यादृशज्ञानान्तरविशिष्टत्वेनेत्यत्रान्तरपदं व्यर्थम् यादृशज्ञानविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य प्रतिवन्धकत्वमित्युक्तावेव सामञ्जस्यादिति चेन्न । ज्ञानवैशिष्ट्यावच्छिन्नप्रतिवन्धकतालाभाय तदुपादानादिति ॥

केचित्तु मिश्रमते प्रामाण्यनिश्चयविशिष्टग्राह्याभावनिश्चयत्वेनैवं प्रतिवन्धकत्वम् न त्वप्रामाण्यज्ञानाभावविशिष्टग्राह्याभावनिश्चयत्वेन, तथा चायोगोलकं धूमाभाववदयोगोलकवृत्तिर्वह्निरिति ज्ञानधर्मिकप्रामाण्यनिश्चयविरहकाले साधारण्यस्य मिश्रैरप्यनङ्गीकारादयोगोलकं धूमाभाववदिति निश्चयवैशिष्ट्ये सति स्वधर्मिकप्रामाण्यनिश्चयविशिष्टो योऽयोगोलकवृत्तिर्वह्निरिति निश्चयस्तदनधिकरणत्वघटितमेव लक्षणं करणीयमित्येतादृशार्थमेव तदुपादानादित्याहुः* ॥

अथ नित्यदोषस्यापि एतल्लक्षणलक्ष्यत्वेन लक्षणघटकज्ञाने तत्तत्पुरुषीयत्वानिवेशस्यावश्यकतयाऽनन्तसंसारे कस्यापि पुरुषस्य सर्वदैव तादृशज्ञानसहिततादृशविशिष्टविषयकज्ञानसत्त्वेन तदनधिकरणमेवाप्रसिद्धमिति । न चैकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तादृशज्ञानविशिष्टान्यतादृशविशिष्टविषयकज्ञाननिरूपितविषयत्वाभाववत्त्वमेव सत्यन्तार्थो वाच्यः, अतो न तादृशलक्षणाप्रसिद्धिनिवन्धनो दोष इति वाच्यम् । कस्यापि पुरुषस्य तादृशज्ञानविशिष्टान्यधूमाभाववदयोगोलकमित्याकारकज्ञानसत्त्वेन तन्निरूपितविषयत्वाभावविरहादधूमाभाववदयोगोलकादौ सर्वदैव लक्षणासत्त्वप्रसङ्गादिति चेन्न । यादृशज्ञानान्तरविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य स्ववृत्तित्वोपलक्षितसमूहालम्बनानुमितित्वव्यापक-

---

*अवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वस्वीकारमते धूमाभाववदयोगोलकमितिज्ञानस्यापि ज्ञानान्तरनिष्ठप्रतिबन्धकतायाः अवच्छेदकत्वेनेव स्वनिष्ठनिश्चयत्वस्यापि तत्प्रतिबन्धकतावच्छेदकत्वात् एकज्ञानकालेऽतिव्याप्तिरित्यन्तरपदमुपात्तमिति ध्येयम् ॥

प्रतिबध्यतानिरूपितप्रतिबन्धकत्वं स्वसमानाधिकरणतादृशज्ञानसहिततादृशविशिष्टविषयकज्ञानानधिकरणक्षणवृत्तित्वविशिष्टतादृशविशिष्टपर्याप्तविषयताविरहवत्त्वे सति यादृशविषयितासामान्यं स्ववृत्तितादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तादृशत्वमित्यर्थकरणादेव सर्वसामञ्जस्यात्, सर्वत्र स्वपदेन ज्ञानद्वयसमानाधिकरणयत्किञ्चिदनुमितिमादाय लक्षणसमन्वयः कर्तव्य इति ध्येयम् ॥ १ ॥

यत्तु साध्याभावांशे निश्चयरूपं शेषांशे संशयसाधारणं साध्याभाववद्वृत्तित्वज्ञानं प्रतिबन्धकमिति शिरोमणिः।

अथ किमिदं साध्याभावांशे निश्चयत्वमित्याशंक्य वस्तुतस्तु ज्ञानभेदेन विषयताभेदाभ्युपगमे निश्चयीयविषयतायां संशयत्वनिरूपकविषयताभेदो न दुर्घटः तन्मते आधेयत्वविषयतानिरूपकधर्मिविषयतायां ज्ञानविशिष्टान्यत्वं निवेश्यम्। वैशिष्ट्यं च स्वनिरूपितत्व–स्वीयसाध्यप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन। विषयताभेदानभ्युपगमे च साध्याभावप्रकारतानिरूपिता या हेतुविषयतानिरूपिताधेयताप्रकारतानिरूपिताधिकरणविषयता तद्विशिष्टत्वमेव निश्चयत्वम्। वैशिष्ट्यञ्च स्वनिरूपकत्व-स्वनिष्ठावच्छेदकताकभेदवत्त्वोभयसम्बन्धेन। भेदप्रतियोगितावच्छेदकत्वं च स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वसम्बन्धावच्छिन्नं, साध्यप्रकारताविशिष्टान्यतादृशविशेष्यताशालित्वं वा। वैशिष्ट्यञ्च स्वनिरूपकज्ञानानिरूपितत्व–स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन। संशयनिश्चयविषयतयोरभेदेऽपि सामानाधिकरण्यस्याव्याप्यवृत्तितया निश्चयवृत्तितावच्छेदेन भेदसत्त्वादिति भट्टाचार्येणोक्तम्।

संशयेऽपि प्रत्येककोटिप्रकारतानिरूपितविशेष्यताद्वयस्यैव स्वीकारात् धूमतदभाववदयोगोलकवृत्तिर्वह्निरित्याकारकसाध्याभावांशे संशयत्वाभावात् संशयस्यापि संग्रहः स्यादतः प्रथमतृतीयकल्पे सम्बन्धघटकतया साध्यप्रकारतानिरूपितत्वमनिवेश्य साध्यप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वपर्यन्तनिवेशः। एवमुक्तदोषवारणायैव द्वितीयकल्पेऽपि भेदप्रतियोगितावच्छेदकतानियामकसम्बन्धे स्वनिरूपितसाध्यप्रकारताकत्वमनिवेश्य स्वावच्छेदका-

वच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वनिवेशः। अत्र प्रथमे प्रथमसम्बन्धमात्रनिवेशे स्वपदेन निश्चयमादाय द्वितीयसम्बन्धमात्रनिवेशे च स्वपदेन साध्यसंशयमादाय ज्ञानविशिष्टान्यतादृशविषयत्वाप्रसिद्धिः स्यादत उभयसम्बन्धनिवेशः। एवं द्वितीयेऽपि प्रथमसम्बन्धमात्रनिवेशे स्वपदेन संशयाकारज्ञानीयतादृशविषयतामादाय द्वितीयसम्बन्धमात्रनिवेशे च धूमाभाववत्पर्वतवृत्तिर्वह्निरिति ज्ञानीयतादृशविषयतामादाय धूमतदभाववदयोगोलकवृत्तिर्वह्निरित्याद्याकारकसंशयस्यापि निश्चयत्वापत्तिरत उभयसम्बन्धमात्रनिवेशः। एवं तृतीयेऽपि प्रथमसम्बन्धमात्रनिवेशे च स्वपदेन महानसं धूमवत् धूमाभाववदयोगोलकवृत्तिर्वह्निरितिज्ञानीयधूमप्रकारतामादाय तज्ज्ञानासंग्रहापत्तेः। द्वितीयसम्बन्धमात्रनिवेशे च स्वपदेन संशयाकारज्ञानीयसाध्यप्रकारतामादाय साध्याभावांशे सधर्मितावच्छेदककनिश्चयस्यासंग्रहापत्तिरत उभयसम्बन्धनिवेशः॥ अत्र कल्पत्रय एव साध्यप्रकारतापदेन साध्याभावीयप्रतियोगितावच्छेदकावच्छिन्नप्रकारत्वं वाच्यम्, तेन साध्याभावसाध्याभावाभावकोटिकसंशयाकारकज्ञानस्य न संग्रहः।

अत्र द्वितीयकल्पे साध्याभाववद्वृत्तिर्हेतुरित्याकारकज्ञानासंग्रहः स्यात् तज्ज्ञाने तज्ज्ञानीयतादृशाधिकरणविषयतानिरूपकत्वसत्त्वेऽपि तादृशाधिकरणविषयतानिष्ठावच्छेदकताकभेदवत्त्वाभावेन तादृशाधिकरणविषयताया अवच्छेदकाभावेन स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वस्य तादृशविषयताप्रतियोगिकसंसर्गत्वाभावादतो द्वितीयकल्पानुसरणम्। यदि च निरुक्तप्रकारताकत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वघटितोभयसम्बन्धेन तादृशविषयतावैशिष्ट्यं विवक्ष्यते, तदा तत्कल्पोऽपि साधीयानिति ध्येयम्॥

अत्र कल्पत्रय एव अयोगोलकत्वसामानाधिकरण्येन साध्यकोटिकसंशयात्मकस्यायोगोलकत्वसामानाधिकरण्येन साध्याभावावगाह्ययोगोलकं धूमधूमाभाववत् धूमाभाववदयोगोलकवृत्तिर्वह्निरित्याकारकनिश्चयस्यासंग्रहापत्तिः। प्रथमे तज्ज्ञानीयाधिकरणविषयतायां ज्ञानविशिष्टान्यत्वस्य, तृतीये साध्यप्रकारताविशिष्टान्यत्वस्य, द्वितीये चोक्तनिश्चये तादृशाधिकरणविषयतावत्त्वस्याभावादिति। यदि च प्रथमतृतीयकल्पे निरुक्तोभयसम्बन्ध एवं साध्यप्रकारत्वावच्छिन्नप्र-

तिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व-एतत्त्रितयसम्बन्धेन वैशिष्ट्यम्, द्वितीये च भेदप्रतियोगितावच्छेदकतानियामकस्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताकत्वसंसर्गघटकीभूतसाध्यप्रकारतायां स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं निवेश्य तत्संग्रहः क्रियते। तदा प्रथमतृतीयकल्पे साध्यप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वस्य द्वितीये च साध्यप्रकारतायां स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वस्य वैयर्थ्यापत्तिरिति ध्येयम् ॥ २ ॥

यद्वा साध्यतद्वतोरत्यन्तान्योन्याभावौ साध्याभावव्याप्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमय्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साधारण्यमिति शिरोमणिः ॥

साध्याभावव्याप्यादिव्यावृत्तसाध्यवत्ताज्ञानविरोधित्वं च तद्वत्तानिश्चयप्रतिबध्यतावच्छेदिका सती तद्वत्ताज्ञानप्रतिबन्धकतावच्छेदिका या प्रकारता तदाश्रयत्वम्। तदभावव्याप्यवत्ताज्ञानस्य तद्वत्तानिश्चयाप्रतिबध्यतया तद्विषयव्युदास इति भट्टाचार्येणोक्तम्॥

अथैवमपि धूमाभावव्याप्याभाववद्धूमवत्कालीनपर्वतो धूमवान्वह्नेरित्यादौ धूमाभावव्याप्यनिष्ठहेतुसामानाधिकरण्यवारणमशक्यमेव धूमाभावव्याप्यवत्ताबुद्धिम्प्रति धूमवत्तानिश्चयस्याप्रतिबन्धकत्वेऽपि धूमवत्तावच्छेदेन धूमाभावव्याप्याभाववत्तानिश्चयविशिष्टधूमवत्तानिश्चयत्वेन प्रतिबन्धकत्वस्यावश्यकतया उक्तस्थलीयसाध्यवत्तानिश्चये तत्प्रतिबन्धकतायामनपायादिति। विशिष्टसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिवेशे च उक्तस्थले धूमाभावसामानाधिकरण्याद्यसङ्ग्रहः। धूमाभाववत्ताज्ञानप्रतिबन्धकतावच्छेदककोटौ विशिष्टधूमत्वविषयत्वानिवेशात्। न च साध्यवत्तानिश्चयत्वव्यापकज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदिका सती साध्यवत्ताज्ञानत्वव्यापकप्रतिबध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबध्यतावच्छेदिका या प्रकारता तदाश्रयत्वं विवक्षणीयमतो नोक्तदोषः। द्वितीयप्रतिबन्धकतायां ज्ञानविशिष्टत्वानवच्छिन्नत्वनिवेशात् धूमव्याप्यसाध्यकस्थले धूमव्याप्याभाववद्धूमाभाववत्कालीनधूमाभावनिष्ठहेतुसामानाधिकरण्ये नातिव्याप्तिरिति वाच्यम्। एवमपि धूमाभावव्याप्याभावव्या-

व्यधूमवान् वह्नेरित्यादौ धूमाभावव्याप्यसामानाधिकरण्ये धूमव्याप्यवान् वह्नेरित्यादौ धूमव्याप्याभावव्याप्यधूमाभावसामानाधिकरण्ये चातिव्याप्तेर्दुर्वारत्वात् तद्व्याप्यवत्ताज्ञाने तद्व्याप्याभावव्याप्यतदभाववत्ताज्ञाननिरूपितप्रतिबध्यत्वप्रतिबन्धकत्वयोरुभयोरेव सत्त्वादिति चेत् ।

अत्रोच्यते–साध्यवत्ताज्ञाननिष्ठैकरूपावच्छिन्नप्रतिबन्धकत्वप्रतिबध्यत्वनिवेशादेव धूमाभावव्याप्याभावव्याप्यधूमसाध्यकस्थले साध्यवत्ताज्ञाननिरूपितयोरेकरूपावच्छिन्नप्रतिबध्यत्वप्रतिबन्धकत्वयोरवच्छेदकप्रकारताश्रयत्वनिवेशादेव च धूमव्याप्यसाध्यकस्थलेऽतिव्याप्तिवारणसम्भवात् तद्व्याप्यवत्ताज्ञाने तद्व्याप्याभावव्याप्यतदभाववत्ताज्ञाननिरूपितप्रतिबध्यत्वप्रतिबन्धकत्वयोः सत्त्वेऽपि तयोरेकरूपावच्छिन्नत्वाभावात् तदभाववत्ताज्ञानत्वमात्रस्य प्रतिबध्यतायां तद्व्याप्याभावव्याप्यवत्ताज्ञानत्वमात्रस्य च प्रतिबन्धकतायामवच्छेदकत्वादिति ध्येयम् ॥

एकरूपावच्छिन्नतादृशप्रतिबध्यताप्रतिबन्धकतावच्छेदकत्वप्रकारकत्वञ्च साध्यवत्ताज्ञानत्वव्यापकप्रतिबध्यताविशिष्टप्रकारकत्वम् । वैशिष्ट्यञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकत्व–स्वविशिष्टप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन । स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नप्रतिबन्धकतानिरूपितत्व–स्वनिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेनेति नव्याः ॥ ३ ॥

अथ घटाभावादेरपि वह्न्यभावत्वादिना ज्ञानस्य वह्निमत्ताज्ञानविरोधित्वात् घटाभावादिसामानाधिकरण्यमपि वह्न्यादिसाध्यके व्यभिचारः स्यात् । साध्यवत्ताज्ञानविरोधितावच्छेदकीभूतविषयतानिरूपितहेतुसामानाधिकरण्याभावविषयताशालिग्रहविरोधितानिवेशे चासम्भवः । धर्मितावच्छेदकावच्छिन्नविषयतानिरूपितसाध्याभावप्रकारताया एव साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकतया साध्याभावो न हेतुसमानाधिकरण इति ज्ञानीयसाध्याभावविषयताया अतथात्वादिति भट्टाचार्येणोक्तम् ।

अत्रेयमाशङ्का—अथ सर्वत्रैव साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतानिरूपितहेत्वसामानाधिकरण्यविषयताशालिहेत्वसमानाधिकरणसाध्याभाववान्पक्ष इति स्वरूपग्रहविरोधितामादायैव व्य-

भिचारे लक्षणसमन्वयात् कथमसम्भव इति चेत् ।

अत्राहुः—उक्तज्ञानीयपक्षविशेष्यतानिरूपितसाध्याभावप्रकारताया एव साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकतया तादृशप्रकारतानिरूपितत्वस्य उक्तज्ञानीयहेत्वसामानाधिकरण्यविषयतायामसत्त्वेन उक्तज्ञानमादायापि लक्षणसमन्वयो दुरुपपाद इति । साध्याभाववविशेष्यताया एव उक्तज्ञानीयहेत्वसामानाधिकरण्यविषयतानिरूपकत्वात्; स्वमते समानाधिकरणप्रकारताविशेष्यतयोर्भेदात् ।

वस्तुतस्तु समानाधिकरणप्रकारताविशेष्यतयोरैक्येऽपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतानिरूपितहेत्वसामानाधिकरण्यविषयताशाली यो वह्न्यसमानाधिकरणघटाभावधूमाभाववानित्याकारकघटाभावधर्मिकहेत्वसामानाधिकरण्यावगाहिघटाभावत्ववह्न्यसामानाधिकरण्यधूमाभावत्वैतत्त्रितयधर्मावच्छिन्नप्रकारताशालिग्रहस्तद्विरोधिनि वह्निसमानाधिकरणघटाभावे, एवं वह्निमान्धूमादित्यादौ सद्धेतौ साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतानिरूपितहेत्वसामानाधिकरण्यविषयताशालिधूमासमानाधिकरणवह्न्यभाववान् पर्वत इत्याकारकग्रहाविरोधिधूमासमानाधिकरणवह्न्यभावाभाववत्पर्वतादौ चातिव्याप्तिरतस्तद्वारणाय साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतानिरूपितहेत्वसामानाधिकरण्यविषयतायामवच्छेदकतानात्मकत्वमवश्यं निवेशनीयम् । एवञ्चोक्तज्ञानमादाय लक्षणसमन्वयो दुर्घट इति । एतेन—प्रकारताविशेष्यतयोर्भेदेऽपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नविषयतानिरूपितहेत्वसामानाधिकरणविषयताशालिग्रहविरोधितानिवेशेनैवासम्भववारणं संभवतीति—इत्यपि प्रत्युक्तम् । प्रकारताविशेष्यतयोर्भेदेऽपि उक्ताविव्याप्तिवारकप्रकारस्यानुसरणीयतयाऽसंभववारणस्यासम्भवादिति ।

न च साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकमुख्यविशेष्यतानिरूपितहेत्वसामानाधिकरण्यविषयताशालिग्रहाविरोधितानिवेशे उक्तप्रकाराविवक्षणेऽप्युक्तातिव्याप्तिवारणं सम्भवति सर्वत्र व्यभिचारे च हेत्वसमानाधिकरणः साध्याभावः पक्षवृत्तिरित्याकारकज्ञानमादायैव लक्षणं सङ्गमनीयमिति वाच्यम् । तथासति हेत्वसमानाधिकरणघटाभावः साध्याभाववानित्याकारकज्ञानविरोधितामा-

दायैव हेतुसमानाधिकरणघटाभावादावतिव्याप्तथापत्तेः।

यद्यप्येवमपि एकत्र द्वयमिति रीत्या साध्याभावधर्मिकपक्षवृत्तित्वहेत्वसामानाधिकरण्योभयावगाहिज्ञानस्य साध्यवत्ताज्ञानविरोधितावच्छेदकीभूतसाध्याभावविषयितानिरूपितावच्छेदकतानात्मकहेत्वसामानाधिकरण्यविषयतामादायैव सर्वत्र लक्षणसमन्वयसम्भवः, तथापि एकत्र द्वयमिति रीत्या घटाभावधर्मिकसाध्याभावहेत्वसामानाधिकरण्योभयावगाहिज्ञानीयसाध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकघटाभावविषयतानिरूपितहेत्वसामानाधिकरण्यविषयतामादाय घटाभावनिष्ठवह्निसामानाधिकरण्ये धूमधर्मिकधूमाभाववह्न्यसामानाधिकरण्योभयावगाहिज्ञानीयसाध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकधूमविषयतानिरूपितहेत्वसामानाधिकरण्यविषयतामादाय वह्निसामानाधिकरण्यवद्धूमे चातिव्याप्तिवारणाय साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतापदेन प्रकारताया विवक्षितत्वादसम्भवसङ्गतिः।

अथैवमपि गुणत्वसामानाधिकरण्यसाध्यकगुणत्वहेतुकस्थले गुणत्वसामानाधिकरण्याभावो न गुणत्वसमानाधिकरण इति ज्ञानीयसाध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूतगुणत्वसामानाधिकरण्याभावप्रकारतानिरूपितगुणत्वसामानाधिकरण्याभावविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदके गुणत्वसामानाधिकरण्यवद्गुणत्वसामानाधिकरण्याभावे लक्षणगमनादसम्भवदानासङ्गतिरिति चेन्न।

धूमाभाववान् वह्नेरित्यादौ साध्यवत्ताज्ञानविरोधितावच्छेदकीभूतधूमाभावाभावत्वावच्छिन्नप्रकारतानिरूपितवह्निसामानाधिकरण्याभावत्वावच्छिन्नविषयिताशालिवह्निसामानाधिकरण्याभावो धूमाभावाभाववान् इत्याकारकज्ञानविरोधिधूमाभाववद्वह्निसामानाधिकरण्याभावेऽतिव्याप्तिवारणाय साध्यवत्ताज्ञानविरोधितावच्छेदकप्रकारतानिरूपितहेत्वसामानाधिकरण्यविषयतायां साध्यवत्ताज्ञानप्रतिबन्धकतानवच्छेदकत्वस्यापि निवेशनीयतयोक्तस्थले लक्षणगमनासम्भवादिति दिक्।

यत्तु एकत्र द्वयमिति रीत्या ज्ञानमादाय प्रागुक्तातिव्याप्तिवारणाय साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतायां हेत्वसामा-

नाधिकरण्यप्रकारत्वान्यप्रकारत्वानिरूपितत्वं निवेशनीयम्, धूमाभाववान् वह्नेरित्यत्र प्रागुक्तातिव्याप्तिस्तु हेत्वसामानाधिकरण्यविषयतापदेन प्रकारताविवक्षयैव वारणीयेति ।

तत्तुच्छम्—तथासति तादृशगुणत्वसामानाधिकरण्यसाध्यकस्थले साध्यवत्ताज्ञानविरोधितावच्छेदकविषयतानिरूपितहेत्वसामानाधिकरण्यप्रकारताशालिरूपत्वं गुणत्वसामानाधिकरण्याभाववदित्याकारकज्ञानविरोधिगुणत्वसामानाधिकरण्यवद्रूपत्वेऽतिव्याप्तितादवस्थ्यादिति ध्येयम् ॥

केचित्तु प्रकारताविशेष्यतयोर्नानात्वमत एवाग्रे ग्रन्थः, तथाच प्रागुक्तातिव्याप्तीनां वारणाय साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतानिरूपितहेत्वसामानाधिकरण्यविषयतापदेन साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकप्रकारतानिरूपितहेत्वसामानाधिकरण्यप्रकारताया विवक्षणीयतया प्रकारतानिरूपितप्रकारत्वाप्रसिद्ध्यैवासम्भवसङ्गतिरित्याहुः । तच्चिन्त्यम् ॥ ४ ॥

अथ घटाभावादेरित्यादिना फक्किकामवतार्य इति चेन्न फलीभूतज्ञानधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वेन साध्यवत्ताज्ञानप्रतिबन्धकता तद्रूपावच्छिन्नांशे हेतुसामानाधिकरण्याभावग्रहविरोधितानिवेशेनातिप्रसङ्गाभावात् साध्याभावत्वादेरेव तादृशत्वादित्यनेन सिद्धान्तितं भट्टाचार्येण ।

अथात्र घटाभावत्वधूमाभावत्वोभयावच्छिन्नघटाभावात्मकधूमाभाववानिति ज्ञानीयप्रकारतायास्तादृशत्वेन तदुभयावच्छिन्नविशेष्यकधूमासामानाधिकरण्यग्रहप्रतिबन्धकतावच्छेदकविषयिताके धूमसमानाधिकरणघटाभावेऽतिव्याप्तिर्दुर्वारैव । न च साध्यवत्ताज्ञानप्रतिबन्धकतानवच्छेदकविषयिताशून्यज्ञानीयत्वस्य यद्रूपावच्छिन्नप्रकारतायां विशेषणादेव नोक्तातिव्याप्तिः घटाभावत्वावच्छिन्नविषयितायास्तादृशप्रतिबन्धकतानवच्छेदकतया तच्छून्यत्वाभावादिति वाच्यम् । तथासत्यसम्भवापत्तेः—सर्वत्रैव निरवच्छिन्नविशेष्यतायाः सामानाधिकरण्यसम्बन्धावच्छिन्नपारतन्त्रीयविषयतायाश्च तादृशत्वात्तच्छून्यत्वाभावादिति चेन्न ।

यत्किञ्चित्प्रतिबन्धकतावच्छेदकत्वस्य तादृशप्रतिबन्धकतानवच्छेदकविषयतायां विवक्षणान्नोक्तदोष इत्याहुः ॥

वस्तुतस्तु स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतावच्छेदकं यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारत्वं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वेन यद्रूपं विशेषणीयम्, तथाच धूमाभाववत्त्वादेर्निरुक्तविशेषणाक्रान्तत्वेन तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य निरुक्तोभयधर्मेऽसत्त्वेन तमादायातिव्याप्त्यनवकाशात् इति ध्येयम् ॥

साध्यवत्ताज्ञानधर्मितावच्छेदका ये ये धर्मा इत्यस्यानुगमः—साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वव्यापकं यत् प्रकारत्वं तदवच्छेदकावच्छिन्नविशेष्यतानिरूपितहेत्वसामानाधिकरण्यप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयताकरूपवत्त्वं तत्त्वम् । प्रकारतायां तादृशावच्छेदकत्वव्यापकत्वं च स्वविशिष्टविशेष्यतावच्छेदकत्वसम्बन्धेन । स्वं—प्रकारता । विशेष्यतायां स्ववैशिष्ट्यं च स्वावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वसम्बन्धेन । स्वं—प्रकारता । विशेष्यतायां प्रतिबन्धकतावत्त्वं च स्वावच्छेदकत्व—स्वविशिष्टप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन । स्वं—प्रतिबन्धकता । प्रतिबध्यतायां स्ववैशिष्ट्यं च स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व—स्वनिरूपिततादृशप्रतिबध्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतिबन्धकतानिरूपितत्वोभयसम्बन्धेन । स्वं—प्रतिबन्धकता । रूपवत्त्वं च उभयत्रैव स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । प्रतिबध्यतायां विशेष्यतावैशिष्ट्यं च व्यापकत्वसम्बन्धेन । स्वं—विशेष्यता । साध्यतावच्छेदकसमनियतानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नविधेयतानिरूपितउद्देश्यतावच्छेदकत्वेन साध्यवत्ताज्ञानधर्मितावच्छेदकं विशेषणीयम्, नातः साध्यादेरपि तदवच्छेदकत्वाद्व्यापकत्वहानिरिति ध्येयम् । व्यावृत्तिः स्वयमूह्या ॥ ५ ॥

साध्यवत्ताज्ञानविरोधितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयतानिरूपितहेत्वसामानाधिकरण्यविषयतायां धर्मितावच्छेदकता-

भिन्नत्वमुपलक्षणविधया निवेश्यम्, धूमासमानाधिकरणवह्न्यभा-
ो न घटसमानाधिकरण इति ज्ञानविरोधिनि धूमासमानाधिकरण-
ह्न्यभावादौ घटादिसामानाधिकरण्ये नातिप्रसङ्ग इति भट्टाचा-
र्णोक्तम् ॥

अथ धर्मितावच्छेदकभिन्नत्वेन हेत्वसामानाधिकरण्यविषयता-
ा विशेषणीयत्वेऽपि साध्यवत्ताज्ञानविरोधितावच्छेदकधर्मावच्छि-
ावविषयतानिरूपिततादृशहेत्वसामानाधिकरण्यविषयताशाली यो
धूमासमानाधिकरणवह्न्यभाववान् पर्वत इत्याकारकग्रहः, तथा एकत्र
द्वयमिति रीत्या वह्न्यभावधर्मिकधूमासामानाधिकरण्यजलासामाना-
धिकरण्य-उभयावगाहिग्रहश्च तद्विरोधिनि धूमासमानाधिकरण-
वह्न्यभावाभाववत्पर्वते धूमासामानाधिकरण्यजलासामानाधिकर-
ण्योभयाभाववद्वह्न्यभावे चातिव्याप्तिरिति चेन्न।

हेत्वसामानाधिकरण्यप्रकारत्वान्यप्रकारत्वानिरूपितसाध्यवत्ता-
ज्ञानविरोधितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नमुख्यविशेष्यतानि-
रूपितहेत्वसामानाधिकरण्यविषयतानिवेशेनैवोक्तातिव्याप्तिवारण-
सम्भवादिति ध्येयम् ॥

न चैवं हेत्वसामानाधिकरण्यविषयतायामुक्तविशेषणान्यनिवे-
श्य साध्यवत्ताज्ञानविरोधितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्न-
विशेष्यकहेत्वसामानाधिकरण्यग्रहत्वव्यापकप्रतिबध्यतां निवेश्यो-
क्तातिव्याप्तिवारणमेवोचितं लाघवादिति वाच्यम्। तथासति
धूमवान् धूमाभावव्याप्यासमानाधिकरणवह्नेरित्यादौ धूमाभाव-
व्याप्यसमानाधिकरणवह्न्यात्मकसाधनाप्रसिद्धावतिव्याप्त्यापत्तेः।
तद्वारणाय साधनग्रहाविरोधित्वनिवेशे लाघवानवकाशात्।
एतच्च-अत एव साधनाप्रसिद्धावपि नातिप्रसङ्ग इति-स्वयमेवोक्त-
मिति ध्येयम् ॥ ६ ॥

साध्याभावव्याप्यसाध्याभावावच्छेदकादिसामानाधिकरण्यवा-
रणाय दर्शितप्रकारापेक्षया लघुप्रकारान्तरमाह-साध्यवत्ताज्ञानवि-
रोधिनि हेत्वसामानाधिकरण्यग्रहविरोधिहेत्वाभासतावच्छेदकरूप-
वत्त्वं वेति। अत्र हेत्वाभासत्वं प्रकृतानुमितिजनकज्ञानविरोधित्वम्।
अनुमितिजनकज्ञानस्यापि अनुमितिजनकतावच्छेदककोटिप्रविष्टवि-
षयत्वावच्छिन्नत्वेन निवेशः, न तु विशिष्टपक्षे व्याप्तिविशिष्ट-

वैशिष्ट्यावगाहित्वेन, तथासति अन्योन्याभावघटितनानाविधव्याप्तीनामननुगमेन तादृशनानाविधव्यभिचारासंग्रहात् । तावद्व्याप्त्यवगाहिसमूहालंबनानुमितिनिवेशेन तत्सङ्ग्रहसम्भवेऽपि पक्षधर्मत्वावगाहितायाः प्रयोजनविरहेणानिवेशप्रसङ्गेन तादृशाभावग्रहविरोधिताविशेषणवैयर्थ्याच्चेति भट्टाचार्येणोक्तम् ॥

अथ व्याप्तिग्रहविरोधित्वरूपहेत्वाभासत्वानिवेशेऽपि काञ्चनमयधूमवान् काञ्चनमयवह्नेरित्यादौ साध्यसाधनाप्रसिद्धिवारणायैव तादृशाभावग्रहविरोधितानिवेशसार्थक्यसम्भवेन कथं तद्वैयर्थ्यमुक्तमिति । न च साध्यसाधनग्रहाविरोधित्वनिवेशनापि तद्वारणसम्भव इति वाच्यम् । तथासति भवन्मतेऽपि हेतुमत्ताग्रहविरोधित्वनिवेशेनैव पक्षधर्मताज्ञानविरोधिस्वरूपासिद्धिवारणसम्भवेन तद्वैयर्थ्यस्य दुर्वारत्वादिति । न चास्मन्मते ह्रदो धूमवान् वह्नेरित्यादौ धूमव्याप्याभाववद्ध्रदादावतिव्याप्तिवारणायैव तत्सार्थक्यमिति वाच्यम् । अनुमितिजनकतावच्छेदकीभूतमुख्यविशेष्यत्वानवच्छिन्नप्रतिबध्यतानिवेशनापि तद्वारणसम्भवात् । न च विरोधिवारणायैव तदिति वाच्यम् । साध्यसामानाधिकरण्यग्रहाविरोधत्वनिवेशेनापि तद्वारणसम्भवात् । न चाव्यभिचरितसाध्यसामानाधिकरण्याभाववद्धेतावतिव्याप्तिवारणायैव तत्सार्थक्यमिति वाच्यम् । तस्याप्युक्तनिवेशेनैव वारणसंभवादिति चेत् ।

अत्राहुः—तादृशाभावग्रहविरोधित्वदलनिवेशेऽपि साध्यग्रहाविरोधित्वं निवेशनीयम्, अन्यथा वह्न्यसमानाधिकरणधूमाभावव्याप्यकालीनधूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणधूमाभावव्याप्यात्मकसाध्याप्रसिद्धावतिव्याप्तेर्दुर्वारत्वादिति । एवं च साध्याप्रसिद्धिवारणाय न तत्सार्थक्यम् । साधनाप्रसिद्धिस्तु तादृशाभावग्रहविरोधितापेक्षया लघुरूपसाधनग्रहाविरोधित्वविशेषणेनैव वारणीयेत्यभिप्रायेण तद्वैयर्थ्याभिधानमिति ध्येयम् ॥

वस्तुतस्तु किञ्चिद्धर्मिकहेत्वसामानाधिकरण्यग्रहविरोधित्वनिवेशेनैव साधनाप्रसिद्ध्यादेर्वारणसम्भवात् साध्यवत्त्वज्ञानविरोधिधर्मिकतादृशाभावग्रहविरोधित्वपर्यन्तनिवेशो व्यर्थ इत्यत्रैव तात्पर्यम् । अत एव वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वाभाववदवृत्तित्वरूपव्याप्तिज्ञानविरोधिनि अभावाप्रतियोगित्वरूपानुपसंहारिणि ग-

गनसाध्यके तादात्म्येन हेतौ गगनाभावन्तत्तादात्म्यरूपव्याप्तिज्ञानविरोधिनि अभावाप्रतियोगितादात्म्यरूपव्याप्यत्वासिद्धौ धूमवान्वह्नेरित्यादौ धूमाभाववदवृत्तित्वव्यापकवह्निभेदाभाववद्वह्नौ चातिव्याप्तिवारणायैव तत्सार्थक्यसम्भवेन वैयर्थ्याभिधानमसङ्गतमित्यपि परास्तम्। न चैवं धूमाभाववदवृत्तित्वव्यापकवह्निसमानाधिकरणतद्वह्निभेदाभाववद्वह्न्यादावतिव्याप्तिवारणायैव तत्सार्थक्यम् उक्तविशिष्टस्य किञ्चिद्धर्मिकहेत्वसामानाधिकरण्यग्रहं प्रत्यपि विरोधित्वादिति वाच्यम् । किञ्चिद्धर्मिकहेत्वसामानाधिकरण्यग्रहत्वावच्छिन्ननिरूपितयद्रूपावच्छिन्नप्रतिबन्धकत्वं व्याप्तिग्रहत्वावच्छिन्ननिरूपितं तद्रूपावच्छिन्नप्रतिबन्धकतानिवेशेनैवोक्तातिव्याप्तिवारणसम्भवात् । वाच्यत्वत्ववान् वाच्यत्वादित्यादौ वाच्यत्वत्वाभाववदवृत्तित्वव्यापकवाच्यत्वसमानाधिकरणवाच्यत्वाभावाभाववद्वाच्यत्वादावतिव्याप्तिवारणाय सत्यन्तदलनिवेशोऽपि सत्यन्तविशेष्यदलघटकप्रतिबन्धकत्वयोरेकरूपावच्छिन्नत्वनिवेशस्य भवतोऽप्यावश्यकत्वात् ॥

अथैवमप्यनुमितिजनकज्ञानविरोधित्वरूपहेत्वाभासत्वनिवेशेऽपि किञ्चिद्धर्मिकहेत्वसामानाधिकरण्यग्रहविरोधित्वविवक्षणेनैव स्वरूपासिद्ध्यादेर्वारणसम्भवात्तवापि तद्वैयर्थ्यं दुर्वारमेव, काञ्चनमयह्रदो वह्निमान् ह्रदत्वादित्यादौ ह्रदत्वसमानाधिकरणकाञ्चनमयत्वाभावादेरपि ग्रंथकारोक्तपक्षग्रहाविरोधित्वदलेनैव वारणसम्भवादिति चेन्न।

ह्रदो वह्निमान् ह्रदत्वादित्यादौ वह्निव्याप्याभावधर्मिकहेत्वसामानाधिकरण्यग्रहविरोधिनि ह्रदत्वसमानाधिकरणवह्निव्याप्याभावादावतिव्याप्तिवारणायैव स्वमते तत्सार्थक्यसम्भवादिति ध्येयम् ॥

अथ पूर्वकल्पापेक्षया लाघवानुसन्धानेनैवैतत्कल्पस्यानुसरणं भट्टाचार्येण कृतं, तन्न सङ्गच्छते—पूर्वकल्पे साध्याभावव्याप्यादिसामानाधिकरण्यवारकस्य साध्यवत्ताज्ञानप्रतिबध्यतावच्छेदकत्वदलस्य प्रकृतानुमितिजनकतावच्छेदकविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वरूपहेत्वाभासतावच्छेदकत्वविशेषणापेक्षयैव लघुत्वादिति चेत् ।

अत्राहुः-पूर्वकल्पे काञ्चनमयधूमवान्वह्नेरित्यादौ साध्यवत्ताज्ञा-

नविरोधिकाञ्चनमयत्वाभावादौ हेतुसामानाधिकरण्यवारणाय साध्यवत्ताज्ञानधर्मितावच्छेदका ये ये धर्मास्तत्तद्धर्मावच्छिन्नविशेष्यकसाध्यवत्ताविरोधित्वस्य निवेशिततया तदपेक्षया एतत्कल्पस्य लघुत्वमेव । एतत्कल्पे काञ्चनमयत्वाभावसामानाधिकरण्यादेः हेत्वाभासतावच्छेदकत्वदलेनैव वारणात् । न च ह्रदो वह्निमान् ह्रदत्वादित्यत्र वह्निव्याप्याभावादेरपि समूहालम्बनसाध्यवत्ताज्ञानविरोधित्वात्तन्निष्ठहेत्वसामानाधिकरण्यग्रहवारणायाऽत्रापि पूर्वोक्तविरोधित्वमेव विवक्षणीयमिति क्व लाघवमिति वाच्यम् । एतत्कल्पेऽपि किञ्चिद्धर्मावच्छिन्नविशेष्यकसाध्यवत्ताग्रहत्वव्यापकप्रतिबन्धकतानिवेशेनैव वह्निव्याप्यादेर्वारणसम्भवादिति ॥

अथैवं पूर्वकल्पेऽपि प्रकृतसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकत्वनिवेशेनैव काञ्चनमयधूमत्वावच्छिन्नप्रकारताया अपि धूमत्वावच्छिन्नप्रकारतात्वेन धूमाभाववत्तानिश्चयप्रतिबध्यतावच्छेदकतया धूमाभावे हेतुसामानाधिकरण्यसङ्ग्रहसम्भवेन साध्यवत्ताज्ञानधर्मितावच्छेदका ये ये धर्मा इत्यादिगुरुतरनिवेशो विफल इति । न च काञ्चनमयधूमत्वावच्छिन्नप्रकारतायाः काञ्चनमयत्वप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यतात्वेन काञ्चनमयत्वाभाववत्ताज्ञानस्यापि प्रतिबध्यतावच्छेदकतया काञ्चनमयत्वाभावादिवारणमशक्यमिति वाच्यम् । प्रकारताविशेष्यतयोरभेदेऽपि प्रकारतात्वेन प्रकारत्वावच्छिन्नत्वस्य साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वस्य वा प्रतिबध्यताविशेषणत्वेनैव तद्वारणात् । यद्यपि साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिनो वह्निमत्पर्वतवान् देशः वह्निमत्पर्वतो देशवृत्तिरित्याकारकस्य एकत्र द्वयमिति रीत्या वह्निघटवान् पर्वत इत्याकारकस्य च ज्ञानस्य विरोधिनि वह्निमत्पर्वताभावादौ वह्निघटोभयाभावादौ च हेतुसामानाधिकरण्येऽतिव्याप्तिः । तथापि धर्मितावच्छेदकताभिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितमुख्यविशेष्यत्वावच्छिन्नत्वस्य प्रतिबध्यताविशेषणत्वेनैव तद्वारणसम्भवः ॥

अथवा पूर्वकल्पेऽपि किञ्चिद्धर्मावच्छिन्नविशेष्यकसाध्यवत्त्वग्रहत्वव्यापकप्रतिबध्यत्वमेव निवेशनीयम् । काञ्चनमयत्वाभावा-

देर्वारणाय पुनः प्रतिवध्यतायां साध्यग्रहत्वाव्यापकत्वं निवेशनीय-मिति पूर्वकल्पस्यैव लघुत्वम्। न च गगनवान् गगनत्वादित्यादौ कि-ञ्चिद्धर्मिकसाध्यवत्ताज्ञानसामान्यविरोधि-अवृत्तित्वधर्मिकहेत्वसा-मानाधिकरण्यग्रहविरोधिनि अवृत्तित्वनिष्ठगगनत्वसामानाधिकर-ण्येऽतिव्याप्तिरिति वाच्यम्। द्वितीयकल्पे गगनत्वसमानाधिकरणा-वृत्तित्वे हेत्वाभासतावच्छेदकत्वसत्त्वेनातिव्याप्तिवारणाय सा-ध्यवत्ताग्रहविरोधित्वेनैव, प्रथमकल्पेऽपि किञ्चिद्धर्मिकसाध्यवत्ता-ज्ञानत्वव्यापकप्रतिवध्यतायां साध्यवत्ताग्रहत्वाव्यापकत्वविशेषणे-नैव तद्वारणसम्भवादिति चेत्।

अत्रोच्यते—गगनत्वहेतुकस्थले किञ्चिद्धर्मिकसाध्यवत्ताज्ञानसा-मान्यविरोधिसाध्यवत्ताज्ञानसामान्याविरोधि यत्पर्वतावृत्तित्वं त-द्धर्मिकहेत्वसामानाधिकरण्यग्रहविरोधिनि गगनत्वसमानाधिकर-णपर्वतावृत्तित्वेऽतिव्याप्तिरतस्तद्वारणाय साध्यवत्ताज्ञानधर्मिता-वच्छेदका ये ये धर्मास्तत्तद्धर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञान-सामान्यविरोधित्वस्य पूर्वकल्पे निवेशावश्यकत्वेन पूर्वकल्पस्य गु-रुत्वमक्षतमेव। द्वितीयकल्पे च हेत्वाभासतावच्छेदकत्वदलेनैवोक्ता-तिव्याप्तिवारणसम्भवात् इति ध्येयम्॥ ७॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
साधारणक्रोडपत्रम्॥

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (चतुर्दशम्)

# असाधारणक्रोडपत्रम् ।

श्रीगणेशायनमः ॥

सर्वसपक्षव्यावृत्तत्वमसाधारणत्वमिति मूलम् ॥ सर्वसपक्षेति । सपक्षः साध्यवान्, पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमिति शिरोमणिः । यद्यप्येवं सव्यभिचारसामान्यलक्षणस्य यद्यद्धर्मिवृत्तित्वमित्यादिना बाधादिसाधारण्यवारणप्रकारो न सम्भवति पक्षवृत्तित्वघटितासाधारण्यस्यापि धर्मिविशेषनियन्त्रितत्वात् तादृशरीत्या आदरे निरुक्तासाधारण्यस्यैवासङ्ग्रहापत्तेः । तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिप्रकृतहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञाननिरूपिता या निरुक्तासाधारण्यविषयकत्वानवच्छिन्नप्रतिबन्धकता तच्छून्यत्वे सति समूहालम्बनानुमितिविरोधित्वस्य बाधप्रतिरोधव्यावृत्तस्य निरुक्तासाधारण्यसाधारणस्य सव्यभिचारसामान्यलक्षणत्वसम्भवादिति भट्टाचार्येणोक्तम् ॥

अत्रेदमवधेयम् । अथ पक्षवृत्तित्वघटितासाधारण्यस्य धर्मिविशेषनियन्त्रितत्वेपि साध्यव्यापकीभूताभावप्रतियोगित्वांशमादायैव यद्यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रानुमितिविरोधित्वमक्षतमेवेति कथमुक्तं तादृशरीत्या आदरे निरुक्तासाधारण्यासङ्ग्रह इति चेत् ।

अत्राहुः—पक्षवृत्तित्वघटितासाधारण्यस्यापि धर्मिविशेषनियन्त्रितत्वेत्यनेन यद्यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रानुमितिविरोधित्वाभावेन निरुक्तासाधारण्यासङ्ग्रह इति नाभिहितम्, किन्तु मेयत्वविशिष्टासाधारण्यवारकविशिष्टान्तराघटितत्वविरहादेव तदसंग्रह इत्यभिहितम् । यद्यद्धर्मिवृत्तित्वमिति लक्षणाक्रान्तं यत्साध्यव्यापकीभूताभावप्रतियोगित्वरूपं विशिष्टान्तरं निरुक्तासाधारण्यस्य तदघटितत्वमक्षतमेवेति । न च विशिष्टान्तराघटितत्वशरीरे एवं यद्यद्धर्मिवृत्तित्वमित्याद्यनिवेश्य प्रकृतपक्षप्रकृतसाध्यावगाहिज्ञाननिरूपितासाधारण्यविषयकत्वानवच्छिन्नप्रतिबन्धकताशून्यत्वे सति अनुमितिविरोधित्वमेव निवेश्यमतः साध्यव्यापकीभू-

ताभावप्रतियोगित्वमात्रस्य तादृशविशिष्टान्तरत्वाभावादेवोक्तासाधारण्यासङ्ग्रह इति वाच्यम्। तथासति मेयत्वविशिष्टसाध्यव्यापकीभूताभावप्रतियोगित्वादावतिप्रसङ्गापातात् यद्यद्धर्मिवृत्तित्वमित्यादिदलस्य निरुक्तविशिष्टान्तराघटितत्वद्दलस्य च तत्र सत्त्वादिति सुधीभिर्विभावनीयम्॥

## असाधारणस्य पत्रिकान्तरम्॥

॥ श्रीः॥

पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमिति शिरोमणिः। यद्यपि सव्यभिचारसामान्यलक्षणस्य यद्यद्धर्मिवृत्तित्वमित्यादिना बाधादिसाधारण्यप्रकारो न सम्भवति पक्षवृत्तित्वघटितासाधारण्यस्यापि धर्मिविशेषनियन्त्रितत्वात् तादृशरीत्या आदरे सङ्ग्रहापत्तेः। तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञाननिरूपिता याऽसाधारण्यविषयकत्वानवच्छिन्नप्रतिबन्धकता तच्छून्यत्वे सति समूहालम्बनानुमितिविरोधित्वस्य बाधप्रतिरोधव्यावृत्तस्य निरुक्तासाधारण्यसाधारणस्य सव्यभिचारसामान्यलक्षणत्वसम्भवादिति भट्टाः॥

अत्रेयमनुपपत्तिः—नन्वत्र हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनिवेशनमफलं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वनिवेशेनैव सर्वसामञ्जस्यात्। न च स्वरूपासिद्ध्यादावतिव्याप्तिः, प्रकृतसाध्यवैशिष्ट्यावगाहिज्ञाननिरूपिता या बाधादिप्रतिबन्धकता तच्छून्यत्वे सति समूहालम्बनानुमितिविरोधित्वस्य सत्त्वादिति वाच्यम्। समूहालम्बनानुमितिपदस्य पक्षे साध्यवैशिष्ट्यावगाहितद्व्याप्यहेत्ववगाह्यनुमितिपरत्वात्। न च वह्निमान् काञ्चनमयधूमादित्यादिस्थलीयहेत्वसिद्ध्यादावतिव्याप्तिरिति वाच्यम्। पक्षे साध्यवैशिष्ट्यावगाहिहेतुतावच्छेदकावगाहिज्ञाननिरूपितत्वस्य प्रतिबन्धकतायां विशेषणत्वेनैवतद्दोषस्यापि वारणात्-हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनिवेशनमफलमिति चेन्न।

आचार्यमते एतल्लक्षणकरणात् स्वरूपासिद्धिवारणाय तन्निवेशसार्थक्यमिति ध्येयम्॥

नव्यास्तु हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वानिवेशे हृद-

पक्षकवह्निसाध्यकगगनहेतुकस्थलेऽवृत्तिगगने*ऽतिव्याप्तिः । गगनसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वघटितव्याप्तिग्रहविरोधित्वात् गगनप्रकारकबुद्धौ तस्य विरोधित्वादिति । न च विरोधेऽतिव्याप्तिवारणाय साध्यसामानाधिकरण्यग्रहाविरोधित्वस्यावश्यं निवेश्यतया तद्वारणाद्धेतुवैशिष्ट्यावगाहित्वनिवेशनं व्यर्थमिति वाच्यम् । व्याप्तौ साध्यसामानाधिकरण्यस्य प्रयोजनविरहेणानिवेश्यतया विरोधातिव्याप्तिवारणाय साध्यसामानाधिकरण्यग्रहाविरोधित्वविशेषणस्यानावश्यकतया तद्विशेषणसार्थक्यादिति ध्येयम् ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं
असाधारणक्रोडपत्रम् ।

---

*साधारणग्रन्थे साधननिष्ठावृत्तित्वस्य स्वरूपासिद्धिप्रभेदस्येति भट्टाचार्येणोक्तम् ॥

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं (पञ्चदशम्)

# सत्प्रतिपक्षक्रोडपत्रम् ।

श्रीगणेशायनमः ॥

साध्यविरोध्युपस्थापनसमर्थसमानवलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गकत्वमिति मूलम् ॥

॥ वन्हिव्याप्याभावादिसाध्यकस्थले वन्ह्यादिसाध्यकानुमितिजननयोग्यया वन्ह्यादिव्याप्यवत्पक्षोपस्थित्या बाधनिश्चयरूपया कार्यप्रतिरोधदशायामतिव्याप्तिवारणाय साध्यवत्ताज्ञानविरोधित्वं प्रथमोपस्थितिविशेषणम् । वह्निव्याप्यवत्पक्षोपस्थितेरपि साध्यवत्ताज्ञानप्रतिबन्धिकां वह्निव्याप्यवत्पक्षविषयकसमूहालम्बनरूपवह्निमत्पक्षविषयानुमितिं प्रति स्वरूपयोग्यतया यथाश्रुतउक्तातिप्रसङ्गदुर्वारतया साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठकार्यतानिरूपितकारणताश्रयत्वपर्य्यन्तं समर्थान्तेन विवक्षणीयमिति भट्टाचार्येणोक्तम् ॥

( अथात्र वह्निव्याप्याभावाभाववत्वह्निमत्कालीनपर्वतो वह्निव्याप्याभाववानित्यादौ व्यावर्तकधर्मदर्शनाविधया साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदिका या तादृशपर्वतत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नप्रकारता तदवच्छिन्नानुमितिनिष्ठकार्यतानिरूपितकारणताश्रयीभूतं यत्तादृशपर्वतो वह्निव्याप्यवानिति बाधज्ञानं तद्दशायामतिव्याप्तिः-उक्तस्थले साध्यवत्ताज्ञानं प्रति तादृशपर्वतधर्मिकवह्निमत्ताज्ञानत्वेनैव प्रतिबन्धकतया प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेऽप्यप्रतीकारात् । गगनाभाववदभाववत्कालीनगगनसाध्यकस्थले तादृशगगनाभावव्याप्यवत्तापरामर्शदशायामव्याप्त्यापत्तेश्च तादृशगगनाभावनिश्चयस्य ज्ञानवैशिष्ट्यानवच्छिन्नसाध्यवत्ताज्ञानप्रतिबन्धकत्वाभावात् इति ॥

मैवम् । साध्यवत्ताज्ञानस्य प्रतिबन्धकतावच्छेदिका सती प्रतिबध्यतावच्छेदिका या विषयता तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताश्रयत्वविवक्षणेनैवोक्तातिव्याप्तिवारणसम्भवात् उक्तस्थले निरुक्तपर्वतधर्मिकवह्निमत्ताज्ञानस्य साध्यवत्ताज्ञानप्रति-

वन्धकत्वेऽपि प्रतिबध्यत्वाभावात् । एतेन वह्निव्याप्याभावसाध्यकस्थले वह्नित्वावच्छिन्नविषयताया अपि वह्निमान् वह्निव्याप्याभावाभाववानिति ज्ञानविशिष्टवह्निमत्ताज्ञानत्वावच्छिन्नसाध्यवत्ताज्ञानप्रतिबन्धकतया तदवच्छिन्नकार्यतानिरूपितकारणताश्रयवह्निव्याप्यवत्तानिश्चयदशायामतिव्याप्तिः । एवं वह्न्यभावव्याप्यव्याप्याभावात्मकवह्निसाध्यकस्थले साध्यवत्ताज्ञानप्रतिबन्धकं यद्वह्न्यभावव्याप्यवत्ताज्ञानं तज्जनकवन्ह्यभावव्याप्यवत्तानिश्चयकालेऽप्यतिव्याप्तिरित्यपि निरस्तम् । साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयतायां प्रतिबध्यतावच्छेदकत्वनिवेशेनोक्तातिव्याप्तिद्वयस्यापि वारणसम्भवात् । न चैवं साध्यवत्ताज्ञानप्रतिबध्यतावच्छेदकत्वमेव निवेश्यतां किं प्रतिबन्धकतावच्छेदकत्वनिवेशेनेति वाच्यम् । तथा सति वह्निव्याप्याभावात्मकवह्न्यभावव्याप्यसाध्यकस्थले साध्यवत्ताज्ञानप्रतिबन्धकीभूतं यद्वह्निमत्ताज्ञानं तज्जनकवह्निव्याप्यवत्तानिश्चयदशायां सत्प्रतिपक्षितत्वव्यवहारापत्तेः । वह्निव्याप्यवत्तानिश्चयेनाप्युक्तस्थले कार्यप्रतिरोधादिति ध्येयम् ।

न च साध्यवत्ताज्ञानप्रतिबन्धकतानवच्छेदकविषयिताशून्यत्वे सति साध्यवत्ताज्ञानप्रतिबध्यतानवच्छेदकविषयिताशून्यानुमितिनिष्ठकार्यता एवंक्रमेण कथं न निवेश्यत इति वाच्यम् । तथासति महानसीयवह्नीतरवह्न्यभाववान्पर्वतो वन्ह्यभाववानित्यादौ शुद्धवह्निव्याप्यवत्तापरामर्शाद्पीतरबाधसहकारेण महानसीयवह्न्यनुमितेरेवोत्पत्त्या तादृशानुमितेश्च साध्यवत्ताज्ञानप्रतिबन्धकतानवच्छेदकविषयिताशून्यत्वाभावात् वह्निव्याप्यवान् वन्ह्यभावव्याप्यवानित्याकारकउभयपरामर्शदशायां सत्प्रतिपक्षत्वानुपपत्तिरिति ध्येयम् ॥

न च साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नकार्यतैव निवेश्यताम् किमनुमितिनिष्ठत्वनिवेशेनेति वाच्यम् । समानविषयकस्मृतौ समानविषयकानुभवस्य तद्धर्मिकतत्प्रकारकशाब्दं प्रति योग्यताज्ञानविधया तद्धर्मिकतद्वत्ताज्ञानस्य हेतुतया तादृशकार्यतामादाय बाधनिश्चयकालेऽतिव्याप्तिवारणार्थमेवानुमितिनिष्ठत्वं निवेशनीयम् ॥ १ ॥

समानत्वं चागृहीताप्रामाण्यकप्रकृतसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वमिति शिरोमणिः । अथागृहीताप्रामाण्यकत्वशरीरेऽन्व-

पव्याप्त्यंशे व्यतिरेकव्याप्त्यंशे च यदप्रामाण्यं तद्ग्रहाभावविशिष्टत्वं निवेश्यम्। तत्तद्व्याप्त्यंशेऽप्रामाण्यग्रहसत्त्वे तत्तद्व्याप्त्यवगाहिपरामर्शस्य सत्प्रातिपक्षत्वाप्रयोजकत्वात्। तथा चान्वयव्यतिरेकव्याप्त्योरेकतरविषयकपरामर्शदशायामन्वयव्याप्त्यंशेऽप्रामाण्यग्रहसत्त्वे सत्प्रातिपक्षता न स्यात्। न च स्वयोग्यकानुमितिविरोधिग्रहत्वेनाप्रामाण्यग्रहद्वयमनुगमय्य तदभावविशिष्टत्वं निवेशनीयम्, विरोधित्वं च स्वसमानविशेष्यकत्वावच्छिन्नं ग्राह्यम्, तेन विरोधिपरामर्शादिव्यावृत्तिरिति वाच्यम्। एवं सति ताद्दशव्याप्तिद्वयविषयकसमूहालम्बनपरामर्शे एकतरांशेऽप्रामाण्यग्रहसत्त्वे सत्प्रातिपक्षत्वानुपपत्तिरिति चेन्न। स्वीययत्किञ्चित्विषयताप्रयोज्यानुमितिविरोधिज्ञानसामान्याभावस्य निवेशनीयत्वात्। विरोधित्वं च विरोधिपरामर्शव्यावृत्तत्वं ग्राह्यम्। समूहालम्बनपरामर्शस्थले याद्दशव्याप्त्यंशेऽप्रामाण्यज्ञानं नास्ति ताद्दशव्याप्तिविषयताप्रयोज्यानुमितिविरोधिज्ञानसामान्याभावसत्त्वात् न तत्र सत्प्रतिपक्षत्वानुपपत्तिरिति भट्टाचार्येणोक्तम्॥

अत्रेदं बोध्यम्। अन्वयव्यतिरेकव्याप्त्युभयविषयताप्रयोज्यानुमितिनिष्ठप्रतिबन्धकत्वस्य समूहालम्बनस्थलीयउक्ताप्रामाण्यग्रहेऽपि सत्वेन न तद्दोषतादवस्थ्यम्। न च याद्दशव्याप्त्यंशेऽप्रामाण्यज्ञानं नास्ति ताद्दशव्याप्तिविषयतामात्रप्रयोज्यत्वं वक्तव्यमिति न दोष इति वाच्यम्। तदीयपक्षधर्मताविषयताया अपि प्रयोजकतया तदीययत्किञ्चिद्विषयतामात्रप्रयोज्यानुमितेरप्रसिद्धेः। यदि च स्वीययत्किञ्चिद्विषयताप्रयोज्यानुमितित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिग्रहत्वेनाप्रामाण्यज्ञानं निवेश्यते तदा विरोधिपरामर्शव्यावृत्तप्रतिबन्धकत्वनिवेशनं व्यर्थं विरोधिपरामर्शस्य ताद्दशधर्मप्रतिबध्यतावच्छेदकत्वाभावादिति चेत्।

अत्र केचित्—स्वीययत्किञ्चित्विषयताप्रयोज्यानुमितिसामान्यविरोधित्वनिवेशाभिप्रायेण विरोधिपरामर्शव्यावृत्तविरोधित्वं निवेशितं पूर्वोक्तरीत्या निवेशे विरोधिपरामर्शव्यावृत्तत्वं नोपादेयमित्याहुः॥

अत्रेदं चिन्त्यम्। स्वीययत्किञ्चिद्विषयताप्रयोज्यानुमितिसामान्यविरोधित्वनिवेशे पूर्वकल्पेऽपि स्वयोग्यकानुमितिसामान्यविरोधि-

त्वनिवेशेनैव सामञ्जस्ये तत्कल्पपरित्यागस्यानौचित्यापत्तेरिति ध्येयम् ॥ २ ॥

यत्तु प्रामाण्यनिश्चयेनाधिकबलतया बाधकस्य विरोधिपरामर्शस्य वारणाय समानेतीति शिरोमणिः ।

समानेतीति । समानत्वं च विरोधिबोधानुपधायकत्वम् विरोधिबोधाव्यवहितप्राक्क्षणविशिष्टत्वाभाव इति यावत् । तत्प्रतिबध्यकार्यकत्वं च तदभावातिरिक्तसकलप्रकृतसाध्यानुमितिकारणसमवधानकालावच्छिन्नत्वे सति तत्प्रयुक्तकार्यानुपधायकत्वम् । सकलकारणनिवेशादुभयपरामर्शसत्त्वे बाधेन हीनबलस्य हेतोर्न सत्प्रतिपक्षत्वम् । कार्यप्रतिरोधनिवेशश्च स्वपरामर्शे प्रामाण्यनिश्चयेनाधिकबलहेतावतिव्याप्तिवारणायेति भट्टाचार्येणोक्तम् ।

न च तन्मात्रप्रयुक्तकार्यानुपधायकत्वनिवेशेनैवोभयपरामर्शसत्त्वे बाधेन हीनबलहेतोः सत्प्रतिपक्षत्ववारणसंभवे प्रतिरुद्धकार्यकत्वशरीरे सत्यन्तनिवेशो व्यर्थ इति वाच्यम् । प्रतिबन्धकज्ञानस्येव प्रतिबन्धकतावच्छेदकविषयताया अपि कार्यानुत्पादप्रयोजकतया तन्मात्रप्रयुक्तत्वानिवेशोऽसंभवापत्तिरिति ध्येयम् ॥

अथ तदभावातिरिक्तसकलप्रकृतसाध्यानुमितिकारणसमवधानकालावच्छिन्नत्वे सति तादृशकार्यानुपधायकत्वरूपतत्प्रतिरुद्धकार्यकत्वनिवेशेनैव सामञ्जस्ये तत्प्रयुक्तत्वनिवेशो व्यर्थ इति चेव ।

अत्र केचित् । यत्रादावुभयपरामर्श एवाप्रामाण्यज्ञानं तत्राप्रामाण्यज्ञानकाले सत्प्रतिपक्षत्वापत्तिरतस्तत्प्रयुक्तत्वनिवेशः । न चाप्रामाण्यज्ञानकाले विरोधिपरामर्शाभावातिरिक्तसकलसाध्यानुमितिकारणमेवं नास्ति तत्राप्रामाण्यज्ञानाभावविशिष्टपरामर्शात्मककारणविरहादिति वाच्यम् । पूर्वक्षणावच्छेदेनोक्तपरामर्शस्यैवाप्रामाण्यज्ञानाभावविशिष्टतया साध्यानुमितिकारणतावच्छेदकाश्रयत्वात् सकलकारणसमवहितत्वस्वीकारे गौरवेण कारणतावच्छेदकविशिष्टाधिकरणत्वानिवेशादित्याहुः ॥

वस्तुतोऽप्रामाण्यज्ञानाभावस्य पृथक् कारणतामताभिप्रायकोऽयं ग्रंथः तथा च साध्यानुमितिसकलकारणमध्ये गौरवेण प्रामाण्यज्ञानाभावव्यक्तीनां न निवेशः । अप्रामाण्यज्ञानकालेऽतिव्याप्तिस्तु तत्प्रयुक्तत्वं निवेश्य वारणीयेति युक्तमुत्पश्यामः ॥ ३ ॥

अगृहीतप्रामाण्यकत्वसंवलितयोग्यत्वोपादाने तु बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यासिद्धिसमर्थपरामर्शाविषयत्वं तद्वाच्यमिति शिरोमणिः ।

बाधोपस्थितिसमर्थेति । साध्यवत्ताज्ञानप्रतिबन्धिका सती तत्प्रतिबध्या याऽनुमितिस्तद्योग्यतेत्यर्थः । साध्यवत्ताधीप्रतिबध्यत्वनिवेशात्साध्याभावव्याप्यानुमितिसमर्थपरामर्शकाले नातिप्रसङ्ग इति भट्टाचार्येणोक्तम् ॥

अथात्र प्रतिबध्यत्वनिवेशेऽपि वह्न्यभावव्याप्यसाध्यकस्थले साध्यवत्ताधीप्रतिबन्धिका सती तत्प्रतिबध्या या वह्न्यभावव्याप्याभावव्याप्यवह्निमानित्याकारकानुमितिस्तत्समर्थवह्न्यभावव्याप्याभावव्याप्यवह्निव्याप्यवत्तापरामर्शदशायामेवं वह्निव्याप्याभावव्याप्यवह्न्यभावसाध्यकस्थले साध्यवत्ताधीप्रतिबन्धिका सती तत्प्रतिबध्या या वह्निव्याप्यानुमितिस्तत्समर्थवह्निव्याप्यवत्तापरामर्शदशायां चातिप्रसङ्गो दुर्वार इति कार्यप्रतिरोधनिवेश आवश्यक इति चेत् ।

साधारणोक्तपत्रिकोक्तरूपावच्छिन्नप्रतिबध्यत्वप्रतिबन्धकत्वनिवेशेनैवोक्तातिप्रसङ्गद्वयस्य वारणसंभवादिति ध्येयम् ।

इदमत्रावधेयम् । एकरूपावच्छिन्नप्रतिबध्यत्वप्रतिबन्धकत्वनिवेशेऽपि वह्निव्याप्याभाववद्वह्न्यभाववत्कालीनह्रदो वह्निव्याप्यवानित्यादौ तादृशह्रदत्वावच्छेदेन साध्यवत्ताज्ञाननिरूपितैकरूपावच्छिन्नप्रतिबध्यत्वप्रतिबन्धकत्वोभयवती या तादृशह्रदधर्मिकवह्न्यभावानुमितिस्तत्समर्थवह्न्यभावव्याप्यवत्तापरामर्शदशायां सत्प्रतिपक्षत्वापत्तिर्दुर्वारैवेति ॥ न चोक्तस्थले तादृशह्रदधर्मिकवह्न्यभाववत्ताज्ञानस्य साध्यवत्ताज्ञानं प्रति व्यावर्तकधर्मदर्शनत्वैव प्रतिबन्धकत्वं तच्च ज्ञानवैशिष्ट्यावच्छिन्नानुमितिप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेनैवोक्तातिप्रसङ्गव्युदास इति वाच्यम् । उक्तस्थले तादृशविशिष्टह्रदत्वावच्छेदेन साध्यवत्ताज्ञानं प्रति विशिष्टह्रदधर्मिकसाध्याभाववत्तानिश्चयत्वेन प्रतिबन्धकतयैवोपपत्त्या ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वाकल्पनात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वानिवेशे यत्र बाधप्रतिबन्धकतैव ज्ञानवैशिष्ट्यानवच्छिन्ना तत्र सत्प्रतिपक्षत्वानुपपत्तिश्च ॥ न च कार्यप्रतिरोधनिवेशेऽपि उक्तपक्षस्थल एव वह्निव्याप्यवह्न्यभावव्याप्याभावोभयस्य साध्यतायामुक्तातिप्रसङ्गो

र्वारः वह्न्यभावव्याप्यवत्तापरामर्शेण वह्न्यभावव्याप्याभावघटितोभ-
यानुमितित्वरूपकार्यप्रतिरोधादिति वाच्यम्। विरोधिपरामर्शप्रयुक्त-
यादृशधर्मानुत्पादस्तादृशधर्मावच्छिन्नकार्यकप्रकृतपरामर्शविषयत्व-
विवक्षाया कथंचिद्वारयितुं शक्यत्वात्। वह्न्यभावव्याप्यवत्तापरामर्श-
स्य वन्ह्यभावव्याप्याभावानुमितित्वावच्छिन्नस्यैवानुत्पादप्रयोजकत-
या प्रकृतसाध्यीयपरामर्शकार्यतावच्छेदकावच्छिन्नानुत्पादाप्रयोजक-
त्वादस्तु वा कार्यप्रतिरोधनिवेशेऽप्येतद्दोषो दुर्वार इति चिन्त्यम् ॥४॥

प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदका-
वच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता-
वच्छेदिका सती विशिष्टपक्षसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपित-
प्रतिबन्धकतावच्छेदकानिरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकताव-
च्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छे-
दिका यादृशविशिष्टविषयिता तादृशानुमितिः समुदितार्थ इति
भट्टाचार्येणोक्तम् ॥

अत्र सत्यन्तदले प्रकृतपक्षकत्वमनिवेश्य किञ्चिद्धर्मावच्छिन्नपक्ष-
कत्वानिवेशे यत्किञ्चिद्धर्मपदेन, वन्ह्यभावव्याप्यव्याप्याभावव-
द्ध्रदत्वमादाय तदवच्छिन्नविशेष्यकप्रकृतसाध्यानुमितिमादाय सत्प्र-
तिपक्षोन्नायके वन्ह्यभावव्याप्यव्याप्यवत्ह्रदादावतिव्याप्तिरतस्त-
न्निवेशः । एवमुन्नेयदले पक्षांशे तदप्रवेशे वह्निव्याप्याभावसा-
ध्यकस्थले किञ्चित्पक्षपदेन वन्ह्यभाववत्पर्वतत्वादिकमादाय तदव-
च्छिन्नविशेष्यकप्रकृतसाध्यानुमितिविरोध्युन्नायके केवलवह्निव्याप्य-
वत्पर्वतादिरूपबाधेऽतिव्याप्तिरतस्तद्दलेऽपि तन्निवेशः ॥

अथ सत्यन्तदले प्रकृतानुमित्यवृत्तित्वमेव निवेश्यतां किं तादृशप्र-
तिबन्धकतावच्छेदकत्वपर्यन्तनिवेशेनेति चेन्न। वह्न्यभाववत्त्ववह्न्यभाव-
व्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यादौ पक्षतावच्छेदकविधया
वह्न्यभावावच्छेदकग्रहाविषयीभूतह्रदत्वावच्छेदेन वह्न्यभावव्याप्य-
व्याप्यवत्त्वादौ प्रकृतानुमित्यवृत्तिविषयिताके सत्प्रतिपक्षोन्नायके
वह्न्यभावव्याप्यव्याप्याभावव्याप्यवान् ह्रदो वह्निमानित्यादौ वह्न्यभाव-
व्याप्यव्याप्यवद्ध्रदादिरूपसत्प्रतिपक्षोन्नायके चातिव्याप्तिवारणाय
तन्निवेशस्यावश्यकत्वात्। तन्निवेशे च वह्न्यभावावच्छेदकज्ञानसमा-
नकालीनवह्न्यभावव्याप्यव्याप्यवान् ह्रद इत्यादिदर्शने प्रकृतानुमिति-

प्रतिबन्धकताशून्यतादृशविशिष्टविषयितासत्त्वात् अनतिरिक्तवृत्तित्व-रूपतादृशप्रतिबन्धकतावच्छेदकत्वविरहात् नातिव्याप्तिरिति ध्येयम् ॥

केचित्तु सत्यन्तस्य उक्तार्थकत्वे वह्न्यभावव्याप्यव्याप्याभाववान् ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मकाश्रयासिद्ध्यादावतिव्याप्तिः, स्वमते च उन्नेये उन्नायके विरोध्यन्तविशेषणतयैव उक्तातिव्याप्तिवारणसंभवात् । न चैतन्मतेऽपि तादृशानुमित्यवृत्तिविषयितायां विशिष्टपक्षादिग्रहप्रतिबन्धकतानवच्छेदकत्वनिवेशेनैव उक्तातिव्याप्तिवारणसंभव इति वाच्यम् । तथासति वह्न्यभाव्याप्याभाववान् ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवद्ध्रदात्मकसत्प्रतिपक्षेऽव्याप्तिः तादृशसत्प्रतिपक्षविषयितायां विशिष्टपक्षग्रहप्रतिबन्धकतानवच्छेदकत्वाभावात्, स्वमते च विरोध्यन्तदलेन सत्यन्तदलघटकप्रतिबध्यत्वोन्नेयदलघटकप्रतिबध्यत्वयोर्विशिष्टपक्षग्रहत्वाव्यापकत्वविवक्षयैव सामञ्जस्यात् । एवं ह्रदो वह्न्यभावव्याप्यव्याप्याभाववह्न्युभयवानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मकबाधेऽतिव्याप्तिश्च तादृशबाधविषयितायां विशिष्टपक्षग्रहप्रतिबन्धकतानवच्छेदकत्वस्यापि सत्त्वात्, स्वमते दलद्वये एकरूपावच्छिन्नप्रतिबध्यतानिवेशनैव तद्वारणसंभवात् एतदस्वरसेनैव अथवेत्यादिना प्रतिबध्यतायामेकरूपावच्छिन्नत्वं निवेशितम् । एतेन वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयितायां प्रतिबध्यतावच्छेदकत्वाभावात् साध्यवैशिष्ट्याभावाधिकरणत्वाप्रयोजकत्वेन स्वविषयताप्रयोज्यविशिष्टान्तरविषयत्वाप्रयोज्यतादृशसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतात्वरूपविशिष्टान्तरघटितत्वविरहादेव सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिविरहात् सत्यन्तदलं व्यर्थमिति पूर्वपक्षोऽपि निरस्तः। सत्यन्तदलानुक्तौ वह्न्यभावव्याप्यव्याप्याभाववान् ह्रदो वह्निमान् इत्यादौ वह्न्यभावव्याप्यव्याप्याभाववह्न्युभयवानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदादावतिव्याप्तेर्दुर्वारत्वात् तादृशह्रदादिविषयितायां साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकत्वात् ह्रदो वह्निमानित्यादौ वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवांश्च ह्रद इत्यादिज्ञानीयज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्य सत्प्रतिपक्षोन्नायकविषयतायां अपि सत्त्वेन सर्वत्र सत्प्रतिपक्षोन्नायकेऽतिव्याप्तितादवस्थ्याच्चेत्याहुः ।

अत्रैवमपि सत्यन्तदलं व्यर्थं उन्नेयविषयितायां प्रकृतसाध्यपक्षवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकत्वमनिवेश्य तादृशग्रहप्रतिबध्यतावच्छेदकत्वनिवेशेनैव सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिवारणसंभवात् सत्प्रतिपक्षविषयतायां तादृशग्रहप्रतिबध्यतावच्छेदकत्वाभावादिति ।

न च वह्न्यभावव्याप्याभावव्याप्यवान्-ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदादावतिव्याप्तिरिति वाच्यम् । विशिष्टपक्षसाध्यग्रहप्रतिबन्धकतानवच्छेदक इत्यत्रापि विशिष्टपक्षसाध्यग्रहप्रतिबध्यतावच्छेदकत्वनिवेशेनैव तद्वारणसंभवादिति । एवं ह्रदो वह्न्यभावव्याप्याभावव्याप्यवान् वह्निव्याप्यवान् वा इत्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदे वह्न्यभावव्याप्यवद्ध्रदे वाऽतिव्याप्तिवारणाय सत्यन्तदलनिवेशस्यावश्यकत्वात् ।

यत्तु कोन्नेयविषयितायां विशिष्टपक्षसाध्यग्रहप्रतिबध्यतानवच्छेदकत्वनिवेशे वह्निव्याप्यवद्ध्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवद्ध्रदादिरूपसत्प्रतिपक्षेऽव्याप्तिस्तादृशसत्प्रतिपक्षोन्नेयविषयितायां विशिष्टपक्षग्रहप्रतिबध्यतानवच्छेदकत्वात् इति । तत्तुच्छम् प्रतिबन्धकतायां विशिष्टपक्षसाध्यग्रहत्वाव्यापकत्वनिवेशेनैवोक्ताव्याप्तिवारणसंभवात् । विशिष्टपक्षसाध्यग्रहाविरोधित्वनिवेशपक्षेपि प्रतिबध्यतायामेव विशिष्टपक्षसाध्यग्रहत्वाव्यापकत्वनिवेशस्यावश्यकत्वात् । वह्निमद्ध्रदो वह्न्यभावव्याप्याभाववानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मकसत्प्रतिपक्षाव्याप्तेर्दुर्वारत्वादिति ध्येयम् ।

(अथैवमुन्नेयविषयितायां प्रकृतपक्षसाध्यविशिष्टग्रहप्रतिबध्यतावच्छेदकत्वमेव निवेश्यम् उक्तदोषवारणाय सत्यन्तदले वरमनुमित्यवृत्तित्वमेव निवेश्यतां तावताप्यनुमितिप्रतिबन्धकतावच्छेदकत्वनिवेशापेक्षया लाघवादिति चेन्न । एवमपि ह्रदो वह्निव्याप्यवह्न्यभावव्याप्याभावव्याप्योभयवानित्यादौ वह्न्यभावव्याप्यवद्ध्रदादावतिव्याप्तिः । न च तथापि उन्नेयविषयितायामेव प्रकृतपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकत्वमिव तादृशग्रहप्रतिबध्यतावच्छेदकत्वमपि निवेश्यताम् तावतैवोक्तदोषवारणसम्भवादिति पृथक् सत्यन्तदलनिवेशो व्यर्थ इति वाच्यम् । एवमपि ह्रदो वह्निव्याप्यवानित्यादौ वह्निव्याप्याभावव्याप्यवह्न्यभावव्याप्यवद्ध्रदे ह्रदो वह्न्यभावव्याप्यवह्निमानित्यादौ वन्ह्यभावव्याप्यव्याप्यवद्ध्रदे

चातिव्याप्तेर्दुर्वारत्वात् ।)

एतेन प्रकृतपक्षसाध्यविशिष्टग्रहत्वव्यापकप्रतिबध्यत्वप्रतिबन्धकत्वयोस्तादृशग्रहनिरूपितप्रतिबध्यत्वप्रतिबन्धकत्वयोश्चैकरूपावच्छिन्नत्वनिवेशनेनैवोक्तातिव्याप्तिद्वयवारणसम्भवः तद्व्याप्यवत्ताज्ञाने तद्व्याप्याभावव्याप्यतदभाववत्ताज्ञाननिरूपितप्रतिबध्यत्वप्रतिबन्धकत्वयोः सत्त्वेपि तयोरेकरूपावच्छिन्नत्वाभावादिति पृथक् सत्यन्तदलमनुपादेयमेवेति केषांचित् प्रलपितमप्यपास्तम् ।

वह्निव्याप्याभाववद्वन्ह्यभाववत्कालीनह्रदत्वावच्छेदेन वह्निव्याप्यसाध्यकस्थले तादृशह्रदत्वावच्छेदेन वह्निव्याप्यवत्ताज्ञानं प्रति तादृशह्रदधर्मिकवन्ह्यभाववत्ताज्ञानस्यैकरूपावच्छिन्नप्रतिबध्यत्वप्रतिबन्धकत्वोभयसाधनतादृशप्रतिबध्यत्वप्रतिबन्धकत्वोभयावच्छेदकीभूतवन्ह्यभाववत्तादृशह्रदत्वावच्छिन्नविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयिताके वह्न्यभावव्याप्यवत्तादृशह्रदे एवं वन्ह्यभावव्याप्याभाववद्वह्निमत्कालीनह्रदत्वावच्छेदेन वह्निसाध्यकस्थले तादृशह्रदत्वावच्छेदेन वह्निमत्ताबुद्धिं प्रति तादृशह्रदधर्मिकवन्ह्यभावव्याप्यवत्ताज्ञानस्यैकरूपावच्छिन्नप्रतिबध्यत्वप्रतिबन्धकत्वोभयसत्त्वात्तदुभयावच्छेदकीभूतवह्न्यभावव्याप्यवत्तादृशह्रदत्वावच्छिन्नविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयिताके वन्ह्यभावव्याप्यवत्तादृशह्रदे चातिव्याप्तेर्दुर्वारत्वादिति कृतं पल्लवितेन ।

अथ तथापि आश्रयासिद्ध्युन्नायकेऽतिव्याप्तिवारणाय विशिष्टपक्षसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वमुन्नेयविषयितायां निवेशितं तदपेक्षया लाघवाद्विशिष्टपक्षसाध्यानुमितिवृत्तित्वमेव कुतो न निवेशितम्, तावतैव कांचनमयह्रदो वह्निमानित्यादौ कांचनमयत्वाभाववद्ध्रदादिविषयितायां तादृशानुमित्यवृत्तित्वात् कांचनमयत्वाभावव्याप्यवद्ध्रदादावतिव्याप्तिवारणसम्भवात् । वन्ह्यभाववद्ध्रदादिविषयिताया विशिष्टपक्षसाध्यविषयकह्रदो वह्न्यभाववानित्याद्यनुमितिवृत्तित्वेन सत्प्रतिपक्षसंग्रहाच्चेति चेन्न ।

वह्निव्याप्यवद्ध्रदो वह्निमानित्यादौ संयोगः संयोगव्याप्यवत्संयोगवानित्यादौ च वन्ह्यभावव्याप्यवद्ध्रदात्मके संयोगाभावव्याप्यवत्संयोगात्मके च सत्प्रतिपक्षेऽव्याप्तेः वन्ह्यभाववद्ध्रदात्मकोन्ने-

यविषयितायाः विशिष्टपक्षविषयकानुमितौ संयोगाभाववत्संयोगात्मकोन्नेयविषयितायाश्च विशिष्टसाध्यविषयकानुमितौ प्रवृत्तेरिति ध्येयम् ॥

अथ तथाप्युन्नेयविषयितायां प्रकृतानुमित्यवृत्तित्वमेव निवेश्यताम् किं तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वनिवेशनेनेति चेन्न । वन्ह्यभावव्याप्यव्याप्यवद्वन्ह्यभावव्याप्यवत्कालीनह्रदो वन्ह्यभावव्याप्याभाववानित्यादौ प्रकृतानुमित्यवृत्तिविषयिताकस्य पक्षतावच्छेदकाविधया वह्न्यभावव्याप्यव्याप्यात्मकसाध्याभावावच्छेदकत्वग्रहविषयीभूतस्य वह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नस्योन्नायके ह्रदत्वावच्छेदेन वन्ह्यभावव्याप्यव्याप्यवत्तात्मकबाधेऽतिव्याप्यापत्तेः। तन्निवेशे च तादृशपक्षज्ञानासमानकालीनवन्ह्यभावव्याप्यवान् ह्रद इति ज्ञानेऽनुमितिप्रतिबन्धकताशून्ये तद्विषयितासत्त्वात् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविरहान्नातिव्याप्तिः । एवं वन्ह्यभावाभाववद्वन्ह्यभावव्याप्याभाववत्कालीनह्रदो वन्ह्यभावव्याप्याभाववानित्यादौ प्रकृतानुमित्यवृत्तिविषयिताकस्य वन्ह्यभाववद्वन्ह्यभावाभाववद्वन्ह्यभावव्याप्याभाववत्कालीनह्रदस्योन्नायके वन्ह्यभावव्याप्यवत्तादृशह्रदात्मकबाधे तथा वह्निव्याप्यवद्ह्रदो वन्ह्यभावव्याप्याभाववानित्यादौ अनुमित्यवृत्तिविषयिताके वन्ह्यभाववद्ध्रदस्योन्नायके वन्ह्यभावव्याप्यवद्ध्रदात्मकबाधे चातिव्याप्यापत्तेश्च । स्वमते चोक्तस्थलद्वये वन्ह्यभाववद्ध्रदविषयितायाः अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावादेव नातिव्याप्तिरिति ध्येयम् ॥

ननु तथापि वह्न्यभाववद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवत्तादृशह्रदे चातिव्याप्तिः वह्न्यभावव्याप्यव्याप्यवत्तादृशह्रदनिश्चयस्य वह्न्यभावव्याप्यवत्तावच्छेदेन साध्याभावावगाहितया तादृशह्रदे साध्याभावावच्छेदकत्वग्रहविषयीभूतवह्न्यभावव्याप्यव्याप्यावगाहितया च सत्यन्तदलाक्रान्तत्वात् प्रसत्यन्तघटकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे च प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षाव्याप्तिः । न च यत्किञ्चिद्धर्मावच्छिन्नव्यापकत्वप्रकारतानिरूपितसाध्याभावविषयित्वानवच्छिन्नज्ञाननिष्ठावच्छेदकताकान्यत्वस्य प्रतिबन्धकताविशेषणत्वे सामञ्जस्यमिति वाच्यम् । एवमपि प्रकृतहेतुभिन्ने पक्षवृत्तित्वविशेषितसाध्यव्यापकी-

भूताभावप्रतियोगित्वरूपसत्प्रतिपक्षेऽव्याप्त्यापत्तेः । किञ्च वह्न्यभा-
ववद्वन्ह्यभावव्याप्यव्याप्यवत्कालीनह्रदत्वावच्छिन्नधर्मिकवह्निमत्ताबु-
द्धिं प्रति तादृशह्रदत्वावच्छेदेन वह्न्यभावव्याप्यव्याप्यवत्तानिश्चय-
त्वेन प्रतिबन्धकतयैवोपपत्तौ ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकत्वे
मानाभावादुक्ताव्याप्तितादवस्थ्यापत्तेः । वह्न्यभावव्याप्यव्याप्यवद्व-
ह्न्यभावव्याप्यवत्कालीनह्रदो वह्न्यभावव्याप्यव्याप्याभाववानित्यादौ
तादृशह्रदे वह्न्यभावव्याप्यवत्त्वनिश्चयस्य वह्न्यभावव्याप्यावच्छेदेन
साध्याभावावगाहितया प्रकृतपक्षे वह्न्यभावव्याप्यावगाहितया चानु-
मितिप्रतिबन्धकत्वेन तादृशप्रतिबन्धकतावच्छेदकविषयिताकवह्न्य-
भावव्याप्यवत्तादृशह्रदत्वावच्छिन्नोन्नायकवह्न्यभावव्याप्यव्याप्यवत्ता-
दृशह्रदात्मकबाधे वह्न्यभावव्याप्यवद्वह्न्यभाववत्कालीनह्रदो वह्न्य-
भावव्याप्याभाववानित्यादौ च प्रकृतपक्षे वह्न्यभाववत्तानिश्चयस्यो-
करीत्याऽनुमितिप्रतिबन्धकत्वेन तादृशप्रतिबन्धकतावच्छेदकविष-
यिताकवह्न्यभाववत्प्रकृतपक्षोन्नायके वह्न्यभावव्याप्यवत्प्रकृतपक्षा-
त्मकबाधे च बाधप्रतिबन्धकतामादायातिव्याप्तेर्दुर्वारतापत्तेश्च । एतेन
प्रागुक्तस्थले जलवान् वह्न्यभाववान् जलवांश्च तादृशपक्षः शैवाल-
वान् तादृशपक्ष इत्यादिनानाविधनिश्चयसाधारण्यानुरोधेन ज्ञानवै-
शिष्ट्यावच्छिन्नप्रतिबन्धकतास्वीकारेऽपि न निस्तारः । अत एव
नानानिश्चयसाधारणसाध्याभावत्वावच्छिन्नप्रकारताविशिष्टपक्षताव-
च्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रागुक्तस्थले प्रतिबन्ध-
कत्वं वाच्यम् । विशेष्यतायां प्रकारतावैशिष्ट्यं च स्वनिरूपकज्ञान-
समानाधिकरणज्ञानीयत्व-स्वनिरूपितविशेष्यतावच्छेदकधर्मनिष्ठप्र-
कारतानिरूपितत्वोभयसम्बन्धेन । तथाच प्रागुक्तस्थले वह्न्यभाववज्ज-
लादिमद्वृत्तिजलवत्तादृशपक्षरूपविशिष्टान्तरविषयतात्वव्यापकीभूत-
साध्याभावप्रकारताविशिष्टतादृशपक्षविषयतात्वावच्छिन्नप्रयोज्यत्व-
स्य स्वविषयताप्रयोज्यसाध्यावगाहित्वाभावाधिकरणतायामसत्त्वेन
विशिष्टान्तरघटितत्वनिवेशादेव नातिव्याप्तिरिति कस्यचित्समाधा-
नमपि हेयम् । उक्तरीत्या प्रथमोक्तातिव्याप्तिवारणेऽपि पश्चादुक्ताति-
व्याप्तिद्वयस्य दुर्वारत्वात् । प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षनि-
श्चयस्यापि नानाविधनिश्चयसाधारणेन स्वनिरूपितज्ञानसमानाधिकर-
णज्ञानीयत्व-स्वनिरूपितव्यापकत्वप्रकारतानिरूपितप्रकारतावच्छेद-

कावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन साध्याभावव्याप्यवच्छि-
न्नविशेष्यताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चय-
त्वेन प्रतिबन्धकत्वस्य वक्तुमशक्यतया उक्तरीत्या तादृशसत्प्रति-
पक्षेऽपि विशिष्टान्तराघटितत्वस्यासत्त्वप्रसङ्गाच्च। नानाविधनिश्चय-
साधारण्यानुरोधेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतास्वीकारे वह्न्य-
भावव्याप्यव्याप्यवद्वह्न्यभावव्याप्यवत्कालीनह्रदो वह्न्यभावव्याप्य-
व्याप्याभाववान् इत्यादिस्थलीयतादृशपक्षविशेष्यकवह्न्यभावव्याप्य-
निश्चयस्यापि ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकत्वं वाच्यम्। तथा
चोन्नेयदलप्रविष्टप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशने-
नैवोक्तातिव्याप्तिवारणसम्भव इति वाच्यम्। तथासति गगनाभाव-
वदभाववत्कालीनगगनसाध्यकसत्प्रतिपक्षाव्याप्तिः—तादृशगगनाभाव-
व्याप्यात्मकसत्प्रतिपक्षोन्नेयतादृशगगनाभावज्ञानेन ज्ञानविशिष्टज्ञान-
त्वेनैव प्रतिबन्धकत्वादिति चेत्।

अत्राहुः—उन्नेयविषयितायां प्रकृतानुमितिप्रतिबन्धकतावच्छेद-
कत्वमिव प्रतिबध्यतावच्छेदकत्वमपि निवेश्यम् तावतैवोक्तातिव्या-
प्तीनां निराससम्भव इति। उन्नेयविषयितायां प्रतिबन्धकतावच्छे-
दकत्वानिवेशे वह्न्यभावाभाववद्वह्न्यभावव्याप्याभाववत्कालीनह्रदो
वह्न्यभावव्याप्याभाववानित्यादौ वह्न्यभावव्याप्यवद्ध्रदात्मकबाधेऽति-
व्याप्तिरतस्तन्निवेशः। सत्यन्तदलप्रयोजनन्तु वह्निव्याप्याभाववद्वह्न्य-
भाववत्कालीनह्रदो वह्निव्याप्यवानित्यादौ वह्न्यभावव्याप्यवत्तादृशह्रदा-
दावतिव्याप्तिवारणरूपमिति प्रागेवोक्तम्। न च सत्यन्तानिवेशेऽपि
तादृशपक्षकस्थल एव वह्निव्याप्यवह्न्यभावव्याप्याभावोभयात्मकबा-
धे वह्न्यभावव्याप्यवत्तादृशपक्षेऽतिव्याप्तिरिति वाच्यम्। वह्न्यभाव-
व्याप्याभावव्याप्यव्याप्याभावोभयवान् ह्रदो वह्निमान् इत्यत्र वह्न्य-
भावव्याप्यव्याप्यवद्ध्रदादावतिव्याप्तिवारकेण प्रतिबध्यत्वयोरेकरूपा-
वच्छिन्नत्वनिवेशेनैव वारणसम्भवात्। एतेन—उन्नेयविषयितायां प्रति-
बध्यत्वप्रतिबन्धकत्वयोरवच्छेदकत्वनिवेशे सत्यन्तदलेऽनुमित्यवृत्ति-
त्व कुतो न निविश्यताम्—इत्याशंकापि निरस्तेति दिक्॥ ५॥

अत्र सत्यन्तदले प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहनिष्ठ-
प्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशे साध्याभावव्याप्यव्याप्यव-
त्ताज्ञानमपि समूहालम्बनसाध्यवत्ताज्ञानरूपसाध्याभावव्याप्याभाव-

वत्ताज्ञानप्रतिबन्धकतायाः सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिरतस्तादृश-वैशिष्ट्यावगाहिग्रहत्वघटकसमुदायवृत्त्यवच्छेदकताकप्रतिबध्यता निवेशनीया, तथाच काञ्चनवद्धदो वह्निमान् ह्रदो काञ्चनमयवह्निमानित्यादौ वह्न्यभावव्याप्यवद्ध्रदादिरूपसत्प्रतिपक्षाव्याप्तिस्तादृश-प्रतिबध्यतावच्छेदकत्वस्य तादृशवैशिष्ट्यावगाहितावटककाञ्चनमयत्वविषयितायामसत्त्वादतस्तादृशानुमितित्वव्यापकप्रतिबध्यतानिवेश इति भट्टाचार्येणोक्तम् ॥

अथ पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिवेशेनैव तादृशसत्प्रतिपक्षसङ्ग्रहः सम्भवति काञ्चनमयह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतायाः ह्रदत्वावच्छिन्नविशेष्यतानिरूपितकाञ्चनमयवह्नित्वावच्छिन्नप्रकारतायाश्च ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतात्वेन तत्प्रतिबध्यतावच्छेदकत्वात्। न हि तादृशप्रकारतात्वावच्छिन्नावच्छेदकताकत्वं प्रतिबध्यतायां निवेश्यते प्रयोजनाभावात्, किं तादृशानुमितित्वव्यापकतानिवेशेनेति ॥ न च ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्याभावात्मकवह्निमानितिज्ञानीयवह्नित्वावच्छिन्नप्रकारताया अपि वह्न्यभावव्याप्याभावत्वावच्छिन्नप्रकारतात्वेन वह्न्यभावव्याप्यव्याप्यवत्तादृशनिश्चयप्रतिबध्यतावच्छेदकता, अतः सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिरतस्तादृशप्रकारतात्वावच्छिन्नावच्छेदकताकत्वनिवेशस्यावश्यकतया व्यापकतानिवेशव्यावृत्तिसङ्गतिरिति वाच्यम्। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारत्वावच्छिन्नत्वस्य प्रतिबध्यताविशेषणतयैव सामञ्जस्यात्। न च तथापि ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवह्निघटोभयाभाववद्ध्रदादावतिव्याप्तिः एकत्र द्वयमितिरीत्या जायमान–वह्निघटवान् ह्रद इति–ज्ञानीयह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताया अपि घटत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतात्वेन वह्निघटोभयाभावनिश्चयप्रतिबध्यतावच्छेदकत्वेन सत्यन्तदलस्य वन्ह्यभावव्याप्यघटितत्वात् विशेष्यदलस्य च तत्र सत्त्वादित्यनुमितित्वव्यापकत्वानिवेशनमावश्यकमिति वाच्यम्। साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारत्वान्य-

प्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्य-तानिवेशेनैव तद्वारणसम्भवात् । किञ्च सत्यन्तदलघटकप्रतिवध्यत्वोत्तरदलप्रविष्टप्रतिवध्यत्वयोरेकरूपावच्छिन्नत्वनिवेशस्यावश्यकतया तेनैवोक्तातिव्याप्तिवारणसम्भवाच्च । एतेन—पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नप्रतिवध्यतानिवेशे ह्रदो वह्न्यभावव्याप्यव्याप्याभाववद्वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ह्रदादावतिव्याप्तिरतस्तद्वारणाय तादृशप्रकारतात्वावच्छिन्नावच्छेदकताकप्रतिवध्यतानिवेशश्चौक्ये इदं काञ्चनमयवह्निमान् इत्यादौ वह्न्यभावव्याप्यवद्ह्रदादेरसङ्ग्रहभयेन तादृशानुमितित्वव्यापकत्वनिवेशः इति कैश्चिदुक्तमप्यपास्तम् । एकरूपावच्छिन्नप्रतिवध्यतानिवेशेनैव वह्न्यभावव्याप्यव्याप्यवद्ह्रदादावतिव्याप्तेरसम्भवेन तादृशप्रकारतात्वावच्छिन्नावच्छेदकताकप्रतिवध्यतानिवेशस्याप्रयोजनकत्वात्, अन्यथा व्यापकत्वनिवेशेऽप्यनिस्तारात् इति । प्रतिवध्यत्वद्वये एकरूपावच्छिन्नत्वनिवेशात् वह्न्यभाववज्जलवद्वृत्तिजलव्याप्याभाववद्ह्रदकालीनह्रदो वह्निमानित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलव्याप्यवद्ह्रदेऽतिव्याप्तिस्तस्य व्यावर्तकप्रतिवध्यत्वं आश्रयासिद्धिप्रतिवध्यत्वं चादाय दलद्वयसत्त्वादिति पूर्वपक्षोऽपि निरस्त इति चेत् ।

अत्र केचित्—यत्र वह्निव्याप्यधूमवत्तापरामर्शाल्लाघवज्ञानवशेन काञ्चनमयवह्नितरवह्न्यभाववान् पर्वत इत्याकारकेतरबाधज्ञानवशेन वा काञ्चनमयवह्निमानित्यनुमितिर्जायते तत्र काञ्चनमयत्वाभावव्याप्यवद्वह्निरूपसत्प्रतिपक्षे साध्याप्रसिद्ध्याद्यनात्मकेऽव्याप्तिस्तज्ज्ञानप्रतिवध्यतावच्छेदककोटौ पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताया अनिवेशात् वह्नित्वावच्छिन्नविशेष्यतानिरूपितकाञ्चनमयत्वप्रकारताया एवं तज्ज्ञानप्रतिबध्यतावच्छेदकत्वात् अतस्तादृशानुमितित्वव्यापकप्रतिवध्यतानिवेशनमावश्यकम् । न च व्यापकत्वनिवेशेऽपि काञ्चनमयत्वाभाववद्वह्निविषयकज्ञानस्य विशिष्टसाध्यग्रहाविरोधित्वात् तदसङ्ग्रह इति वाच्यम् । व्यापकतावच्छेदकत्वेन गृहीतस्यैव विधेयतावच्छेदकत्वनियमेन काञ्चनमयत्वादेर्विधेयतावच्छेदकत्वाभावात् शुद्धवह्नित्वस्यैव विधेयतावच्छेदकत्वेन तद्विशिष्टग्रहाविरोधित्वेन तत्राक्षतत्वात् । सत्यन्तदले

तु विधेयतावच्छेदकधर्मो न निवेश्यते किन्तु प्रकारतावच्छेदकधर्म एवेति न सत्यन्तदलासत्त्वम् । काञ्चनमयत्वसहितवह्नित्वस्य विधेयतावच्छेदकत्वेन प्रकृतानुमितिजनकतावच्छेदकव्यापकत्वप्रकारतानिरूपितविशेष्यतावच्छेदकधर्मविशिष्टग्रहाविरोधित्वमेव विरोध्यन्तेन विवक्षणीयमिति नानुपपत्तिः । एतेन पक्षतावच्छेदकत्वसाध्यतावच्छेदकत्वयोर्न्यूनवारकपर्याप्तिमनिवेश्य पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वपर्याप्तावच्छेदकताकप्रतिबध्यता निवेशनीया । तथाच काञ्चनमयह्रदो वह्निमान् ह्रदः काञ्चनमयवह्निमानित्यादौ ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिग्रहत्वे वह्न्यभावव्याप्यवद्ध्रदविषयकनिश्चयप्रतिबध्यतावच्छेदकतापर्याप्तिसत्त्वात्तत्स्थलीयसत्प्रतिपक्षसङ्ग्रहसम्भवे व्यापकतानिवेशो व्यर्थ इत्यपि परास्तम् । उक्तरीत्या काञ्चनमयत्वाभावव्याप्यवद्ध्रदादेरसङ्ग्रहापत्तेरिति ॥

अथैवं पर्वतोऽभावव्याप्यधूमाभाववानित्यादावभावव्याप्यधूमवत्पर्वतात्मकबाधेऽतिव्याप्तिस्तादृशबाधविषयितायां प्रकृतसाध्यग्रहप्रतिबन्धकतावच्छेदकाभावव्याप्यधूमाभावाभावेतराभाववानितीतरबाधजन्य–पर्वतोऽभावव्याप्यधूमाभावाभाववान्–इत्याकारकानुमितिविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वसत्त्वेनोक्तबाधस्य विशेष्यदलाक्रान्तत्वात्, एवं पर्वतो वह्निव्याप्याभाववानित्यादौ वह्निव्याप्यवत्पर्वतरूपत्वाच्च वह्निव्याप्यवह्नीतराभाववानितिबाधसहकारेण प्रकृतसाध्यवैशिष्ट्यग्रहविरोधिवह्निव्याप्यवह्न्युन्नायकेऽतिव्याप्तिरिति । मैवम् । प्रकृतपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयितात्वव्याप्यविषयितानिष्ठावच्छेदकताकजन्यतानिवेशेनैवोक्तातिव्याप्तिवारणसंभवात्—अभावव्याप्यधूमवान् पर्वतः वह्निव्याप्यवान्पर्वतः इत्यादिपरामर्शजनकतावच्छेदकतायाः शुद्धाभाववान् शुद्धवह्निमानित्याद्यनुमितिविषयतायामपि सत्त्वेन तत्र निरुक्तप्रतिबन्धकत्वाभावादित्याहुः ॥

अन्ये तु गुणीयसंयोगेन वह्न्यादिसाध्यकस्थले गुणीयत्वाभाववत्संयोगस्य बाधतया गुणीयत्वाभावव्याप्यवत्संयोगस्यापि सत्प्रतिपक्षत्वम् । एतच्च सामान्यनिरुक्तिग्रन्थे जगदीशेनोक्तम् । एवं च तादृशसत्प्रतिपक्षसंग्रहार्थमेवानुमितित्वव्यापकतानिवेश इति वदन्ति ॥

परे तु पक्षतावच्छेदकत्वसाध्यतावच्छेदकत्वयोर्न्यूनवारकपर्याप्ति-
मनिवेश्य प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यग्रहत्वपर्याप्तावच्छेदकताकप्र-
तिबध्यतानिवेशे जातिमान्वह्निमानित्यत्र वह्न्यभाववद्ध्रदकालीनवह्न्य-
भावव्याप्यवज्जातिमत्यतिव्याप्तिः ह्रदत्वस्य जातित्वरूपेण पक्षताव-
च्छेदकत्वादिति तद्वारणाय पक्षतावच्छेदकतायाः पर्याप्तिनिवेशः ।
ह्रदो वह्निमानित्यादौ वह्न्यभाववज्जातिमत्कालीनवह्न्यभावव्याप्य-
व्याप्यवद्ध्रदादावतिव्याप्तिस्तज्ज्ञानप्रतिबध्यताकोटौ जातित्वरूपेण
ह्रदत्वावच्छिन्नविशेष्यतायाः प्रवेशादिति विशेष्यतावच्छेदकतायाः प-
र्याप्तिनिवेशः । एवं जातिर्जातिमतीत्यादौ वह्न्यभाववज्जातिकालीनजाति-
मद्भावव्याप्यव्याप्यवज्जातिरूपविशिष्टेऽतिव्याप्तिः—जातित्वरूपेण व-
ह्नित्वस्य साध्यतावच्छेदकत्वात् इति तद्वारणाय साध्यतावच्छेदक-
तायाः पर्याप्तिनिवेशः । जातिर्वह्निमतीत्यत्र जातिमदभाववज्जातिका-
लीनवह्न्यभावव्याप्यवज्जातिरूपविशिष्टेऽतिव्याप्तिः—जातिधर्मिक-
जातिमदभाववत्तानिश्चयप्रतिबध्यतावच्छेदककोटावपि जातित्वरूपेण
वह्नित्वावच्छिन्नप्रकारताया निवेशादिति तद्वारणाय प्रकारतावच्छे-
दकतायाः पर्याप्तिनिवेशः । तथाच पक्षतावच्छेदकतापर्याप्त्यधिकर-
णधर्मपर्याप्तावच्छेदकताकप्रकारताशालिग्रहत्वपर्याप्तावच्छेदकताकप्र-
तिबध्यतानिवेशे कांचनमयह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवद्ध्र-
दादेरसङ्ग्रह इति तादृशानुमितिव्यापकतानिवेशः इति । न च तादृश-
विशिष्टेऽतिव्याप्तिवारणाय साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मा-
वच्छिन्नविशेष्यतानिष्ठावच्छेदकताकप्रतिबध्यता निवेश्यतां न तु ताद-
शानुमितित्वव्यापकत्वमिति वाच्यम् । ह्रदो वह्निमानित्यादौ वह्निघटो-
भयवानिति प्रतिबन्धकज्ञानविषयवह्न्यभावव्याप्यव्याप्यघटविशि-
ष्टवह्न्यभाववद्ध्रदेऽतिव्याप्तिवारणाय सत्यन्तदलघटकप्रतिबध्यता-
यामप्रकृतानुमितित्वव्यापकतानिवेशस्यावश्यकत्वात् । ननु तथापि
विशेष्यदलघटकप्रतिबध्यतायां पक्षविशेष्यतानिरूपितसाध्यप्रकारत्वा-
वच्छिन्नत्वमेव निवेश्यतां लाघवादिति चेन्न । घटविशिष्टवह्न्यभावव्या-
प्याभाववद्ध्रदकालीनह्रदो वह्निमानित्यादौ घटविशिष्टवह्न्यभाववद्ध्र-
दकालीनह्रदो वह्निमानित्यादौ घटविशिष्टवह्न्यभाववद्ध्रदात्मका-
श्रयासिद्धादावतिव्याप्तिः सामानाधिकरण्यसम्बन्धेन घटवि-
शिष्टवह्निमानित्याकारकज्ञानत्वावच्छिन्नप्रतिबध्यतामादायाश्रयासि-

द्धिप्रतिवध्यतामादाय च दलद्वयसत्त्वादिति प्राहुः ॥

उन्नेये विरोध्यन्तविशेषणं पर्वतो वह्निव्याप्याभाववानित्यादौ वह्निव्याप्यवत्पर्वतादिरूपबाधस्य वारकमिति दीधितिकृतैव वक्ष्यते। तत्र तादृशग्रहनिष्ठप्रतिवध्यतानिवेशे पर्वतो वह्निव्याप्याभाववान् वह्न्यभाववांश्चेत्याकारकसमूहालम्बनज्ञानविरोधिवह्निमत्पर्वताद्युन्नायके उक्तबाध एवातिव्याप्तिस्तादृशग्रहत्वावच्छिन्नप्रतिवध्यतानिवेशे च उक्तदिशैव दोषः स्यादिति तत्रापि तादृशग्रहत्वव्यापकप्रतिबध्यता निवेशनीया इति। अत्रोन्नेयोन्नायकोभयत्राविरोध्यन्तकल्पे प्रतिवध्यतायामेकरूपावच्छिन्नत्वनिवेशकल्पे तु सत्यन्तदल एव तादृशग्रहत्वव्यापकप्रतिबध्यतानिवेशो बोध्यः न तून्नेयदलेपि, एकरूपावच्छिन्नप्रतिबध्यतानिवेशे सत्यन्तदले तादृशग्रहत्वव्यापकप्रतिवध्यतानिवेशेनैवार्थादुन्नेयदलेपि व्यापकतानिवेशकार्यनिर्वाहादित्यवधेयम् ॥६॥

विशिष्टसाध्यपक्षग्रहविरोधित्वशरीरे तादृशग्रहनिष्ठप्रतिवध्यतानिरूपितप्रातिबन्धकतानवच्छेदकत्वनिवेशे च काञ्चनमयह्रदो वह्निमानित्यादिस्थलीयबाधग्रहस्यानुमितिविशिष्टपक्षग्रहविरोधितया तत्स्थलीयसत्प्रतिपक्षाव्याप्तितादवस्थ्यमिति विशिष्टपक्षादिग्रहत्वव्यापकतानिवेश इत्युक्तं भट्टाचार्येण।

बाधलक्षणवदत्रापि उन्नेयदले पक्षसाध्यग्रहाविरोधित्वमित्यनेनैव उद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्तप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिविरोधीयविषयतान्तःपातिप्रकारत्वावच्छिन्नत्वमेव प्रतिबध्यतायां निवेशनीयम्, तेन वह्निमान्ह्रदो वह्निमानित्यादौ प्रकृतपक्षग्रहविरोधिवह्न्यभाववद्ध्रदाद्युन्नायके सत्प्रतिपक्षे नाव्याप्तिः।

वस्तुतो वह्न्यभावव्याप्याभाववह्न्यभाववद्ध्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवद्ध्रदात्मकसत्प्रतिपक्षसङ्ग्रहार्थमेवोक्तप्रकारश्चिन्तनीयः। तत्र वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मकाश्रयासिद्ध्युन्नायकेतिव्याप्तिवारणाय पक्षग्रहाविरोधित्वनिवेशस्यावश्यकत्वात्। एतेन लक्ष्यभेदेन लक्षणस्य नानात्वाद्यत्र सत्प्रतिपक्ष एव विशिष्टपक्षग्रहविरोध्युन्नायकस्तत्रोन्नेयदले नादेयमेव पक्षग्रहाविरोधत्वविशेषणमित्युक्तावपि न निस्तार इति ध्येयम्।

यत्तु महानसीयवह्न्यभाववान् ह्रदो वह्न्यभावव्याप्याभाववान् इत्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मकसत्प्रतिपक्षसंग्रहायोक्तप्र-

कारानुसरणम् । तत्र महानसीयवह्न्यभावव्याप्यवद्ध्रदात्मकाश्रयासि-ध्युन्नायकवारणाय पक्षग्रहाविरोधित्वनिवेशस्यावश्यकत्वादिति ।

तत्तुच्छम् । प्रतिवध्यताया पक्षग्रहत्वव्यापकत्वनिवेशेनैवोक्तातिव्याप्तिवारणसंभवे तत्रोक्तप्रकारानुसरणवैफल्यापत्तेः । अत्र एकत्र द्वयमिति रीत्या वह्न्यभाववह्न्यभावव्याप्यव्याप्यवान् ह्रद इति ज्ञानमादाय ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदे चातिव्याप्तिवारणाय प्रतिबन्धकतायाः जनकतायाञ्चानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं निवेशितं भट्टाचार्येण । तच्च यथाश्रुताभिप्रायेण ।

वस्तुतस्तु अव्यापकीभूतविषयिताशून्यत्वनिवेशस्यावश्यकतया तादृशज्ञानमादाय दोषो न संभवत्येव, किन्तु वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यादौ एकत्र द्वयमिति रीत्या वह्न्यभाववह्न्यभावव्याप्यवान् तादृशह्रद इति ज्ञानमादाय वह्न्यभाववत्तादृशरूपबाधेऽतिव्याप्तिवारणाय जनकतायामनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं ग्राह्यम् तादृशज्ञाने ह्रदवृत्तिवह्न्यभावव्याप्यव्याप्यवस्तुनो ह्रदे भानादव्यापकीभूतवह्न्यभावव्याप्यव्याप्यवद्ध्रदादिविषयिताशून्यत्वसत्त्वात् । एवं वह्न्यभावव्याप्यकालीनह्रदो महानसीयवह्निमानित्यादौ वह्न्यभावव्याप्यमहानसीयवह्न्यभाववान् तादृशह्रद इति ज्ञानविषये महानसीयवह्न्यभाववत्तादृशह्रदेऽतिव्याप्तिवारणायाप्यनतिरिक्तवृत्तित्वरूपं जनकतावच्छेदकत्वं वाच्यम् उक्तज्ञानविषयीभूतवह्निसामान्याभावव्याप्यमहानसीयवह्न्यभावरूपन्तु विशिष्टमप्रसिद्धम् । एवं यादृशयादृशविशिष्टं प्रसिद्धं तद्विषयित्वं तु दोषत्वेनाभिमतस्य विषयिताया व्यापकमेव इत्यव्यापकीभूतविषयिताशून्यस्यापि तत्र सत्त्वात्पर्वतो वह्न्यभाववानित्यादौ एकत्र द्वयमिति रीत्या वह्निव्याप्यव्याप्यवान्पर्वत इति ज्ञानमादाय वह्निव्याप्यव्याप्यवत्पर्वतरूपसत्प्रतिपक्षोन्नायकेऽतिव्याप्तिवारणाय प्रतिबन्धकतावच्छेकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम् । तादृशज्ञाने वह्नित्वेन पर्वतवृत्तिवह्नेर्भानात् अव्यापकीभूतविषयिताशून्यत्वात् इति । यद्यपि यद्रूपावच्छिन्नविषयितासामान्ये प्रतिबन्धकत्वजनकत्वयोः स्वरूपसम्बन्धरूपावच्छेदकत्वविवक्षयैवोक्तदोषवारणसंभवेऽनतिरिक्तवृत्तित्वनिवेशनमफलम् । तथापि ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवांश्च ह्रद इति ज्ञानीयज्ञान-

वैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतया वह्न्यभावव्याप्यव्याप्यवद्बुद्धिविषयितासामान्ये सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः हेतुतावच्छेदकघटितसत्प्रतिपक्षाव्याप्तिभिया प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशायोगात्। हेतुतावच्छेदकघटितसत्प्रतिपक्षश्च सङ्गृह्यते चेत्यादिना दीधितिकारेण दर्शितः। एवं प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेऽसाधारण्यवारकदीधितिकारोक्तसाध्यव्यापकीभूताभावप्रतियोगित्वानवगाहित्वविशेषणञ्च व्यर्थमिति प्रतिबन्धकतातवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपमावश्यकम्। एवं जनकतावच्छेदकमपि तादृशमेव, अन्यथा स्वमते प्रतिबन्धकत्वजनकत्वोभयस्मिन् यादृशविशिष्टविषयिताव्यापकतायाः सकृन्निवेशापेक्षया भवन्मते प्रतिबन्धकत्वे यादृशविशिष्टविषयिताव्यापकत्वस्य जनकतावच्छेदकत्वे यादृशविशिष्टविषयितात्वव्यापकत्वस्य निवेशे व्यापकताया द्विधा निवेशे महागौरवादिति। एतेन पक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयिताकत्वरूपविरोधित्वान्तार्थस्योन्नायकविशेषणत्वे विषयिताभागस्य द्विधा निवेशेन गौरवादुन्नायकताघटकविषयितायामेव प्रतिबन्धकतावच्छेदकत्वं निवेशितम् भट्टाचार्येण। तन्न सङ्गच्छते। उक्तरीत्याऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशस्यावश्यकत्वे तदर्थश्च सामान्यलक्षणोक्तदोषात्प्रतिबन्धकत्वनिष्ठतादृशविषयिताव्यापकत्वं जनकतानिष्ठतादृशरूपावच्छिन्नविषयित्वव्यापकत्वञ्च पर्यवस्यति, तथा चात्र विषयिताभागस्य द्विधा निवेशादिति ध्येयम्॥

एवमुन्नेयदलप्रविष्टं प्रतिबन्धकतावच्छेदकत्वमपि अनतिरिक्तवृत्तित्वरूपमेव न तु स्वरूपसम्बन्धविशेषः, तथासति पर्वतविशेष्यकवह्निव्याप्याभावप्रकारकज्ञानप्रतिबन्धकतावच्छेदकीभूतं यद्वह्निमान् वह्निव्याप्याभावाभाववान् वह्निमांश्च पर्वत इति ज्ञानीयवह्निमत्पर्वतविषयित्वं तदवच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयिताकवह्निव्याप्यवत्पर्वतात्मके पर्वतो वह्निव्याप्याभाववन्ह्यभावव्याप्योभयवानित्यादिस्थलीयबाधेऽतिव्याप्तिः। ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे च गगनाभाववदभावबत्कालीनगगनसाध्यकसत्प्रतिपक्षाव्याप्तिरिति ध्येयम्।

असाधारणविरुद्धयोरन्यतरस्य प्रतिपक्षविधया दोषत्वपक्षे प्रकृत-

साधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाहिपरामर्शो ग्रा-
ह्य इति शिरोमणिः । तथाच प्रकृतपक्षतावच्छेदकावच्छिन्न-
पक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नाभावव्यापकाभावप्रतियोगित्व-
विशिष्टप्रकृतसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यानवगाहिपरामर्शनि-
ष्ठानुमितिजनकतावच्छेदकविषयिताकत्वमुन्नायकत्वं विवक्षणीयमित्य-
र्थः । रूपान्तरेण प्रकृतहेतोर्यत्र व्यतिरेकिहेतुता तत्स्थलीयप्रतिपक्ष-
स्य सङ्ग्रहाय प्रकृतसाधनतावच्छेदकनिवेशः । रूपान्तरावच्छिन्न-
साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतहेतुमत्पक्षकालीनत्व-
स्य यत्र प्रकृतसाध्यतावच्छेदकघटकता तत्स्थलीयसाध्यतावच्छे-
दकविशिष्टसाध्याभावव्याप्यवत्पक्षात्मकप्रतिपक्षसंग्रहाय प्रकृत-
साध्यतावच्छेदकनिवेशः । प्रकृतसाध्यव्यापकाभावप्रतियोगित्ववि-
शिष्टसाधनत्त्वेन , रूपान्तरावच्छिन्नपक्षस्य प्रकृतपक्षतावच्छेदके
यत्र प्रवेशः तत्रत्यप्रतिपक्षस्य तादृशपक्षतावच्छेदकविशिष्टे सा-
ध्याभावव्याप्यरूपस्य सङ्ग्रहाय प्रकृतपक्षतावच्छेदकनिवेश इति
भट्टाचार्येणोक्तम् ।

अथात्र पक्षतावच्छेदकादौ प्रकृतत्वनिवेशो तद्ध्रदपक्षकस्थले
तद्वह्निसाध्यकस्थले तज्जलहेतुकस्थले च वह्निव्यापकीभूताभाव-
प्रतियोगिजलवद्ध्रदात्मकासाधारण्येऽव्याप्तिरिति चेन्न । प्रकृतप
क्षतावच्छेदकाद्यवगाहित्वपदेन प्रकृतपक्षतावच्छेदकातिरिक्तधर्मा
नवच्छिन्नविषयितानिवेशात् । न चैवं वह्निव्यापकीभूताभावप्रति
योगिजलवद्ध्रदकालीनह्रदो वह्निमान् जलादित्यादौ वह्न्यभावव्या
प्यवत्तादृशह्रदरूपसत्प्रतिपक्षेऽव्याप्तिः-ह्रदत्वसामानाधिकरण्येन त
दृशजलावगाहनेनाहार्यत्वाभावादिति वाच्यम् । सामानाधिक
रण्येन साध्यकस्थले पक्षतावच्छेदकाद्यतिरिक्तधर्मानवच्छिन्नवि
ष्यतानिरूपिततादृशविशेष्यतावच्छेदकव्यापकप्रतियोगिकहेतुताव-
च्छेदकसंसर्गावच्छिन्नावगाहित्वाभावनिवेशेनाव्याप्त्यनवकाशात् ।
चोक्तस्थले तादृशह्रदत्वावच्छेदेन साध्यतायां सत्प्रतिपक्षाव्या
तादवस्थ्यम् , अवच्छेदकावच्छेदेन साध्यतास्थलेऽप्युक्तरीत्या
वच्छेदकावच्छेदेनावगाहित्वाभावनिवेशे च सामानाधिकरण्येना
धारण्येऽतिव्याप्तिरिति वाच्यम् । अवच्छेदकावच्छेदेन साध्यकस
उक्तरीत्या अवगाहित्वाभावस्यैव सामानाधिकरण्येनातिव्याप्ति

णार्थं पुनः पक्षतावच्छेदकावच्छिन्ने साध्यव्यापकाभावप्रतियोगि-हेतुमत्तागाहित्वाभावस्यापि स्वातंत्र्येण निवेशनीयत्वात्। तत्प्रतियोगिकोटौ च पक्षविषयताया एव प्रकृतपक्षतावच्छेदकावच्छिन्नत्वेन निवेशः। साध्यादिविषयतायाश्च पूर्ववत् साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वेनैव निवेशः। तेन ह्रदत्वावच्छेदेन महानसीयवह्न्यादेः साध्यतायां ह्रदत्वसामानाधिकरण्येन वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदादौ नातिव्याप्तिरिति ध्येयम् ॥

अथ तथापि पक्षतावच्छेदके प्रकृतत्वनिवेशे सर्वं वह्निमज्जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदात्मकासाधारण्येऽतिव्याप्तिः—सर्वत्वावच्छेदेन वह्निमत्ताबुद्धिं प्रति किञ्चिद्धर्मावच्छिन्नविशेष्यकवह्न्यभाववत्ताबुद्धेरिव वह्निव्यापकीभूताभावप्रतियोगिजलवत्ताज्ञानस्यापि प्रतिबन्धकत्वादिति चेन्न। साध्यसाधनादिभेदेन लक्षणस्य भेदात्। सर्वपक्षकस्थले पक्षतावच्छेदकमनिवेश्य किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपिततादृशप्रतियोगित्वविशिष्टविषयताशून्यत्वनिवेशेनैव दोषाभावादिति ध्येयम् ॥

अथासाधारण्यस्यातिव्याप्तेरवश्यनिवेशनीयविशिष्टद्वयाघटितत्वनिवेशेनैव तद्वारणसंभवात् प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाहित्वनिवेशनं व्यर्थम् इति। न च विशिष्टद्वयाघटितत्वनिवेशस्य कथमावश्यकतेति वाच्यम्। वह्न्यभाववद्वह्न्यभावव्याप्यव्याप्यवत्कालीनवह्न्यभावव्याप्यव्याप्यवद्ध्रदादौ अतिव्याप्तिवारणार्थमेव तस्यावश्यकत्वात्। नचैवं सत्प्रतिपक्षेऽव्याप्तिः तस्य तादृशविशिष्टद्वयघटितत्वादिति वाच्यम्। विशिष्टद्वयाघटितत्वप्रविष्टविशिष्टद्वयविषयितायां सत्प्रतिपक्षघटकविशिष्टद्वयविषयिताभेदस्यागत्या निवेशनीयत्वादिति चेत्।

अत्राहुः—यादृशविशिष्टविषयकनिश्चयाविशिष्टयादृशविषयकनिश्चयत्वं तादृशजनकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटितत्वमेव तादृशविशिष्टद्वयाघटितत्वपदेनात्र विवक्षणीयम्, अन्यथा जनकतानतिरिक्तवृत्तित्वमनिवेश्य केवलप्रतिबन्धकतानतिरिक्तवृत्तित्वघटितविशिष्टद्वयाघटितत्वनिवेशे जलवान् वह्न्यभाववान् जलवांश्च ह्रद इत्यादिज्ञानस्य नानाविधविषयतानां प्रतियोगिकोटौ निवेशनेन गौरवम् अन्वयव्यतिरेकव्याप्तिघटितसत्प्रतिपक्षसाधारणासाधारणव्यावृत्तस्य सत्प्रतिपक्षत्व-

स्य दुर्वचतया सत्प्रतिपक्षविषयिताबहिर्भूतत्वनिवेशायोगश्च, तस्य सुवचत्वे तु तस्यैव लक्षणत्वसंभवे एतत्प्रयासवैफल्यात् । स्वमते तु सत्प्रतिपक्षात्मकविशिष्टमादाय दोषस्तु सामान्यनिरुक्तिपत्रिकोक्तदिशा वारणीय इति ध्येयम् ॥

अथात्र लक्षणे ह्रदो वह्निमानित्यादौ वह्न्यभाववह्न्यभावव्याप्यव्याप्यउभयवद्ध्रदेऽतिव्याप्तिः तद्विषयताया वह्निमद्ध्रदविषयकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात्, तादृशग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतवह्न्यभावव्याप्यवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वाच्च । न च सत्यन्तघटकप्रतिबन्धकतायां तादृशजनकतावच्छेदकविषयितात्वव्यापकावच्छेदकत्वनिवेशान्नोक्तातिव्याप्तिः तादृशजनकतावच्छेदकीभूतवह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयितायास्तादृशप्रतिबन्धकतावच्छेदकत्वादिति वाच्यम् । प्रतिहेतुव्यापकत्वघटितसत्प्रतिपक्षेऽव्याप्तेर्जनकतावच्छेकीभूतसामानाधिकरण्यविषयितायाः प्रतिबन्धकतानवच्छेदकत्वात् । सत्यन्तदलघटकप्रतिबन्धकतायां तादृशजनकतावच्छेदकविषयितावच्छेदकत्वनिवेशे च यत्र सत्प्रतिपक्षघटको बाधस्तत्र साध्याभावव्याप्यसाध्याभावोभयवत्पक्षेऽतिव्याप्तिः । न च बाधघटितस्य सत्प्रतिपक्षत्वं न स्वीक्रियते तद्घटकबाधेनैव तत्कार्यनिर्वाहात्, ह्रदः समानाधिकरणजलाभाववानित्यादौ जलव्यापकसमानाधिकरणजलसमानाधिकरणजलवद्ध्रदात्मकबाधघटितसत्प्रतिपक्षसम्भवेऽपि तादृशसत्प्रतिपक्षोन्नायकबाधोभयात्मके नातिव्याप्तिः तादृशसत्प्रतिपक्षविषयिताया बाधविषयितानियतत्वेऽपि तादृशसत्प्रतिपक्षोन्नायकविषयिताया बाधविषयिताशून्यवृत्तित्वेन बाधविषयितानियतत्वाभावात्, सामान्याभावसाध्यकस्थले सामान्यघटितविशेषधर्मावच्छिन्नव्याप्यवत्पक्षस्यापि सत्प्रतिपक्षत्वेन लक्ष्यतया जलव्यापकसमानाधिकरणजलव्याप्यवत्पक्षस्यापि सत्प्रतिपक्षतया विशिष्टान्तराघटितत्वविरहाच्चेति वाच्यम् । जलं अवृत्ति इत्यत्र जलव्यापकवृत्तित्वसमानाधिकरणजलव्याप्यवृत्तित्वोभयवज्जले ह्रदो वह्निमानित्यादौ वह्न्यभावव्यापकवह्न्यभावसमानाधिकरणवह्न्यभाववद्ध्रदादौ चातिव्याप्तेस्तथापि दुर्वारत्वात् । एतेन सत्यन्तघटकप्रतिब-

न्धकतायां तादृशजनकतावच्छेदकीभूतमुख्यविशेष्यतात्वव्यापका-वच्छेदकताकत्वनिवेशे सत्प्रतिपक्षोन्नायकबाधोभयात्मके नातिव्याप्तिरित्यपि प्रत्युक्तम्-ह्रदो वह्निमानित्यादावुक्तातिव्याप्तेरपरीहारात्। अत एव स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितावच्छेदकरूपावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतविषयितानिरूपकतावच्छेदकधर्मावच्छिन्ना-घटितत्वनिवेशात् वह्न्यभावव्याप्यव्याप्यवह्न्यभावोभयवद्ध्रदादौ नातिव्याप्तिः स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकतादृशजनकतावच्छेदकीभूतवह्न्यभावव्याप्यव्याप्यवद्ध्रदत्वावच्छिन्नघटितत्वादित्युक्तावपि न निस्तारः। ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदादावुक्तातिव्याप्तेस्तादवस्थ्यात्। ह्रदो वह्न्यभावव्याप्यव्याप्यवद्ध्रदकालीनवह्निमानित्यादौ तादृशवह्न्यभावव्याप्यवद्ध्रदात्मकसत्प्रतिपक्षे निरुक्तविशिष्टान्तराघटितत्वविशेषणेऽव्याप्त्यापत्तेश्च। न चोन्नेयविषयितायां प्रागुक्तयुक्त्या प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वस्यापि निवेशितत्वेन उक्तातिव्याप्तीनां प्रसक्तिरेव नेति वाच्यम्। तावतापि वह्निव्याप्याभाववद्वह्न्यभाववत्कालीनवह्निव्याप्यवान् इत्यादिप्रागुक्तस्थल एव वह्न्यभावव्याप्याभावोभयवद्ध्रदे वह्न्यभावव्याप्यव्याप्याभाववद्ध्रदे चातिव्याप्तेर्दुर्वारत्वादिति चेत्।

अत्र ब्रूमः—मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिवारणाय सत्यन्तदलघटकप्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वमवश्यं निवेशनीयम्। तदर्थञ्च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वे सति स्वघटकतावच्छेदकं यद्रूपं स्वावच्छिन्नविषयकत्वव्यापकत्वसम्बन्धेन तद्रूपविशिष्टान्यत्वं, तथा च साध्याभावव्याप्यव्याप्यसाध्याभावोभयवत्पक्षादौ साध्याभावव्याप्यव्याप्यसाध्याभाववत्पक्षादौ च नातिव्याप्तिसंभवः। तत्तद्विशिष्टविषयकज्ञाननिष्ठप्रतिबन्धकतायां स्वावच्छिन्नाविषयकज्ञाननिष्ठप्रतिबन्धकतायां स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्वघटकतावच्छेदकं यद्बाधत्वं तद्विशिष्टान्यत्वाभावात्। बाधघटितसत्प्रतिपक्षे च बाधप्रतिबन्धकताभिन्नव्याप्यवत्तानिश्चयस्वावच्छिन्नप्रतिबन्धकतान्तरमस्तीति तामादायैव च लक्षणसमन्वयः। स्वघटकतावच्छेदकत्वेन विशेषणात् प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षजातीयप्रतिबन्धकतायाः प्रतिहेतुव्यापकसाध्याभावसमानकाली-

नत्वादिघटितविशिष्टविषयकत्वव्यापकत्वेऽपि तत्र नाव्याप्तिरिध्येयम् ॥

केचित्तु विशिष्टान्तराघटितत्वविशेषणेनैव उक्तस्थले नातिव्याप्तिः, तथाहि–विशिष्टान्तराघटितत्वं विशिष्टान्तरविषयितात्वव्यापकपानवच्छिन्नस्वावच्छिन्नविषयितानिष्ठप्रयोजकताकप्रयोज्यतावत्प्रकृपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वम् । विशिष्टान्तरं च स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वम् तथाच वह्न्यभावव्याप्यव्याप्यवह्न्यभावोभयवद्ध्रदादौ वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ध्रदादौ च नातिव्याप्तिः–तादृशह्रदत्वावच्छिन्नविषयितानिष्ठायाः साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकतायास्तादृशविशिष्टान्तरवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितात्वरूपावच्छिन्नत्वात् । न च वृत्तित्वं निरूपितत्वाभाववदित्यादौ अभाववद्वृत्तित्वघटितसत्प्रतिपक्षे जलमधिकरणत्वाभाववदित्यादौ व्यापकसामानाधिकरण्यरूपव्याप्तिघटितसत्प्रतिपक्षे चाव्याप्तिस्तयो बाधघटितत्वेऽपि तद्विषयितानिष्ठप्रयोजकतायास्तादृशबाधविषयितात्वव्यापकरूपानवच्छिन्नत्वात् । न चैवं प्रतिहेतुव्यापकताघटितसत्प्रतिपक्षे विषयितानिष्ठप्रयोजकतायास्तादृशविशिष्टान्तरप्रतिहेतुमत्पक्षविषयितात्वव्यापकरूपावच्छिन्नत्वादतिव्याप्तिरिति वाच्यम् तादृशविशिष्टान्तरविषयकप्रतिहेतुव्यापकसाध्याभावसमानाधिकरण प्रतिहेतुविषयताविशिष्टान्यत्वसाध्याभावधर्मिकप्रतिहेतुव्यापकतानिश्चयघटकधर्मावच्छिन्नप्रयोजकत्व उभयाभाववत्त्वविशेषणेनैव तद्वाणात् । विषयितावैशिष्ट्यं च स्वनिरूपितत्वस्वतादात्म्यान्यतरसम्बन्धेन । मेयत्वविशिष्टप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणहेतुमत्पक्षेऽतिव्याप्तिवारणाय वैशिष्ट्यघटकसम्बन्धे निरूपितत्वान्तर्भाव मेयत्वपक्षवृत्तिप्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतावितिव्याप्तिवारणाय तादात्म्यनिवेश इत्याहुः ।

तन्मन्दम् । उक्तरीत्या विशिष्टान्तराघटितत्वनिवेशे ह्रदः समाधिकरणजलाभाववानित्यादौ जलव्यापकसमाधिकरणजलसमानाधिकरणजलवद्ध्रदात्मकसत्प्रतिपक्षेऽव्याप्तेस्तादृशसत्प्रतिपक्षविषयिनिष्ठप्रयोजकतायाः समानाधिकरणजलवद्ध्रदात्मकतादृशविशि

न्तरविषयितात्वव्यापकरूपावच्छिन्नत्वात्। न च यद्रूपेण प्रतिबन्धकतावच्छेदकता तद्रूपेणैव प्रयोजकतयैव सत्प्रतिपक्षविषयितायाः प्रतिबन्धकतावच्छेदकत्वं प्रतिहेतुव्यापकसाध्याभावनिश्चयकालीनज्ञानीयप्रतिहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वेनैव तस्य च निरुक्तबाधविषयतात्वव्यापकत्वविरहेणाव्याप्तिविरह इति वाच्यम्। समानाकारकज्ञानीयविषयताया ऐक्येन प्रतिहेतुव्यापकतानिश्चयकालीननिश्चयविबाधविषयत्वयोरभेदात्, प्रतिहेतुव्यापकतानिश्चयकालीनप्रतिहेतुमत्पक्षविषयतात्वे निरुक्तबाधविषयतात्वव्यापकत्वस्याक्षतत्वात्, अन्यथा सत्प्रतिपक्षघटकहेतुमत्पक्षविषयताप्रकारकरूपावच्छिन्नप्रयोजकत्वाप्रसिद्ध्यैवाव्याप्तिवारणसम्भवे सत्प्रतिपक्षघटकहेतुमत्पक्षस्य विशिष्टान्तरत्ववारकस्य विशिष्टान्तरत्वशरीरे अनुमितिप्रतिबन्धकतावच्छेकत्वानिवेशस्य वैयर्थ्यापत्तेः। अत एव विशिष्टान्तराघटितत्वं स्वविषयताप्रयोज्यविशिष्टान्तरविषयत्वाप्रयोज्यप्रकृतपक्षसाध्यवैशिष्ट्यम् विशिष्टान्तरं च पूर्वोक्तमेव। विशिष्टान्तरविषयतानिष्ठप्रयोजकत्वं प्रागुक्तान्यतरसम्बन्धेन प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणहेतुविषयताविशिष्टान्यविषयतावृत्तित्वप्रतिहेतुव्यापकतानिश्चयघटितधर्मावच्छिन्नत्वोभयाभाववत्त्वेन विशेषणीयम्। तेन प्रतिहेतुव्यापकसाध्याभावकालीनत्वादिघटितविशिष्टान्तरमादाय न पूर्वोक्ताव्याप्तिः। एवं चोक्तविशिष्टान्तराघटितत्वविरहादेव बाधसत्प्रतिपक्षोभयकोभयात्मकादौ न प्रागुक्तातिव्याप्तिरिति प्रलपितमप्यपास्तम्। बाधघटितसत्प्रतिपक्षेऽव्याप्तेर्वज्रलेपत्वादित्यलं वाग्जालेनेति ॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सत्प्रतिपक्षप्रकरणक्रोडपत्रम्

समाप्तोऽयं गादाधरीक्रोडपत्रसङ्ग्रहः ॥

---

# हरिदाससंस्कृतग्रन्थमालासमाख्य-
# काशीसंस्कृतसीरीज् पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परं तु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | | रु. आ. पा. |
|---|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः | ( पाकशास्त्रम् १ ) | १—८—० |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृताऽन्वयार्थबोधिनीटीकासहितम् । | ( वेदान्तं १ ) | १०—०—० |
| ३ वैशेषिकदर्शनम् । सटीक-प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् । | ( वैशेषिकं १ ) | ३—८—० |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधराद्याचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् | ( वैदिकं १ ) | ०—६—० |
| ५ लघुशब्देन्दुशेखरः चन्द्रकलाटीकासहितः तत्पुरुषादिसमासपर्यन्तः । | ( व्याकरणं १ ) | १०—०—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपण" दिनकरीय महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रीव्याख्यासहिता । | ( न्यायं १ ) | ६—०—० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । | ( वेदान्तं २ ) | ०—८—० |
| ८ अलङ्कारप्रदीपः पण्डितवर विश्वेश्वरपाण्डेयनिर्मितः । | ( काव्यं १ ) | ०—८—० |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । | ( कामशास्त्रं १ ) | ०—१२—० |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । | [ज्यो० १] | २—०—० |

